श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मे ३५७

नारायणाख्याने १६

# हयशिर उपाख्यानम्

श्रीलक्ष्मीहयग्रीव दिव्यपादुकासेवक श्रीमदभिनवरङ्गनाथ

ब्रह्मतन्त्रपरकालमहादेशिकैर्विरचितया

हयशिरोरत्नभूषण व्याख्यया

स्वोपज्ञया

हयशिरोरत्नभूषणदीधित्याख्य

टिप्पण्या च समलङ्कृतम्



श्रीमन्महीशूरसंस्थानाधीश्वर श्रीमज्जयचामराजेन्द्रओडेयर् बहदूर्

जि.सि.एस्.ऐ. इत्येतेषां शासनेन

महीशूरराजधानी राजकीयमुद्रालये सम्मुद्र्य प्रकाशितम्

१९५४

Price Rs. 5-0-0



दिवंगत श्रीमन्महाराजाधिराज
श्री कृष्णराज ओडेयर् बहद्दूर्, जि.सि.एस्.ऐ., जि.वि.इ.

श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मे ३५७
नारायणाख्याने १६

# हयशिर उपाख्यानम्

श्रीलक्ष्मीहयग्रीव दिव्यपादुकासेवक श्रीमदभिनवरङ्गनाथ
ब्रह्मतन्त्रपरकालमहादेशिकैर्विरचितया

## हयशिरोरत्नभूषण व्याख्यया

स्वोपज्ञया
हयशिरोरत्नभूषणदीधित्याख्य
टिप्पण्या च समलङ्कृतम्



श्रीमन्महीशूरसंस्थानाधीश्वर श्रीमन्नाल्वडिकृष्णराजेन्द्रओडेयर् बहदूर्
जि.सि.एस्.ऐ. इत्येतेषां शासनेन
महीशूरराजधानी राजकीयमुद्रालये सम्मुद्र्य प्रकाशितम्
१९५०



मैसूर श्रीमन्महाराजाधिराज
श्री जयचामराज ओडेयर् बहद्दूर्, जि.सि.एस्.ऐ., जि.सि.बि.

॥ श्रियै नमः ॥

॥ श्रीलक्ष्मीहयवदनपरब्रह्मणे नमः ॥

# श्रीहयशिरउपाख्यानव्याख्यानभूमिका

नित्यां जडां परार्थां प्रकृतिमधिष्ठाय सृजति यो विश्वम् ।
स श्रीशस्तुरगमुखः स्फुरतुतरां मानसे कृपासिन्धुः ॥ १ ॥

सुधारसमलिम्लुचानघविचित्रमोदावह-
प्रबन्धरचनप्रसृत्वरयशस्सिताशामुखः ।
पुराणहयताण्डवौपयिकरङ्गजिह्वाञ्चलः
स कृष्णकलिजिद्यतिप्रवरदेशिको भासताम् ॥ २ ॥

हयमुखपदत्रसेवकनव्यश्रीरङ्गनाथकलिमथनः ।
ज्ञानविरक्तिदयादिमगुणखनिरिन्धां गुरुर्यतीशानः ॥ ३ ॥

सुविदितमेवेदं सारासारविवेचकानां सचेतसां सुधियाम् । यद्—

भूतानां प्राणिनः श्रेष्ठाः प्राणिनां बुद्धिजीविनः ।
बुद्धिमत्सु नराः श्रेष्ठा नरेषु ब्राह्मणाः स्मृताः ॥
ब्राह्मणेषु च विद्वांसो विद्वत्सु कृतबुद्धयः ।
कृतबुद्धिषु कर्तारः कर्तृषु ब्रह्मवेदिनः ॥' इति—

भगवन्मनुवचनप्रामाण्यानुरोधादस्मिन् जगति ब्रह्मविदेक एव सर्वेभ्योऽप्यभ्यधिकः—'नहि ज्ञानेन सदृशं पवित्रमिह विद्यते'—इति गानादखिलेषु ज्ञानेषु ब्राह्मं ज्ञानमेकमेव पवित्रतमं चेति ।

तादृशं चज्ञानं श्रीभगवल्लक्ष्मीहयमुखकृपायत्तम् । तस्य च भगवत आविर्भावचरितगुणादिकं सम्यगभिवर्णितं भगवता ब्रह्मविदग्रेसरेण मुनिप्रकाण्डेन

श्रीकृष्णद्वैपायनेन महाभारते द्वादशे शान्तिपर्वणि मोक्षधर्मे नारायणीये (णाख्याने) सप्तपञ्चाशदुत्तरत्रिशततमेऽ (३५७) ध्याये चतुर्नवतिपद्यमिते श्रीहयशिर उपाख्याने ।

शान्तिपर्व चाष्टादशसु पर्वस्वेकतमम् । तेषां च पर्वणां नामान्येवं बोध्यानि—

| | | | |
|---|---|---|---|
| १ | आदिः | १० | सौप्तिकम् |
| २ | सभा | ११ | स्त्री |
| ३ | वनम् | १२ | शान्तिः |
| ४ | विराटः | १३ | अनुशासनम् |
| ५ | उद्योगः | १४ | आश्वमेधिकम् |
| ६ | भीष्मः | १५ | आश्रमवासिकम् |
| ७ | द्रोणः | १६ | मौसलम् |
| ८ | कर्णः | १७ | महाप्रस्थानिकम् |
| ९ | शल्यः | १८ | स्वर्गारोहणम् ॥ इति ॥ |

अथ च पर्वरुचिरतरसहकारतरुसमुदयविभास्वरे धार्मिकवरपूर्वपुरुषचरित-भगवद्वासुदेवशुभतमगुणगणनिश्श्रेयससाधननिगमोपबृंहणधर्मनृपनयादिपचेलिम-स्वादुतमफलमेदुरे मधुरतरवचननिचयमकरन्दरसास्वादलोलबुधव्रजमधुव्रतसं-सेविते भारतमहारामे पारिजातायमानं समिन्धे किमपि श्रीहयमुखशुभंयुगुण-निकरकरम्भितं श्रीहयशिरउपाख्यानम् ।

अत्रेदमवधेयम् । पञ्चमाम्नाये महाभारतेऽत्रोपनिषद्रूपा भगवद्गीतेव मोक्षधर्मोऽपि प्रशस्तः । तत्र विंशत्यध्यायोन्मितं नारायणाख्यानं ज्ञान-काण्डत्वेन बहुभिराचार्यैः परिगृहीतमभ्यर्हितं च । तत्र चैवमभ्यधायि विस्पष्टम् । अनन्यप्रयोजनभगवदाराधनरूप एकान्तिधर्म एव श्रेयान् । स धर्मो भगवद्गीतायां सङ्गृहीतः । पञ्चरात्रे तु विस्तृत इति । तत्प्रसङ्ग-

नैवं तदाख्याने सप्तदशाध्याये क्रमेण प्रश्नप्रतिवचनोक्ती दृश्येते । अत्र जगति बहवो विप्राः किमर्थमिमं धर्मं नानुतिष्ठन्ति । सात्त्विकराजसतामसभेदैः पुमांसस्त्रिविधाः । तेषु यस्मिन् पुंसि जन्मकाले प्राक्तनसुकृतपरिपाकेण सत्वाधिष्ठातुर्भगवतो नारायणस्य निपतति कटाक्षः । स एव सात्त्विकः प्रतिबुद्धो मोक्षार्थचिन्तकश्चेति ।

किञ्चैवं प्रत्यपादि भगवद्गीतायाम् । पुंसां सत्वोद्रेकेण जायते ज्ञानम् । तदावरकौ हि रजस्तमोगुणौ । तन्निरसनपूर्विका यदा सत्वाभिवृद्धिस्तदैव ज्ञानपरिपूर्तिरिति ।

ईदृशी ज्ञानसंपूर्तिः कस्य वा पुंसः स्यादिति सत्यां च जिज्ञासायां तदपनोदनाय तदाख्यानषोडशाध्यायरूपं प्रशस्ततरं हयशिरउपाख्यानं प्रवृत्तम् । अयमंशः किञ्चिदग्रेऽपि प्रकारभेदेन प्रस्तोष्यते । वक्ष्यमाणकथाया अवतरणिकेयमेवं विज्ञेया ।

अत्रैवमुपाख्याने कथा प्रस्तूयते । पुरा खलु श्रीवैशम्पायनजनमेजययोर्भगवद्व्यासोपज्ञं संवृत्तो भगवद्गुणाभिवर्णनात्मकः संवादः सौतिमुनिनानूदितः शौनकमुनये तथाहि—निरुपाधिककृपाजलधिर्भगवान्वासुदेवः प्रलयकाले तमोवस्थापन्नायां मूलप्रकृतौ विलीनानां सिक्थकलग्नहेमकणसदृक्षाणां प्रक्षीणज्ञानानां चेतनानां सुखवैधुर्यं पर्यालोच्य तेषां ज्ञानसुख संपिपादयिषया स्वयं सङ्कर्षणप्रद्युम्नानिरुद्धव्यूहरूपेणावततार । सलिलेशयो योगनिद्रामधिष्ठितः परमकारुणिकः श्रियः पतिर्भगवान्नारायणोऽनिरुद्धः भुवनसृष्टिं विचिन्तयंस्तां विधात्रा निर्मिमापयिषुः सहस्रपत्रे स्वनाभिपद्मे ससर्ज हिरण्यगर्भम् । तदनु स परमेष्ठी श्रीनारायणेनानुज्ञातोऽसृजत्सर्वान्भूतगणान् । चतुर्मुखसर्गात्प्रागेव निजनाभिकमलदले विनिहितौ भगवता द्वौ जलबिन्दू । हिरण्यगर्भजभूतसृष्ट्यनन्तरं नारायणसङ्कल्पेन तयोरेको बिन्दुर्मध्वाभो रुचिरप्रभो जज्ञे । स एव तामसो मधुनामा दैतेयो जातः । कठिन-

स्त्वपरो बिन्दू राजसः कैटभोऽभवत्। ततो महाबलौ तामसराजसौ पद्मनालानुगौ गदाहस्तौ तौ चतुराननेन योद्धुमभ्यधावताम्। तौ च ददृशतुररविन्दस्थं चारुविग्रहांश्चतुरो वेदान् सृजन्तममितप्रभं ब्रह्माणम्। अनन्तरमुसुरोत्तमौ तदन्तिके विग्रहवतश्चतुरो वेदानभिवीक्ष्य पश्यति विधातरि तान् सहसा प्रगृह्य रसातलं विविशतुः। ततो हृतेष्वाम्नायेषु पद्मयोनिर्भृशं दुःखितो बहुधा विलपितुमारेभे—

'वेदा मे परमं चक्षुर्वेदा मे परमं बलम्।
वेदा मे परमं धाम वेदा मे ब्रह्मचोत्तरम्॥

मम वेदा हृताः सर्वे दानवाभ्यां बलादितः।
अन्धकारा हि मे लोका जाता वेदैर्विना कृताः॥

अहो बत महद्दुःखं वेदनाशनजं मम।
प्राप्तं दुनोति हृदयं तीव्रं शोकपरायणम्।
को हि शोकार्णवे मग्नं मामितोऽद्य समुद्धरेत्" इति॥

..थमतिमात्रं शोचन् पद्मजः प्राञ्जलिः सर्वभूतान्तरात्मानं पुण्डरीकाक्षं शरणयन् बहुधा स्तुवन्निदमभाणीत्। भगवंस्तव प्रसादादभूत्सप्तधा मे जन्म मानसं चाक्षुषं वाचिकं श्रवणजं (नासत्यम्) नासिक्यम् अण्डजं पद्मजं चेति। प्रतिसर्गं तवाहं तनुजः त्वमीश्वरः त्वयाहं विनिर्मितः साम्प्रतं वेदाहरणादन्धोऽस्मि। कृपानिधे जागृहि ददस्व मम चक्षूंषि तेऽहं प्रियः प्रियोऽसि मे त्वमिति॥ एवमभिष्टुतः स्वयंभुवा वेदानुद्दिधीर्षुरनिरुद्धो जहौ निद्राम्। अथ प्रबुद्धः स पद्माक्षश्चतुर्मुखकृते चन्द्रप्रभां हयशिरोरूपां वेदमयीं नानामूर्तियुतां द्वितीयां विभवतनूमापेदे। स विधात्रा साक्षादकारि च। तद्वपुषि नानामूर्तीनामेवमवस्थानं वर्णितम्। तस्य मूर्धा सतारका द्यौः केशा दीर्घा रविरश्मिसमप्रभाः कर्णावाकाशपाताले ललाटं भूः भ्रुवौ गङ्गासरस्वत्यौ चक्षुषी सोमसूर्यौ

नासा सन्ध्या संस्कारः ओंकारः जिह्वा विद्युत् दन्ताः पितरः ओष्ठौ गोलोकब्रह्मलोकौ ग्रीवा कालरात्रिरिति। तदनु स विश्वेशस्तिरोदधे रसातलं प्रविवेश च। स तत्र परमं योगमास्थित उद्गीतं स्वरं प्रासृजत्। स च स्वरो जलान्तर्दिगन्तरविसृत्वरो बभूव। तेन च नादेन तावसुरौ पाताले वेदान्निगूढं निक्षिप्य भिया पलायामासतुः। अत्रान्तरे हयशिरोधरो भगवान् हरिराम्नायान् जग्राह ब्रह्मणे प्रादाच्च। ततः स स्वां प्रकृतिमापेदे। अथ मधुकैटभौ सत्वरं पुनराजग्मतुर्नागालयम्। न तत्र तौ वेदान् ददृशतुः। ततस्तौ तस्मात्सवेगमुत्तस्थतुः। अथ तौ समहाहासावपश्यतां सलिलोपरिगे विभास्वरे नागपर्यङ्के शयानं योगनिद्रामधिगतं पुरुषोत्तमम्। अनन्तरं दानवेन्द्रौ को वात्र नागशयने सुखं सुप्तः अयमेवं वेदानपजहार नूनमसौ दण्ड्य इति परुषं भाषमाणौ हरिं बोधयामासतुः। तदनु सर्वेश्वरस्तौ दानवौ रणाभिलाषुकौ विज्ञाय ताभ्यां योद्धुं मनो दधे। अथ तयोः श्रीनारायणस्य च समजनि लोकत्रयभयावहः समरः। ततो मधुकैटभौ रणे जघान भगवान् हयशिराः। एवं भक्तवत्सलः कृपासिन्धुः श्रीवल्लभो नष्टानां वेदानां प्रत्यर्पणेन शोकमपनयन् सर्गोपयिकीमग्र्यामपि मतिं प्रदिशंश्चतुर्वदनं प्रहृष्टमानसं चकार। ततः स देवोऽन्तर्दधे। अथ स शार्ङ्गधरो जगति धर्मबोधादि-प्रवर्तनाय पुनर्हयशिरस्तनुमेवाङ्गीचकारेति।

अत्र चोपाख्याने निरणाय्ययमर्थः तथाहि—तामस राजस मधुकैटभकृतवेदापहरणजजीवसमष्टिभूतहिरण्यगर्भाज्ञानविधूननपुरस्सरहयरूप - धरानिरुद्धकटाक्षजनितसत्वगुणोच्छ्रयाविष्करणेन तद्वितरेषामपि जीवानां जननकालिकमधुसूदनकटाक्षेणैव सात्विकप्रतिबुद्धमोक्षार्थचिन्तकताः संभवेयुर्नान्यथेति। अयमर्थ एतदुपख्यानात्पूर्वं नारायणाख्यानेऽष्टमेऽध्याये—

यदा च सुरकार्यं ते अविषह्यं भविष्यति।

प्रादुर्भावं गमिष्यामि तदात्मज्ञानदेशिकः ॥

इति हिरण्यगर्भं प्रति हयशिरस उक्तौ स्फुटतरः। पद्येऽत्र प्रयुक्तेन सुरपदेन—

'दैवीसम्पद्विमोक्षाये' त्युदीरितदैवसम्पदुपलक्षिता विवक्षिता इत्यनुसन्धेयम्।

अस्य च दुरूहनिगमाञ्चलतत्त्वावबोधकक्लिष्टतमपदजटिलस्य हयशिर-उपाख्यानस्य परस्सहस्रप्रमाणवचनोपबृंहितपरानुल्लिखितवेदार्थभासुरां सुललितरसमेदुरपदजालमनोहरां विस्तृतरुच्यतमावतरणविभास्वरां हयशिरोरत्न-भूषणाभिधां कांमपि व्याख्यां स्वोपज्ञपदविवरणभूतां हयशिरोरत्नभूषण-दीधितिनामिकामनुव्याख्यां चानुजगृहुः श्रीहयास्यपदाम्बुजयुगलपरिभजन-समुत्तम्भितानितरसुलभबहुविधदर्शननिशितमतिविभवा मद्गुरुचरणाः श्रीलक्ष्मी-हयग्रीवदिव्यपादुकासेवक श्रीमदभिनवरङ्गनाथब्रह्मतन्त्रपरकालमहादेशिकाः। अथैवमेषां प्रासङ्गिकं पूर्वतुर्याश्रमयोर्जीवनचरितं तच्चरितजिज्ञासूनामवबोधाय किञ्चिन्निगद्यते।

अमी खलु शैलखवसुभू (१८०७) समे शालिवाहनशके तारण-वत्सरे आषाढमासि दर्शे कुजदिने कर्कटमासनवमदिवसे (२२-७-१८८४) पुनर्वसुभे प्रातश्चतसृषु घटिकासु कर्कटलग्ने कृतावतरणाः श्रीहरितकुल-तिलकविद्वद्वरश्रीराघवार्यशेषाम्बातनूभवाः प्रथिततरनिजपितामहश्रीरङ्गार्य-समर्चितश्रीनृसिंहकृपालब्धोदयाः भाग्यनगरान्तर्ग (हैदराबाद्) तात्मकूरु-नगराविवाहितशैशवाः तत्त्वमार्तण्डादिषण्णवतिग्रन्थनिर्मातृप्रख्यातवैभव—प्रसिद्धविद्वद्वरेण्यसुरपुरराजगुरुश्रीनिवासाचार्यवंश्यकाव्यनाटकालङ्कारादिनिपुण-तमस्वमातामहश्रीराघवार्यघृणासमवाप्तसाहितीसर्वस्वाः श्रीमत्पण्डितरत्न—तर्कतीर्थकस्तूरीरङ्गनाथार्यगुरुवरसमधिगतन्यायतन्त्रवैदुष्यभराः श्रीश्रीकृष्ण—ब्रह्मतन्त्रपरकालमहादेशिकसंयमीन्द्रकरुणाकटाक्षसमासादितब्रह्मविद्यावैशद्याः

श्रीमहीशूरपुरमहाराजसंस्कृतमहाकलाशालायामधिरूढन्यायशास्त्रप्रधानोपाध्या –यपदाः अध्यापितकारितविद्वत्परीक्षोत्तरणान्तेवासिसमुदयाश्चासन् ।

साम्प्रतमिमे श्रीब्रह्मतन्त्रपरकालमुनिकुलधनश्रीहयमुखास्थानमूर्धाभिषिक्तानां प्राचामाचार्याणामेकतमभूतास्त्रयस्त्रिंशाः श्रीकृष्णब्रह्मतन्त्रपरकालसंयमीन्द्रकृपावाप्तचक्राङ्कभाष्याः श्रीवरदरामानुजमुनीन्द्रचरणाब्जविन्यस्तात्मभराः गजवेदवसुभू (१८४८) समे शालिवाहनशके क्रोधनहायने आश्वयुजमासे कृष्णनवम्यां रविवासरे (११-१०-१९२५) श्रीवागीशब्रह्मतन्त्रपरकालयतिवरोपात्तमोक्षाश्रमाः तादृशवत्सराश्वयुजबहुलत्रयोदश्यां गुरुवारे-(१५-१०-१९२५) तादृशास्थान्यां पट्टाभिषिक्ताः महीशूरनगरमहाराजश्रीमज्जयचामराजेन्द्रसार्वभौमकुलगुरवः श्रीहयवदनचरणनलिननिरन्तरपरिचरण निगमाञ्चलरहस्यबोधनाः श्रीरामानुजसंयमिमणिदर्शनतत्वदृढीकरणपटुतरबहुप्रबन्धरचनादिभिर्दिवसान् क्षणमिव नयन्तो विद्योतन्ते ।

अनन्तरमेवमिदमवगम्यमेतदुपाख्यानविवृतेरवतरणबीजम् । एकदामी महाभागाः पूर्वाश्रमे पौराणिकमणिश्रीहयग्रीवशास्त्रिप्रवरविरचितायां श्रीभागवतभूमिकायां समुल्लिखितां श्रीवागीशतत्वयाथार्थ्यज्ञानविधुर तत्कृपापाङ्गविदूरग कतिपयजनोक्तिमभिवीक्षमाणास्तत्तत्वविमर्शनाय बहुधा प्रयतमानाः पञ्चरात्रपुराणादिपरिशीलनेनापि सौहित्यमलभमानास्ततइतः श्रुतीर्विचिन्वानाः ऋग्वेदाष्टमाष्टके विभास्वरं चतुर्दशोत्तरशततमं श्रीसायणाचार्यभाष्यसंवलितं दशर्चं 'घर्मासमन्तात्रिवृत'मित्यादिकं घर्मसूक्त (अ. ८ अ. ६ व. १६ अ. १० म. १० सू. ११४) मद्राक्षुः ।

अस्य च सूक्तस्यैते शश्वदावर्तित श्रीहयवदनमन्त्रमहिमभूम्ना चतुष्कपर्देतिश्रुतिं लक्ष्मीरूपवाग्देवीवल्लभब्रह्मप्रतिपादनपरामभिप्रयन्तः श्रीवाजिमुखतत्वाविष्कारकतया कामपि मनोहरां बहुप्रमाणविलसितामितरदुर्भेदां व्याख्यामकार्षुः ।

तदनु सगार्हस्थ्या एव ते चक्रमिरे रचयितुं श्रीहयशिरउपाख्यानस्य टीकाम्। अथ हन्ताविलम्बितमेव समजनि तेषां प्रव्रज्योपलम्भः। क्रोधनशरदि तुर्याश्रमस्वीकरणानन्तरं कतिपयेषु मासेषु व्यतीतेषु श्रीदेशिकेन्द्राणां वपुषि किञ्चिदस्वास्थ्यं समजनि। तच्च विधिविलसितेन क्रमादुपचितं शोभापर्यवसन्नमभूत्। स च श्वयथुरुल्बणां दशामापेदे खशराष्टभू (१८५०) समे शालिवाहशके प्रभववत्सरद्वितीयदले। तदात्वेऽपि प्रत्यहं भगवतः श्रीवाजिवक्त्रस्य तुलसीदलार्चनं तन्मन्त्रावर्तनं मध्यंदिनात्परं तदुपाख्यानव्याख्यानलेखनं च प्रावर्तन्त निरन्तरायम्। तदात्वमाषण्मासमलवणं केवलं क्षीरान्नभुक्तिः। ईदृशमिदमदसीयं मनोदार्ढ्यमश्रुतदृष्टचरम्। अथ शशीषुवसुभू (१८५१) समे शके विभवहायने श्रीहयमुखजयन्तीमहोत्सवावसर एव समापिता तदुपाख्याव्याख्या। तदैव श्रीदेशिकेन्द्राः श्रीहयास्यस्य निरवग्रहेणानुग्रहेणोल्लाघा बभूवुः।

ईदृशीमवाङ्मनसगोचरां व्यथामनुभवद्भिरपि संयमीन्द्रैर्यावदनामयं व्यतानि श्रीतुरगमुखस्य नवलक्षतुलसीदलपूजा।

अपिच भगवन्हयमुख तादृशाशक्तिदशायामपि व्याख्याननिर्माणं लक्षार्चनं च मां कारयसि। कीदृशी ते मयि करुणेति ब्रुवन्ति संयमिवराः श्रीलक्ष्मीहयवदनरत्नमालास्तोत्रे—

'धर्मं पूर्वाश्रमोक्तं सुकरमपि न कृत्वान्तिमोक्तस्य तस्याऽ-
नुष्ठानेऽशक्तिभीतं हयमुख कृपणं लम्भयित्वाऽऽश्रमं तम्।
शोथोद्रेकादिनार्चाविशय उपगते लक्षपूजां तुलस्या
स्वोपाख्याव्याकृतिं चाकलयसि कियती मय्यनर्घा दया ते'—इति॥

एते खलु संयमीन्द्राः—गुरुचरणैः सर्वतन्त्रस्वतन्त्रैः श्रीमद्वेङ्कटनाथार्यैरधिकरणसारावल्यामन्ते—

'पाराशर्यः प्रभूतादुपनिषदमृतोदन्वतः सारभूतं
निर्मथ्यादत्त सूत्रैरवितथनिगमाचार्यनामा मुनीन्द्रः।

यत्तन्निष्कृष्टमित्थं यतिपतिहृदयारूढमारूढतार्क्ष्य-
स्तद्ब्रूक्ता वाजिवक्त्रः सहममगुरुभिर्वादिहंसाम्बुवाहैः' ॥

इति स्वप्रबन्धः श्रीहयमुखेनैव निर्मापितो न तु स्वधिया कृत इत्यनुगृहीतां वचनसरणिमवलम्बमानाः—

'श्रीकृष्णब्रह्मतन्त्रोत्तमगुरुवपुषा यो ममोपादिशत्स्वौ
मन्त्रौ तौ जापयित्वाऽनभिमुखमपि मां स्वीयसेवाधिराज्ये।
भक्त्या प्रावर्तयच्च प्रगुणतमकृपावारिधिः श्रीहयास्यः
स्वोपाख्यानस्य सोऽयं विवृतिमपि मया कारयत्यन्तरात्मा ॥

इति श्रीकृष्णब्रह्मतन्त्रपरकालसंयमीन्द्ररूपधरः श्रीहयास्यः स्वं मन्त्रद्वयं ममोपदिशंस्तच्च मां जापयन्स्वसेवासाम्राज्येऽनभिमुखमपि मां प्रवर्तयन्स्वोपाख्यानस्य विवृतिमपि कारयामासेति वदन्ति ग्रन्थादौ त्रयोदशे पद्ये।

## अथ संक्षिप्य ग्रन्थार्थक्रोडीकरणम्

एकपञ्चाश (फारं) दष्टिकाप्रमितेऽत्र प्रबन्धे द्विनवत्युत्तरात्रिशत (३९२) मिता विषयाः सप्रमाणं सप्रपञ्चं सुललितं च सम्यगभिवर्णिताः। षोडशाधिकशततम (११६) पुटादितो हयशिरउपाख्यानोपक्रमः। अयमुपाख्यानाध्यायो नारायणाख्याने (णीये) षोडशः। तत्र सप्तदशे हयशिरउपाख्यानानन्तराध्याये—

'जायमानं हि पुरुषं यं पश्येन्मधुसूदनः।
सात्विकः स तु विज्ञेयः स वै मोक्षार्थचिन्तकः॥'

इति त्रिसप्ततितमे पद्ये मधुसूदनपदमुपात्तम्। तदर्थो न बुध्यते हयशिरोवृत्तान्तज्ञानमन्तरा। तदर्थं तत्पूर्वं तादृशोपाख्यानाध्यायः प्रववृतेऽवतरणदृढीकरणाय। तत्र चतुर्दशोत्तरशतं (११४) विषयाः प्रस्तुताः॥

अत्र ग्रन्थे समग्रविषयाः (३९२) तेषु विस्ताराभिया कतिपये द्विचत्वारिंशन्मुख्या एवांशा निरूप्यन्ते तथाहि ॥

# विषयानुक्रमणिका



अथ तदुपाख्यानारम्भणानन्तरं कतिचन
प्रधानविषयाः कथ्यन्ते

एवं श्रीवाजिमुखतत्त्वाविष्करणबद्धपरिकरैः श्रीदेशिकेन्द्रैरुपनिषदृग्वेदादिसूक्तमहाभारतादिशेवधिभ्यस्तुरगास्यकृपापाङ्गसिद्धाञ्जनेनसमुद्धृता निगूढा अनर्घा विषयमणयः सर्वेषां समुज्जिजीवयिषया दृष्टिपथमवतारिताः। तेषु प्रेक्षावतामुपायनाय कतिचिदेव तेऽधुना मया भूमिकायां प्रदर्शिताः। उर्वरिता विषया विदुषां स्फुटतराः। प्रबन्धोऽयं श्रीतुरगमुखकृपापाङ्गाभिलाषुकेभ्यः सद्रुचो विद्वद्वरेभ्यो नूनं स्वदते। नात्र स्तोकमात्रोऽपि सन्देहः।

अनया भूमिकया स्फटिकाभः सुधांशुमण्डलगः सर्वेश्वरः परमकारुणिको निगममयो वागीशः प्रीणातु हयास्य इति सर्वं निरवद्यम्।

इत्थं नेत्राश्वनागेन्दु (१८७२) मितशुभशके श्रीविरोध्याह्ववर्षे
कृष्णे पक्षे नभो मास्यहिमकर (१२) मिते वासरे भानुवारे।
(२१-८-१९४९)
ज्योतिर्विच्छेषसूरिः कविरतिललितां व्यालिखद्वाजिवक्त्रोपाख्याव्याख्यानभूमिं बुधजनहृदयाह्लादिकां हृष्टचित्तः॥

एवमावेदकः सज्जनवशंवदः

गर्भपुरा (करूरु) भिजनः शेषाचार्यः

विश्रान्तज्योतिश्शास्त्रप्रधानोपाध्यायः

ज्यौतिषरत्नं संस्थानधर्माधिकारी



श्री लक्ष्मीहयग्रीव दिव्यपादुका सेवक
श्रीमदभिनवरङ्गनाथब्रह्मतंत्रपरकालमहादेशिकाः

॥ श्रीः ॥

श्रीलक्ष्मीहयवदन परब्रह्मणे नमः ॥

# श्री हयशिर उपाख्यानम् ।

शौनक उवाच—

श्रुतं भगवतस्तस्य [116] माहात्म्यं परमात्मनः [122] ।
जन्म धर्मगृहेचैव [132] नरनारायणत्मकम् ॥ १ ॥
महावराहसृष्टा च पिण्डोत्पत्तिस्सनातनी [134] ।
प्रवृत्तौ च निवृत्तौ च यो यथा परिकल्पितः ॥ २ ॥
तथा स न श्श्रुतो ब्रह्मन् कथ्यमानस्त्वयाऽनघ ।
हव्य कव्य भुजो विष्णुरुदक्पूर्वे महोदधौ ॥ ३ ॥
यच्च तत्काथितं पूर्वं त्वया हयशिरो महत् [135] ।
[136] तच्च दृष्टं भगवता ब्रह्मणा परमेष्ठिना ॥ ४ ॥
[137] किं तदुत्पादितं पूर्वं हरिणा लोकधारिणा ।
[138] रूपं प्रभावं महतामपूर्वं धीमतांवर ॥ ५ ॥
दृष्ट्वाहि विबुधश्रेष्ठमपूर्वममितौजसम् ।
तदश्वशिरसं पुण्यं [139] ब्रह्मा [142] किमकरोन्मुने ॥ ६ ॥
[142] एतन्नः संशयं ब्रह्मन् पुराणं ब्रह्मसम्भवम् ।
कथयस्वोत्तममते महापुरुषसंश्रितम् ॥ ७ ॥
पाविताऽस्म त्वया ब्रह्मन् पुण्याः कथयतः कथाः ।

सौतिरुवाच—

[143] कथयिष्यामि ते सर्वं [144] पुराणं वेदसंमितम् ॥ ८ ॥
जगौ यद्भगवान् व्यासः राज्ञः पारीक्षितस्य वै ।
[145] श्रुत्वाऽश्वशिरसो मूर्तिं देवस्य हरिमेधसः ॥ ९ ॥
उत्पन्नसंशयो राजा एवमेतदचोदयत् ।

जनमेजय उवाच—

यत्तद्दार्शितवान् (दर्शिवान्) ब्रह्मा देवं हयशिरोधरम् ॥ १० ॥
किमर्थं तत्समभवद्वपुर्देवोपकल्पितम् ।

वैशंपायन उवाच—

[146] यत्किंचिदिहलोकेवै देहबद्धं विशांपते ॥ ११ ॥
सर्वं पञ्चभिराविष्टं भूतैरीश्वरबुद्धिजैः ।
[151] ईश्वरो हि जगत्स्रष्टा [157] प्रभुर्नारायणो विराट् ॥ १२ ॥
[158] भूतान्तरात्मा वरदस्सगुणो निर्गुणोऽपिच ।
[161] भूतप्रलयमत्यन्तं (व्यक्तं) शृणुष्व नृपसत्तम ॥ १३ ॥
धरण्यामथ लीनाया मप्सुचैकार्णवे पुरा[162] ।
[163] ज्योति र्भूते जलेचापि लीनेज्योतिषि चानिले ॥ १४ ॥
वायौ चाकाशसंलीने आकाशे च मनोऽनुगे ।
[164] व्यक्तेमनसिसंलीने [165] व्यक्तेचाव्यक्ततांगते [168] ॥ १५ ॥
[169] अव्यक्ते पुरुषं याते पुंसिसर्वगतेऽपि च ।
[170] तम एवाभवत्सर्वं न प्राज्ञायत किंचन ॥ १६ ॥
[173] तमसो ब्रह्मसंभूतं तमो मूलामृतात्मकम् ।
[174] तद्विश्वभावसंज्ञान्तं पौरुषीं तनुमाश्रितम् ॥ १७ ॥
सोऽनिरुद्ध इति प्रोक्तः [175] तत्प्रधानं प्रचक्षते ।
तदव्यक्तमितिज्ञेयं त्रिगुणं नृपसत्तम ॥ १८ ॥
[184] विद्यासहायवान् देवः विष्वक्सेनो हरिःप्रभुः ।
आदिकर्तासदेवानामप्रमेयो जनार्दनः ॥ १९ ॥
अप्स्वेव शयनं चक्रे [211] निद्रायोगमुपागतः ।
जगताश्चिन्तयन्सृष्टिं चित्रांबहुगुणोद्भवाम् ॥ २० ॥
[212] तस्य चिन्तयतःसृष्टिं महानात्मगुणस्स्मृतः ।
अहङ्कारस्ततो जातो ब्रह्मा शुभचतुर्मुखः ॥ २१ ॥
[214] हिरण्यगर्भो भगवान् सर्वलोकपितामहः ।
पद्मेऽनिरुद्धात्संभूतस्तदा पद्मनिभेक्षणः ॥ २२ ॥
[215] सहस्रपत्रेद्युतिमानुपविष्टस्सनातनः ।
ददृशेऽद्भुतसंकाशो लोकानापोमयान् (प्याययन्) प्रभुः ॥ २३ ॥
सत्त्वस्थः [216] परमेष्ठी स ततो भूतगुणान्सृजन् ।

पूर्वमेवच पद्मस्य पत्रे सूर्यांशु (ग्नि) सप्रभे ॥ २४ ॥
[219] नारायण (णा) कृतौ बिन्दू अपामासां गुणोत्तरौ ।
ताव पश्यत्स भगवाननादि निधनोऽच्युतः ॥ २५ ॥
एकस्तत्राभवद्बिन्दु र्मध्वाभो रुचि (धि) रप्रभः ।
सतामसो (मामतो) मधुर्जातस्तदा नारायणाज्ञया ॥ २६ ॥
कठिनस्त्वपरो बिन्दुः कैटभो राजसस्तुसः ।
तावभ्यधावतांश्रेष्ठौ तमोरजगुणान्वितौ ॥ २७ ॥
बलवन्तौ गदाहस्तौ पद्मनालानुसारिणौ ।
ददृशाथेऽरविन्दस्थं ब्रह्माणममितप्रभम् ॥ २८ ॥
सृजन्तं प्रथमं वेदांश्चतुरश्चारु विग्रहान् ।
ततो विग्रहवन्तस्तान् वेदान् दृष्ट्वाऽसुरोत्तमौ ॥ २९ ॥
सहसा जगृहतुर्वेदान् ब्रह्मणःपश्यतस्तदा ।
अथतौदानवश्रेष्ठौ वेदान्गृह्य सनातनान् ॥ ३० ॥
रसांविविशतुस्तूर्णमुदक्पूर्वे महोदधौ ।
ततो हृतेषु वेदेषु ब्रह्मा कश्मलमाविशत् ॥ ३१ ॥
ततो वचनमीशानं प्राह वेदैर्विनाकृतः ।
वेदा मे परमं चक्षुः वेदा मे परमं बलम् ॥ ३२ ॥
वेदा मे परमं धाम वेदा मे ब्रह्म चोत्तर (म)म् ।
मम वेदा हृतास्सर्वे दानवाभ्यां बलादितः ॥ ३३ ॥
अन्धकारा हि मे लोका जाता वेदैर्विनाकृतः ।
वेदानृते किं कुर्यां लोकानां (वै) सृष्टि (स्रष्टु) मुत्तमाम् (द्यतः)॥
अहो बत महद्दुःखं वेदनाशनजं मम ।
प्राप्तं दुनोति हृदयं [220] तीव्रशोकपरायणम् ॥ ३५ ॥
को हि शोकार्णवे मग्नं मा मितोऽद्यसमुद्धरेत् ।
वेदांस्तांश्चानयेन्नष्टान् कस्य चाहं प्रियो भवे ॥ ३६ ॥
इत्येवं भाषमाणस्य ब्रह्मणो नृपसत्तम ।
हरेस्स्तोत्रार्थमुद्भूता बुद्धिर्बुद्धिमतां वर ॥ ३७ ॥

ततौ जगो परं जप्यं साञ्जलिप्रग्रहः प्रभुः ।

ब्रह्मोवाच—

[221]नमस्ते ब्रह्महृदय नमस्ते मम पूर्वज ॥ ३८ ॥
लोकाद्य भुवनश्रेष्ठ सांख्ययोगनिधे प्रभो ।
व्यक्ताव्यकराचिन्त्य क्षेमं पन्थानमास्थित ॥ ३९ ॥
विश्वभुक्सर्वभूतानामन्तरात्मन्नयोनिज ।
[222]अहं प्रसादजस्तुभ्यं लोकधाम स्वयंभुवः ॥ ४० ॥
त्वत्तो मे मानसं जन्म प्रथमं द्विजपूजितम् ।
चाक्षुषं वै द्वितीयं मे जन्म चासीत्पुरातनम् ॥ ४१ ॥
त्वत्प्रसादात्तु मे जन्म यीयं वाचिकं महत् ।
त्वत्तश्श्रवणजं चापि चतुर्थं जन्म मे विभो ॥ ४२ ॥
नासिक्यं चापि मे जन्म त्वत्तः पञ्चममुच्यते ।
अण्डजं चापि मे जन्म त्वत्तष्षष्ठं विनिर्मितम् ॥ ४३ ॥
इदं च सप्तमं जन्म पद्मजन्मेति वै प्रभो ।
सर्गे सर्गेऽप्यहं पुत्रस्तव त्रिगुणवर्जित ॥ ४४ ॥
प्रथमः पुण्डरीकाक्ष प्रधानगुणकल्पितः ।
त्वमीश्वरस्वभावश्च भूतानां त्वं प्रभावना ॥ ४५ ॥
त्वया विनिर्मितोऽहं वै वेदचक्षुर्वयोतिग ।
तेमे वेदा हृताश्चक्षुरन्धो जातोऽस्मि जागृहि ॥ ४६ ॥
ददस्व चक्षूंषि मम प्रियोऽहं ते प्रियोऽसि मे ।
एवं स्तुतस्स भगवान् पुरुषस्सर्वतोमुखः ॥ ४७ ॥
जहौ निद्रामथतदा वेदकार्यार्थमुद्यतः ।
[224]ऐश्वर्ये (र) ण प्र (सु) योगेन द्वितीयां तनुमास्थितः ॥ ४८ ॥
[290]सुनासिकेन (समानकेन) कायेन भूत्वा चन्द्रप्रभस्तदा ।
कृत्वा हयशिरश्शुभ्रं वेदानामालयं प्रभुः ॥ ४९ ॥
[294]तस्य मूर्धा समभवत् द्यौस्सनक्षत्रतारका ।
केशाश्चास्याभवन् दीर्घारवेरंशुसमप्रभाः ॥ ५० ॥

कर्णवाकाशपाताले ललाटं भूतधारिणी ।
गङ्गासरस्वती पुण्ये भ्रुवावास्तां महाद्युती ॥ ५१ ॥
चक्षुषी चन्द्रसूर्यौ ते (तु) नासा सन्ध्या पुनस्स्मृता ।
ओङ्कारस्त्वथ संस्कारो विद्युज्जिह्वाच निर्मिता ॥ ५२ ॥
दन्ताश्च पितरो राजन् सोमपा इति विश्रुताः ।
गोलोको ब्रह्मलोकश्च ओष्ठावास्तां महात्मनः ॥ ५३ ॥
ग्रीवा चास्याभवद्राजन् कालरात्रिर्गुणोत्तरा ।
एतद्धयशिरःकृत्वा नानामूर्तिभिरावृतम् ॥ ५४ ॥
अन्तर्दधौ स विश्वेशो विवेशच रसां प्रभुः ।
रसां पुनः प्रविष्टश्च योगं परममास्थितः ॥ ५५ ॥
शैक्षं (क्ष्यं) स्वरं समास्थाय उद्गीथं प्रासृजत्स्वरम् ।
सस्वरस्सानुनादी च सर्वशस्स्निग्ध एव च ॥ ५६ ॥
बभूवान्तर्जलगतः सर्वभूतगुणोदितः ।
ततस्तावसुरौ कृत्वा वेदान् [295] समयबन्धनान् ॥ ५७ ॥
रसातले विनिक्षिप्य यतश्शब्दस्ततोद्रुतौ ।
एतस्मिन्नन्तरे राजन् देवो हयशिरोधरः ॥ ५८ ॥
जग्राह वेदानखिलान् रसातलगतान् हरिः ।
प्रादाच्च ब्रह्मणे भूयः ततः स्वां प्रकृतिं गतः ॥ ५९ ॥
स्थापयित्वा हयशिर (रा) उदक्पूर्वे महोदधौ ।
वेदानामालयश्चापि बभूवाश्वशिरास्ततः ॥ ६० ॥
अथ किञ्चिदपश्यन्तौ दानवौ मधुकैटभौ ।
पुनराजग्मतुस्तत्र वेगितौ पश्यतान्तु तौ ॥ ६१ ॥
यत्र वेदाविनिक्षिप्तास्तत्स्थानं शून्यमेव च ।
तत उत्तममास्थाय वेगं बलवतां वरौ ॥ ६२ ॥
पुनरुत्तस्थतुश्शीघ्रं रसानामालयात्तदा ।
ददृशाते च पुरुषं तमेवादिकरं प्रभुम् ॥ ६३ ॥
श्वेतं चन्द्रविशुद्धाभमनिरुद्धतनौ स्थितम् ।

भूयोऽप्यमितविक्रान्तं निद्रायोगमुपागतम् ॥ ६४ ॥
आत्मप्रमाणरचिते अपामुपरि कल्पिते ।
शयने नागभोगाढ्ये ज्वालामालासमावृते ॥ ६५ ॥
निष्कल्मषेण सत्वेन संपन्नं रुचिरप्रभम् ।
तं दृष्ट्वा दानवेन्द्रौ तौ महाहासममुञ्चताम् ॥ ६६ ॥
ऊचतुश्च समाविष्टौ रजसा तमसा च तौ ।
अयं स पुरुषश्श्वेतः शेते निद्रामुपागतः ॥ ६७ ॥
अनेन नूनं वेदानां कृतमाहरणं रसात् ।
कस्यैष कोनु खल्वेष किंच स्वपिति भोगवान् ॥ ६८ ॥
इत्युच्चारितवाक्यौ तौ बोधयामासतुर्हरिम् ।
युद्धार्थिनौ तु विज्ञाय विबुद्धः पुरुषोत्तमः ॥ ६९ ॥
निरीक्ष्य चासुरेन्द्रौ तौ ततो युद्धे मनो दधे ।
अथ युद्धं समभवत्तयोर्नारायणस्य वै ॥ ७० ॥
रजस्तमोविष्टतनूतावुभौ मधुकैटभौ ।
ब्रह्मणोऽपचितिं कुर्वन् जघान मधुसूदनः ॥ ७१ ॥
ततस्तयोर्वधेनाशु वेदापहरणेन च ।
शोकापनयनं चक्रे ब्रह्मणः पुरुषोत्तमः ॥ ७२ ॥
ततः परिवृतो ब्रह्मा हरिणा वेदसत्कृतः ।
निर्ममे स तदा लोकान् कृत्स्नान् स्थावरजङ्गमान् ॥ ७३ ॥
दत्वा पितामहायाग्र्यां मतिं लोकविसर्गिकीम् ।
तत्रैवन्तर्दधे देवो यत एवागतो हरिः ॥ ७४ ॥
तौ दानवौ हरिर्हत्वा कृत्वा हयशिरस्तनुम् ।
पुनः प्रवृत्तिधर्मार्थं तामेव विदधे तनुम् ॥ ७५ ॥
एवमेष महाभागो बभूवाश्वशिरा हरिः ।
296 पौराणमेतदाख्यातं रूपं वरदमैश्वरम् ॥ ७६ ॥
यो ह्येतद्ब्राह्मणो नित्यं शृणुयाद्धारयीत वा ।
न तस्याध्ययनं नाशमपगच्छेत्कदाचन ॥ ७७ ॥

आराध्य तपसोग्रेण देवं हयशिरोधरम् ।
पाञ्चालेन क्रमः प्राप्तो रामेण पथि देशिते ॥ ७८ ॥
एतद्धयशिरो राजन्नाख्यानं तव कीर्तितम् ।
पुराणं वेदसहितं यन्मां त्वं परिपृच्छसि ॥ ७९ ॥
यां यामिच्छेत्तनुं देवः कर्तुं कार्यविधौ क्वचित् ।
तां तां कुर्याद्विकुर्वाणः स्वयमात्मानमात्मना ॥ ८० ॥
[297] एष वेदनिधिश्श्रीमानेष वै तपसां निधिः ।
एष योगश्च सांख्यश्च ब्रह्मचाग्रयं हरि (हवि) र्विभुः ॥ ८१ ॥
नारायणपरा वेदा [300] यज्ञा नारायणात्मकाः ।
तपो नारायणपरं नारायणपरा गतिः ॥ ८२ ॥
नारयणपरो धर्मः पुनरावृत्तिदुर्लभः ।
प्रवृत्तिलक्षणश्चैव धर्मो नारायणात्मकः ॥ ८३ ॥
नारायणात्मको [302] गन्धः भूमेश्श्रेष्टतमः स्मृतः ।
अपाश्चापि गुणाराजन् रसा नारायणात्यकाः ॥ ८४ ॥
ज्योतिषाश्च परं रूपं स्मृतं नारायणात्मकम् ।
नारायणात्मकश्चापि स्पर्शो वायुगुणः स्मृतः ॥ ८५ ॥
नारायणात्मकश्चैव शब्द आकाश संभवः ।
मनश्चापि ततो भूतमव्यक्त गुणलक्षणम् ॥ ८६ ॥
[303] नारायणपरः कालो ज्योतिषामयनं च यत् ।
[304] नारायणपरा कीर्तिः श्रीश्च लक्ष्मीश्च देवताः ॥ ८७ ॥
नारायणपरं साङ्ख्यं यागो नारायणात्मकः ।
कारणं पुरुषो ह्येषां प्रधानं चापि कारणम् ॥ ८८ ॥
स्वभावश्चैव कर्माणि दैवं येषाञ्च कारणम् ।
[305] अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् ॥ ८९ ॥
विविधाच तथा चेष्टा दैवं चैवात्र पञ्चमम् ।
पञ्चकारण संख्यातो (ता) निष्ठा सर्वत्र वै हरि (रे) ॥ ९० ॥
[307] तत्त्वं जिज्ञासमानानां हेतुभिसर्वतो मुखैः ।

तत्त्वमेको [308] महायोगी हरिर्नारायणः प्रभुः ॥ ९१ ॥
[392] ब्रह्मादीनां सलोकानां [393] ऋषीणांच महात्मनाम् ।
साङ्ख्यानां योगिनाञ्चापि [394] यतीनाञ्चात्मवेदिनाम् ॥ ९२ ॥
मनीषितं वि (तानि) जानाति केशवो नतु तस्य ते ।
ये केचित्सर्वलोकेषु [398] दैवं पित्र्यं च कुर्वते ॥ ९३ ॥
दानानिच प्रयच्छन्ति तप्यन्ते च तपो महत् ।
सर्वेषामश्रयो विष्णुरैश्वरं विधि(सर्ग)मास्थितः ॥ ९४ ॥
सर्वभूतकृतावासो वासुदेवेतिचोच्यते ।
[399] अयं हि (एषो)हि नित्यः परमो महर्षिः,
महाविभूतिर्गुणवान् गुणाख्यः (निर्गुणाख्यः) ।
गुणैश्च संयोगमुपैति शीघ्रं [400]
कालो यथार्तावृतुसंप्रयुक्तः (कालो यथार्थ
व्रतसंप्रयुक्ते ॥ ९५ ॥
नैवास्य विन्दन्ति (बुध्यन्ति) गतिं महात्मनो
नचा (नैवा) गतिं कश्चिदिहानुपश्यति ।
[401] ज्ञानात्मकास्संयमिनो महर्षयः
पश्यन्ति नित्यं पुरुषं [402] गुणाधिकम् ॥ ९६ ॥

इति श्रीमन्महाभारते शान्तिपर्वाणि मोक्षधर्मपर्वणि नारायणीये
सप्तपञ्चाशदधिकत्रिशततमो अध्यायः

---

हयशिरउपाख्यानं समाप्तम् ॥

---

॥ श्रीः ॥

॥ श्रीलक्ष्मीहयवदन लक्ष्मीनारायणाभ्यांनमः ॥

॥ श्रीमते रामानुजायनमः श्रीमतेनिगमान्तमहादेशिकायनमः ॥

श्रीमन्महाभारत शान्तिपर्वमोक्षधर्मान्तर्गतम्.

# हयशिर उपाख्यानम्

हयशिरोरत्नभूषणव्याख्यासमलङ्कृतम्.

---

[1]ईशाना सर्वस्या वाचोदेवी यदङ्कमध्यास्ते ।
[2]कर्णाटदेशभाग्यं वागीश्वर एष मम मनोविशतात् ॥ १ ॥

---

## हयशिरोरत्नभूषणदीधितिः.

---

हयास्य पादुकासेवी नव्यरङ्गेश्वरो यतिः ।
तनोति श्रीहयशिरो रत्नभूषण दीधितिम् ॥

[1] ईशानेति—ऐतरेयारण्यके (३–१खं) 'सर्वस्यैवाच ईशाना, इति श्रुतिरत्रप्रत्यभिज्ञाप्यते ॥

[2] कर्णाटेति—देशविशेषे मूर्तिविशेष पूजाया अतिशयित फलप्रदत्व कथनावसरे 'कर्णाटेचाश्वशिरसं, इति विष्णुधर्मोत्तर (३. खं १२१. अ. ४. श्लो) वचनमिहभाव्यम् ॥

वेदान्तगुरुमुखार्चित वागीशपदारविन्द मधुपाळिम् ।
श्रीब्रह्मतन्त्रकलिजिन्मणिमालां वन्दिषीय सुमहार्घाम् ॥ २ ॥
श्रीब्रह्मतन्त्र कलिजिच्छ्रीवासकटाक्ष लब्धभूमानम् ।
श्रद्धाळु राश्रयेऽहं श्रीकृष्णब्रह्मतन्त्रकलिमथनम् ॥ ३ ॥
श्रीरङ्गनाथपदयोः येन न्यस्तात्मरक्षण भरोऽहम् ।
कृतकृत्योऽभूवन्तं वन्दे वरदादि लक्ष्मणमुनीन्द्रम् ॥ ४ ॥
वागीशाख्या श्रुतिस्मृत्युदितशुभतनो र्वासुदेवस्य मूर्तिः
ज्ञाता यद्वागुपज्ञं भुवि मनुजवरै र्वाजिवक्त्रप्रसादात् ।
प्रख्याताऽऽश्चर्यशक्तिः कविकथकहरि स्सर्वतन्त्रस्वतन्त्रः
त्रय्यन्ताचार्यनामा मम हृदि सतत न्देशिकेन्द्र स्स इन्धाम् ॥
भाष्यं यस्य निशम्य लक्ष्मणमुनेः कौतूहलाद्भारती
सूत्राणा मिद मुत्तमं विवरणं निश्चित्यमानानुगम् ।
वागीशस्य निजप्रियाय निखिलान्वेदान्प्रदातु श्शुभां
मूर्तिं स्वेन सदाऽर्चितां समतर द्यस्मै स जीयान्मुनिः ॥ ६ ॥
[1] अल्पज्ञा नल्पशक्तीनपि बहु पुरुषान्वीक्ष्य यो द्वापरान्ते
वेदं सर्वं विभज्य प्रगुणतममहाभारताद्यैः प्रबन्धैः ।

---

[1] अल्पज्ञानल्पशक्तीनित्यादि—

द्वापरे द्वापरे विष्णुर्व्यासरूपी महामुने ।
वेदमेकं स बहुधा कुरुते जगतो हितम् ॥ ३. ३. ५.
वीर्यं तेजो बलं चाल्पं मनुष्याणामवेक्ष्य च ।
हिताय सर्वभूतानां वेदभेदान्करोति सः ॥ ३. ३. ६.

इति विष्णुपुराणवचनान्यत्रानुसन्धेयानि ॥

तत्तत्त्वं पञ्चरात्रोदित मखिलजनै स्सेवनीयं व्यभाणीत्
पाराशर्यो हृदीन्धां स मम हयशिरस्तत्त्वयाथार्थ्यबोधी ॥ ७

[1] कलिशठरिपुपूर्वा न्व्यासजैमिन्यभीष्ट
प्रचिकटयिषया स्वद्रामिडाम्नाय भेदैः ।
श्रुतिशिरसि निगूढं पञ्चरात्रे च सारं
सकलपुरुषयोग्यं कुर्वतोऽहं नमामि ॥ ८ ॥

---

[1] यद्यपि द्वापरयुगे भगवतो वासुदेवसङ्कर्षणप्रद्युम्नाऽनिरुद्धरूपेण चतुर्धा अवतारः । कृष्णेन अर्जुनं प्रति पञ्चरात्रसङ्ग्रहरूपायाः गीतायाः उपदेशः । पुरुषाणां ज्ञानशक्तिमान्द्यमवलोक्य व्यासेन वेदविभागकरणं पञ्चरात्रोक्तविधिना ब्राह्मणादिभिः सर्वैः भगवदाराधनस्य कर्तव्यताचेत्यादिकं प्रमाणसिद्धमिति तदनुसारेण तद्युगे अवतीर्णानां सरो भूत महदाह्वय मुनित्रयनाम्नां प्राधान्येन निर्देश उचितः । तथाऽपि कलिरिपुणा भगवतस्साक्षादष्टाक्षरं परिगृह्य तदर्थनिरूपणार्थं रचिते श्रीसूक्ताऽख्यप्रबन्धे नारायणशब्देन उपक्रमः उपान्त्यगाधायाः पूर्वगाधायां मधुसूदनशब्देनोपसंहारश्च दृश्यते । तेन नारायणोपनिषत् एतत्प्रबन्धस्य व्याख्येयेति सूचितम् । उपनिषदि च मधुसूदनो हयशिरा इति उत्तरत्र मूले स्फुटीभविष्यति । अतोऽत्र उपसंहारे मधुसूदनो हयशिरा एव । मध्ये पञ्चमशतके (३–२) सप्तमशतके च (८–२) गाधाद्वये पूर्वार्धे हयशिरोऽवतारचरितमपि सङ्ग्रहेण प्रतिपादितं । शठरिपुणाऽपि श्रीमुखसूक्ताऽख्यप्रबन्धे द्वितीयशतके (८–१) गाधायां अश्वसामान्यवाचिना मावितिशब्देन अवतारेषु प्रथमं हयग्रीवोनिर्दिष्टः । तेनच "तमिद्गर्भे—आदिद्गन्धर्वोऽभवद्द्वितीयः" इति श्रुतौ गन्धर्वः विष्णुपुराणादिषु याज्ञवल्क्याय शुक्लयजुर्वेदस्योपदेशप्रकरणे 'सूर्योऽश्वस्सोऽभवद्यतः" इत्यादौ अश्वश्च हयशिरा इति व्यञ्जितं । तेन च मोक्षधर्मेयाज्ञवल्क्याय सरहस्यशतपथादिकं अनुग्रहीत्री-

व्यासो जैमिनि रप्रतीपहृदया[1] वाचार्यशिष्यौ पराम्
मीमांसां निबबन्धतु स्तदनु तां [2]बोधायनाद्या बुधाः ।
व्याख्य न्ब्रह्मनयस्य लक्ष्मणमुनि र्भाष्यादि तत्र व्यधात्
तत्सर्वं सुदृढीचकार निगमान्तार्यो दयन्तामिमे ॥ ९ ॥

---

या वाग्देवीप्रोक्तासा हयशिरसश्शक्तिरित्यपि द्योत्यते । ततश्च—

अन्यश्च राजन् सपरः तथाऽन्यःपञ्चविंशकः ।
तत्स्थत्वादनुपश्यन्ति ह्येक एवेति साधवः ॥

इत्यादियाज्ञवल्क्योपदिष्टार्थे स्वस्याप्याऽचार्यकं युक्तमिति 'प्राप्यं ज्ञानं ब्राह्मणात्क्षत्रियाद्वा वैश्याच्छूद्राद्वाऽपि नीचादभीक्ष्णं, इति तत्रत्ययाज्ञवल्क्य-वचनेनैव स्थाप्यत इति सिद्ध्यति । अतो हयशिरोवतारप्रतिपादनमुखेन उपकारातिशयविवक्षया कलिरिपोश्शठरिपोश्च नाम प्राधान्येन निर्दिष्टमिति-बोध्यम् ॥

[1]सुमन्तुं जैमिनिंपैल्वं शुकंचैव स्वमात्मजम् ।
प्रभुर्वसिष्ठो वरदो वैशंपायन मेव च ॥
वेदानध्यापयामास महाभारत पञ्चमान् ।
संहितास्तैः पृथक्त्वेन भारतस्य प्रकीर्तिताः ॥

इत्यादिना महाभारतादौ जैमिनेर्व्यासशिष्यत्वं प्रसिद्धम् । (से. मी.) एवं शान्तिपर्वणि (३४९-३५९. अ.) ॥

[2]बोधायनस्य मीमांसासूत्रव्याख्यातृत्वं च भास्करानन्तरकालिकग्रन्थ-कर्तृनामनिर्देशरहिते अद्वैतिविरचिते प्रपञ्चहृदयनामके प्रबन्धे चतुर्थे उपाङ्ग-प्रकरणे "तस्य विंशत्यध्यायनिबद्धस्य मीमांसाशास्त्रस्य कृतकोटिनामधेयं भाष्यं बोधायनेनकृतम् । तद्ग्रन्थबाहुल्यभयादुपेक्ष्य किंचित् संक्षिप्तं उपवर्षेण कृतम्" इत्यत्र स्फुटम्—एवं भगवता बादरायणेन इदमर्थान्येव

[1] सत्वस्थं नाभिपद्मे विधिमथदितिजं राजसं तामसं चा
ऽविद्धोरुत्पाद्य ताभ्यामपहृतमखिलं वेदमादाय धात्रे ।
दत्वाद्राक्तौचहत्वा [2] वरगणमदिशद्वेधसे सत्र आदौ
[3] तन्त्रं चोपादिशद्य स्सभम हयशिरा मानसे सन्निधत्ताम् ॥

---

सूत्राणि प्रणीतानि । विवृतानि च तानि परिमितगम्भीरभाषिणा भाष्यकृता। विस्तृतानि च तानि गम्भीरन्यायसागरभाषिणा भगवता श्रीवत्साङ्कमिश्रेणाऽपि' इत्यात्मसिद्धौ बादरायणसूत्रव्याख्यानद्वयमन्यदप्यवर्तत इति प्रतीयते । एतानि च सूत्रविवरणान्यद्यत्वे नोपलभ्यन्ते ॥

[1] सत्त्वस्थमित्यादि—उपाख्यानार्थोऽत्र संक्षिप्तः ॥

[2] वरगणमित्यादि—"अहं हयशिरा भूत्वा" भा. शा. ३४७–६१ इत्यादावयमर्थो व्यक्त इति निरूपयिष्यते ॥

[3] तन्त्रमिति—यथोक्तं निर्णयसिन्ध्वादिप्रबन्धकृता कमलाकरभट्टेन प्रमाणतया आदृते हयशीर्षपाञ्चरात्रे—

तेनाश्वशिरसा गत्वा वेदानादायशाश्वतान् ।
प्रययौ भवनं दिव्यं महर्षिगणभूषितम् ॥ (१. अ. २३)
सोऽप्यसौ प्रददौ वेदान्भूय एव जगद्गुरुः ।
तस्मिन्काले मया पृष्टो देवो यत्तच्छृणुष्व मे ॥ २४ ॥
कियन्ति पञ्चरात्राणि त्वया प्रोक्तानि वै पुरा ॥ २५ ॥

श्रीभगवानुवाच—

यत्त्वया पृष्टमखिलं तत्सर्वं कथयामि ते ।
प्रोक्तानि पञ्चरात्राणि कल्पे कल्पे मया पुरा । २. प. १.
व्यस्तानि मुनिभिर्लोके पञ्चविंशतिसंख्यया ।
आद्यं समस्ततन्त्राणां हयशीर्षं प्रकीर्तितम् । २. प. २. इत्यादि ॥

काण्वामाध्यन्दिनाश्च प्रथममभिदधुर्यत्प्रवर्ग्यार्थवादे
तन्मात्रालम्बिनो ये तत उपरितनाम्नायभावाऽनभिज्ञाः ।
प्रख्यातारण्यकादिप्रथितहयशिरस्तत्वविज्ञानशून्या-
स्तेषां मोहं व्यपास्य प्रकटयति परं व्यास एकं च तत्त्वम् ॥

श्रीकृष्णब्रह्मतन्त्रात्कलिमथनगुरोर्लब्धवेदान्तसारः
विन्यस्तस्वात्मभारो वरदपदमुखे लक्ष्मणे देशिकेन्द्रे ।
वागीशप्राप्ततुर्यो हयमुखचरणत्राणसेवाधुरीणः
तस्योपाख्यानभावं प्रकटयति यतिर्नव्यरङ्गेन्द्रनामा ॥ १२ ॥

श्रीकृष्णब्रह्मतन्त्रोत्तमगुरुवपुषा यो ममोपादिशत्स्वौ
मन्त्रौ तौ जापयित्वाऽनभिमुखमपि मां स्वीयसेवाधिराज्ये ।
भक्त्या प्रावर्तयच्च प्रगुणतमकृपावारिधिश्श्रीहयास्यः
स्वोपाख्यानस्य सोऽयं विवृतिमपि मया कारयत्यन्तरात्मा ॥

श्रियःपतिः परमकारुणिको भगवान् सर्वेषामेव पुरुषाणामु-पादित्सिताजिहासितेष्टानिष्टफलतत्सधनानां त्याज्योपादेयपरिज्ञानाय वेदाख्यं शास्त्रं चतुर्मुखादिपरंपरया प्रावर्तयत् । तस्मिंश्च ज्ञाने द्वापरे खिले सति नष्टप्रज्ञाननुजिघृक्षुः "देवतापारमार्थ्यं च यथावद्वेत्स्यते भवान्" "पुलस्त्येन यदुक्तं ते सर्वमेतद्भविष्यति" इति पुलस्त्यवसिष्ठवरप्रदानलब्धपरदेवतापारमार्थ्यज्ञानवतः [1]पञ्चरात्रैकरसश्रुतितात्पर्यविषयानिगूढार्थाऽविष्करणपटिष्ठात्पराशरात्सत्यवत्यां कृष्णद्वैपायनरूपेणाऽवतीर्य वेदं सर्वं विभज्य तदुपबृंहणमितिहासरत्नं महा-

---

[1] पञ्चरात्रैकरसेति । विष्णुपुराणस्य वासुदेवद्वादशाक्षरविवरणरूपत्वं व्यक्तम् विष्णुपुराणपरिशीलनपराणां विदुषाम् ॥

भारतं च प्राणैषीत् । तत्र च सभापर्वणि—४३. तमे अध्याये—

अव्यक्तोव्यक्तलिङ्गस्थो य एष भगवान्प्रभुः ।
पुरा नारायणो देवः स्वयंभूः प्रपितामहः ॥
सहस्रशीर्षः पुरुषो ध्रुवोऽनन्तः सनातनः ।
सहस्रास्यः सहस्राक्षः सहस्रचरणो विभुः ॥

इत्यादिना सर्ववेदपठितस्य पुरुषसूक्तस्य—

ब्रह्मादिषु प्रलीनेषु नष्टे लोके चराचरे ।
आभूतसंप्लवे प्राप्ते प्रलीने प्रकृतौ महान् ॥
एकस्तिष्ठति सर्वात्मा स तु नारायणः प्रभुः ।
नारायणस्यचाङ्गानि सर्वदैवानि भारत ॥
अन्यानि सर्वदैवानि सर्वाङ्गानि महात्मनः ।
सर्वंचाऽपि हरौसंस्थं सूत्रे मणिगणा इव ॥
आभूतसंप्लवान्तेऽथ दृष्ट्वा सर्वं तमोऽन्वितम् ।
ब्रह्मभूतस्तदात्मानं ब्रह्माणमसृजत्स्वयम् ।
सोऽध्यक्षः सर्वभूतानां प्रभूतप्रभवोऽच्युतः ।
सनत्कुमारं रुद्रं च सप्तर्षींश्च तपोधनान् ॥
सर्वमेवाऽसृजद्ब्रह्मा तथा लोकां स्तथाप्रजाः ।

इत्यनेन 'एकोहवैनारायण आसीन्नब्रह्मानेशानः' इत्यादि महोपनिषदः 'तद्ब्रह्म स आत्मा अङ्गान्यन्यादेवताः' इति तैत्तिरीयोपनिषद्वाक्यस्य च अर्थं निर्णीय ततो (४४) भगवतो नरनारायण हर्यात्मना [1] मुख्य-

---

[1] मुख्येति—

"नरनारायणौ भूत्वा हरिरासीद्युधिष्ठिर । (४४)
ब्रह्मा च शक्रः सूर्यश्च—प्रादुर्भवति कार्यतः"

प्रादुर्भावं तस्माद्ब्रह्मरुद्रादिगौणप्रादुर्भावोत्पत्तिं तेनैव [1]स्वकर्ण मल-संभूतयोः स्वनाभिपुष्करजातब्रह्मसमीपमागतयोः योद्धुकामयोर्मधुकैटभयोर्हननं, पौष्करप्रादुर्भावमाहात्म्यं वराहनृसिंह वामन परशुराम श्रीरामप्रादुर्भाव संक्षिप्तचरितम्,

आज्ञापयित्वा सर्वज्ञो व्यजायतयदोः कुले ।
आत्मान[2]मात्मनातात कृत्वा[3]बहुविधं [4]हरिः ॥ ५२. अ. ७.

इत्यादिना भूभारावतरणार्थं कृष्णप्रादुर्भाववृत्तम्,

नैषगर्भत्वमापेदे नयोन्या मवसत्प्रभुः ।
आत्मनस्तेजसाकृष्णः सर्वेषां कुरुते गतिम् ॥ ६१. अ. ३२.
[5] कृष्णं कमलपत्राक्षं नार्चयिष्यन्ति ये नराः ।
जीवन्मृतास्तुते ज्ञेयाः न संभाष्याः कदाचन ॥ ६२. अ. ९.

---

इति नरादीनां ब्रह्मादीनां च पार्थक्येन प्रादुर्भावप्रतिपादनेनैव पञ्चरात्रसंहितोक्तगौणमुख्यविभागोऽत्र विवक्षित इति प्रतीयते । एवमन्यत्रापि (कू. पु. २०७ पु.) । अत एव ब्रह्मरुद्रादीनां पूर्वं परत्र च सृष्टिप्रतिपादनं सङ्गच्छते । भगवद्गुणदर्पणे 'वरारोह' नाम निरूपणावसरे चाऽयमर्थः स्पष्टः ॥

[1] एवमेव हरिवंशादावपि । एतच्चकल्पभेदाभिप्रायकं । तेनाऽत्रोपाख्याने मधुकैटभयोः जलबिंदुभ्यामुत्पत्ति प्रतिपादनस्य न विरोधः ॥

[2] आत्मना—स्वसंकल्पेन । [3] बहुविधं—चतुर्विधं । [4] हरिः—ब्रह्मरुद्रादिसंहर्ता इत्यर्थः ॥

[5] अत्रार्चनं चतुरात्मनोवासुदेवस्यार्चनमेव विवक्षितं । एतत्सर्वं उत्तरत्रस्फुटी भविष्यति ॥

इत्यनेन कृष्णस्य अयोनिजाऽवतारत्वं कृष्णार्चनाऽकरणे दोषंचाऽवादीत् । अरण्यपर्वणि च—

एष नारायण श्श्रीमान् क्षीरार्णवनिकेतनः ।
नागपर्यङ्क मुत्सृज्य ह्यागतो मधुरांपुरीम् ॥ ८६. अ. २४.
पुण्याद्वारवती तत्र यत्रासौ मधुसूदनः ।
साक्षाद्देवः पुराणोसौ सहिधर्मः सनातनः ॥ २५ ॥
येचवेदविदोविप्राः येचाऽध्यात्मविदोजनाः ।
ते वदन्ति महात्मानं कृष्णं धर्मं सनातनम् ॥ २६ ॥

इत्यनेन नारायणोपनिषदन्ते 'ब्रह्मण्यो देवकीपुत्रो ब्रह्मण्योमधुसूदनोम्' 'सर्वभूतस्थमेकं नारायणं, इति श्रुतिं न्यग्रोधपत्रशायिनश्शिशोरनिरुद्धस्यकुक्षौ सर्वं जगत्साक्षात्कुर्वतामार्कण्डेयेन युधिष्ठिरं प्रति प्रतिवचनावसरे—

सर्वेषामेवभूतानां पितामाताच माधवः ।
गच्छध्वमेनं शरणं शरण्यं कौरव(पुरुष)र्षभाः ॥ १९२. अ. ५६.

इत्यादिना 'माता पिता शरणं सुहृद्गतिर्बन्धुर्नारायणः' इति सुबालश्रुतिं च व्याख्याय आत्मानं तपसा तोषयन्तं जयद्रथं प्रति रुद्रप्रतिवचनावसरे नारायणस्य लयकारणत्वं नारायणनामनिर्वचनपूर्वकं सृष्टिकारणत्वं वराहनृसिंहवामनकृष्णावताराणां संक्षिप्तचरितं चोक्त्वा नारायणसहायस्य अर्जुनस्य जयद्रथेनाऽजय्यत्वं चाब्रवीत् ॥ उद्योगपर्वणि च—

यतः कृष्णस्ततो जयः ॥ ६७ अ. ९ इत्युपक्रम्य,
कालचक्रं जगच्चक्रं युगचक्रं च केशवः ।
आत्मयोगेन भगवान् परिवर्तयतेऽनिशम् ॥ १२ ॥

कालस्य च हि मृत्योश्च जङ्गमस्थावरस्य च ।
ईष्टे हि (शते) भगवानेकः[1] सत्यमेतद्ब्रवीमि ते ॥ १३ ॥

ईशन्नपि महायोगी सर्वस्य जगतो हरिः ।
कर्माण्यारभते कर्तुं कीनाश इव दुर्बलः ॥ १४ ॥

तेन वञ्चयते लोकान्मायायोगेन केशवः ।
ये तमेव प्रपद्यन्ते न ते मुह्यन्ति मानवाः ॥ १५ ॥

इत्यन्तेन 'एको देवः' ६-७, 'स ईशोऽस्य जगतो नित्यमेव नाऽन्यो हेतुर्विद्यत ईशनाय' ६-१७, 'विद्याऽविद्ये ईशते यस्तु सोन्यः' ५-१, 'क्षरात्मानावीशते देव एकः' १-१० इत्यादिश्वेताश्वतरश्रुतेः; 'एकं सद्विप्रा बहुधा वदन्ति कृष्णं नियानं' २ अष्ट. ३ अ. इति अस्य वाम(वामन)सूक्तमन्त्रस्य 'श्रीकृष्णो वै परमं दैवतं' इति गोपालतापनीयश्रुतेश्च तात्पर्यमाविष्कृत्य—

एष ऐकायनः पन्थाः येन यान्ति मनीषिणः ॥ ६८-१५.

एतज्ज्ञानं च पन्थाश्च येन यान्ति मनीषिणः ।
अप्राप्यः केशवो राजन् इन्द्रियै रजितैर्नृभिः ॥ २० ॥

[2] आगमाधिगमाद्योगाद्वशी तत्त्वेप्रसीदति ॥ २१.

---

[1] सत्यमित्यादि—एतत्—ईशनम्, सत्यं—परमार्थं 'स ईशोऽस्य जगतो नित्यमेव नान्यो हेतुर्विद्यत ईशनाय, इत्यत्र ईशितृत्वस्य अविद्यादिमूलकत्वव्यवच्छेदेन परमार्थत्वबोधनादिति भावः ॥

[2] अत्राऽऽगमशब्दः पञ्चरात्रपरः । पाद्मे (६ उ. ८१ अध्या.) एतच्छब्दनिर्वचनं द्रष्टव्यम् ।

**इत्यनेन [1] भूमविद्यादिषुप्रसिद्धायाः पञ्चरात्रमूलभूताया एकायनशाखायाः 'युजीवांब्रह्मपूर्व्यंनमोभिः' श्वे. २. ६. 'सर्वस्य प्रभमीशानं सर्वस्य शरणं सुहृत्' ३-१७. मुमुक्षुर्वैशरण महंप्रपद्ये, ६. १८. इत्यादि श्वेताश्वतरश्रुत्यैककण्ठयमभिधाय—**

**कृषिर्भूवाचकश्शब्दोणश्चनिर्वृतिवाचकः ।**
**विष्णुस्तद्भावयोगाच्च कृष्णोभवतिसात्वतः ॥ ६९-५.**

**इत्यादिना कृष्णादिनामनिर्वचनपूर्वकं कृष्णस्य परत्वेन तस्यैव शरणागत्युदेश्यत्व मुपसञ्जहार ॥**

---

[1] भूमविद्यादिष्विति ॥ अत्रैकायनशब्दस्य शाखापरत्वं २-८. श्रुतप्रशिकायां स्पष्टं । एवं काण्वसंहिताभूमिकायां भागवतलक्ष्मीनृसिंहशास्त्रिणा उदाहृतायां (अथर्वशिरसि पूर्वकाण्डे) "अथहैनं पिप्पलादो अङ्गिराः सनत्कुमारश्चाथर्वाण मूचुः भगवन्नादौ को वेदः को वाऽयातयामः को वा विष्णुदैवत्यः को वा कृत्स्नकर्मब्रह्मप्रतिपादकः कौस्विद्देवानां ऋषीणांच प्रियतम इति । सएभ्योऽथर्वा प्रत्युवाच भगवतो नारायणस्य निश्वासरूपेणादावभिव्यक्तश्शुक्लयजुर्वेदः स एवाऽयातयामः सवीर्यत्वाय भवति । स एवविष्णुदैवत्यो विष्णु प्रीणनाय स एव कृत्स्नकर्म ब्रह्मप्रतिपादकः सत्प्रतिपादनाय । स एवदेवर्षीणां चप्रियः तत्प्रीणनाय भवति । त एनं पुनरूचुः भगवन्कौस्विदेकायन इति । स एभ्यः प्रत्युवाच भगवतो (ना)तत्र शौक्लिकानि यजूꣳषि द्विसहस्राणि तान्येकायनानीत्याचक्षते इति श्रुतावपि । यथाच एकायनशाखाया अपौरुषेयत्वं तथा काश्मीरागमप्रामाण्य एव प्रपञ्चित मित्यागमप्रामाण्ये भगवद्यामुनमुन्युक्तच तदात्वे तस्या अकल्पितत्वे अविप्रातिपत्तिर्निश्चीयते । (च-व्यू) शाखाविभागेच तापायनीयेति अस्या एव नामभेदउत्कीर्तितस्स्यात् । (च-व्यू) ता(प)पायनियाः—इति अन्यत्र ताम्रायणः, इति वाजसनीय शाखाध्यायि मैत्रायणशाखा-

भीष्मपर्वणिच २३ अध्याये 'यतः कृष्णस्ततोजयः' इत्युपक्रम्य भगवद्गीतायां सात्त्वतधर्मं संग्रहेण निरूप्य गन्धमादने स्थितेन चतुर्मुखेन आकाशविमानस्थं वासुदेवं प्रति नमस्कारपूर्वक प्रार्थनावचनेषु—

त्वद्भक्तिनिरतादेव नियमस्थाः समाहिताः ।
अर्चयामस्सदा [1]विष्णुं परमेशं महेश्वरम् ॥ ग्रं. ६० अ. ६३
[2]यत्तत्परमकं गुह्यं त्वत्प्रसादादिदं विभो ।
वासुदेव तदेतत्ते मयोद्गीतं यथातथम् ॥ ६९ ॥

---

विभागे च षड्भेदाः, सप्तभेदाः, इति च (च-व्यू) पाठभेदाः (वै-वा) दृश्यन्ते । (मै) ऐकेयाः, एकायनाः इति (च.व्यू) लिखितकोशेषु पाठभेदश्चोपलभ्यते । अभ्युपगम्यते च शाखानां कालभेदेनापि नामभेदो विमर्शकैः । शाखाचेयमितरशाखावत् यामुनमुनिकाल एव कृत्स्ना नोपलब्धेति आगमप्रामाण्ये व्यक्तं । 'त्यजतैवहि तज्ज्ञेयम्' इति सुरेश्वरवार्तिकाद्युदाहृत भाल्लवेयशाखादि कतिपयवाक्यवत् एतदीयकतिपयवाक्येषु प्रत्ययितव्यतेति ॥

[1] अत्र विष्णुः अनिरुद्धः 'अनिरुद्धं त्वं यं विदुर्विष्णुमव्ययम्, इत्यनुपदमेववक्ष्यमाणत्वात् । चतुर्मुखादीनां सकामत्वेन अनिरुद्धस्यैवाराध्यत्वात् । अयमर्थः यज्ञाग्रहराध्याये स्फुटीभविष्यति ॥

[2] यत्तत्परमकमित्यादि । अत्र परमकं उद्गीतमिति पदद्वयेन 'उद्गीतमेतत्परमन्तु ब्रह्म तस्मिंस्त्रयं स्वप्रतिष्ठाक्षरञ्च । अत्रान्तरं वेदविदो विदित्वा लीना ब्रह्मणि तत्परा योनिमुक्ताः, १-७ इति श्वेताश्वतरश्रुतिः प्रत्यभिज्ञाप्यते । तत्र च 'आत्मानमरणिं कृत्वा प्रणवंचोत्तरारणिम् । ध्याननिर्मथनाभ्यासाद्देवं पश्येन्निगूढवत्, १-१४ इत्यत्र देवशब्देन वासुदेव एव विवक्षितः । 'सृष्ट्याद्यैः क्रीडतिस्वयं . . . इति देवार्थ ईरितः, ५२, ६८ इत्य-

**सृष्ट्वा संकर्षणं देवं स्वयमात्मानमात्मना ।**
**कृष्ण त्व मात्मनास्राक्षीः प्रद्युम्नंचाऽऽत्मसंभवम् ॥ ७० ॥**
**प्रद्युम्नादनिरुद्धं त्वं यं विदुर्विष्णुमव्ययम् ।**
**अनिरुद्धोऽसृजन्मां वै ब्रह्माणं लोकधारिणम् ॥ ७१ ॥**

---

हिर्बुध्न्य संहितोक्तानां देवशब्दयोगार्थानां सृष्टिस्थितिलयक्रीडानां 'किं कारणं ब्रह्म कुतस्स्मजाता जीवाम केन क्वचसंप्रतिष्ठा, इत्युपक्रमे प्रतिपादनात् । उपसंहारेचोत्तरत्र 'सर्वव्यापिनमात्मानं क्षीरेसर्पिरिवार्पितम्, १.१७. इत्यत्र वासुशब्दयोगार्थप्रतिपादनाच्च । तत्पूर्वं 'तिलेषुतैलं दधनीवसर्पिः आपस्स्रोतस्सुचारणीषु चाग्निः । एवमात्मा आत्मनि गृह्यतेऽसौ, १-२५. इत्यत्र दधनीव सर्पिरित्यनेनोक्तस्यार्थस्य ब्रह्मबिन्दूपनिषदि ('स्वरेणसन्धयेद्योग, मित्युपक्रम्य 'पयसि निगूढं भूतेभूतेच वसति विज्ञानं । सततं मन्थयितव्यं मनसा मन्थानदण्डेन, ४-२० 'सर्वभूताधिवासं च यद्भूतेषु वसत्यपि । सर्वानुग्राहकत्वेन तदस्म्यहं वासुदेवस्तदस्म्यहं वासुदेवः' ४ २३.) इत्यनेन विवरणपूर्वकं सर्पिस्स्थानापन्नस्य वासुदेवत्वाभिधानात् 'अरणीषुचाग्नि' रित्युक्तार्थस्याहिर्बुध्न्यसंहितायां 'यथा च वह्निनाऽविष्टमिन्धनं तन्मयं भवेत् । एवमाच्छादितं तेन विश्वं तन्मयमेवतत् । वासुशब्दार्थ उद्दिष्टः, ५२ अ. ६४-६५ इति वासुदेवशब्दघटक वासुशब्दतात्पर्यविषयत्वाभिधानाच्च वासुदेवशब्दे 'विनापिप्रत्ययं पूर्वोत्तरपदयोर्वालोपोवाच्यः, इतिवार्तिकेन पूर्वपदलोपात् देवशब्देनैव वासुदेवशब्दार्थलाभसंभवाच्च । एवं च उपसंहारोक्तवासुदेव एव मध्ये 'उद्गीतमेतत्परमन्तु ब्रह्म, इति श्रुतौ परमं ब्रह्म विवक्षितम् । 'तस्मिंस्त्रय'मित्यत्र, 'त्रयंकुतस्स्म जाता जीवाम केन क्वच संप्रतिष्ठा, इत्युपक्रमोक्तसृष्टिस्थितिलयकाराणां उपसंहारस्थप्रणवघटकाकारोकारमकारार्थतया विश्वतैजसप्राज्ञशब्दैर्माण्डूक्यनृसिंहतापनी-

[1] तस्माद्याचामि लोकेश चतुरात्मानमात्मना ।
विभज्य भागशोऽऽत्मानंव्रजमानुषतां विभो ॥ ७ २॥

इत्यन्तेन ५२-७. सभापर्वोक्तार्थं विशदीचकार । वक्ष्यतिचाऽऽनुशासनिकेऽपि वासुदेवस्य चातुरात्म्यम् ॥

. . . . . विष्वक्सेनात्सर्वमेतत्प्रसूतम् ।
रुद्रादित्यावसवोथाऽश्विनौच साध्याश्च विश्वे मरुताङ्गणाश्च ।
प्रजापतिर्देवमताऽदितिश्च सर्वे कृष्णादृषयश्चैवसप्त ॥ २६१-३४.

इत्युपक्रम्य—

सर्वं कृष्णात्स्थावरं जङ्गमञ्च विश्वात्मानं विष्णुमेनंप्रतीहि ।
विश्वावासं निर्गुणं वासुदेवं सङ्कर्षणं जीवभूतं वदन्ति ॥

---

यादिषु, संकर्षणप्रद्युम्नानिरुद्धशब्दैश्च गोपालतापनीयादिषु च व्यवहृतानां त्रयमेव विवक्षितं । अतः पाञ्चरात्रिकवासुदेवश्चतुरात्मा श्वेताश्वतरश्रुतावुद्गीत इति व्यासाशयः । भारतवचने उद्गीतेत्यत्र गीतेत्यनेन गीताप्रतिपाद्योप्ययमेवेति सूचितम् । भारते वासुदेवादिमूर्तिचतुष्टयानिरूपणावसरे कृष्णस्य वासुदेवत्वोक्त्याऽप्ययमर्थो दृढीक्रियते । उद्गीतेत्यत्र उदित्यनेन 'यःपुनरेतान्त्रिमात्रेणौमित्यनेन परंपुरुषमभिध्यायीत, इति प्रश्नोपनिषदि परपुरुषो वासुदेव इति व्यञ्जितम् । संकर्षणप्रद्युम्नानिरुद्धानां संहारस्थितिसृष्टिकारकत्वं चतुर्णामेकत्वं च महाभारते बहुत्रस्पष्टं । एतच्छ्रुत्युत्तरार्धार्थोऽपि नारायणाख्याने वक्ष्यते ॥

[1] तस्मात्—मूलरूपस्य चतुर्विधत्वात् । अनेन द्वापरयुगे सात्त्वतविधिना वासुदेवस्यार्चनीयत्वे, मूलरूपानुसारेण द्वापरयुगे वासुदेवसंकर्षणप्रद्युम्नानिरुद्धात्मनाऽवतारोनिदानमिति सूच्यते तदेभिः भीष्मपर्ववचनैः

ततः प्रद्युम्नमनिरुद्धं चतुर्थमाज्ञापयत्या त्मयोनिर्महात्मा ॥

इति ;

ये मया भावितात्मानो मय्येवाभिरतास्सदा ।
उपासते च मामेव ज्योतिर्भूता निरामयाः ॥ ४३-२०.
मद्भक्तास्सततं तेवै भक्तांस्तानपि चाप्यहम् ।
चतुर्धाहं विभक्तात्मा चरामि जगतोहितम् ॥
एका मूर्तिर्निर्गुणाख्या योगं परममास्थिता ।
द्वितीया सृजते तात भूतग्रामं चराचरम् ॥
सृष्टं संहरतेचैका जगत् स्थापरजङ्गमम् ।
चतुर्थी मे महामूर्तिः जगद्वृद्धिं ददाति सा ॥
रक्षते चाऽपि निरता सोऽहमस्मि नभश्वरः ।
सर्वतो मुक्तसङ्गेन मय्यनन्यसमाधिना ॥
शक्यस्समासादयितु महं वै ज्ञानचक्षुषा ।
मयाचाऽपि चतुर्थात्मा विभक्तः प्राणिषुस्थितः ॥
[1]आत्मभूतो वासुदेवो ह्यनिरुद्धो मतौ स्थितः ॥ ३३.

---

आज्ञापायित्वा सर्वज्ञो व्यजायत यदोः कुले ।
आत्मानमात्मना तात कृत्वा बहुविधं हरिः ॥ इति सभापर्वोक्तार्थ एव विस्तृतः । 'आत्मानमात्मनातात' 'स्वयमात्मानमात्मना' इति सभाभीष्म-पर्वद्वयोक्तार्थएवानुशासनिकेऽप्युक्तः । एतेन सङ्कर्षणादिमूर्तीनां वासुदेव-सङ्कल्पातिरिक्तसङ्कल्पमूलकत्वं प्रतिक्षिप्तम्ः ॥

[1] अत्र 'एकामूर्तिर्निर्गुणाख्या' इत्युपक्रम्य अनिरुद्धसङ्कर्षणप्रद्युम्नानां सृष्टिरक्षणसंहारहेतुत्वमभिधाय 'आत्मभूतो वासुदेव' इत्युक्तया 'निर्गुणं

संकर्षणोऽहंकारेच प्रद्युम्नो मनसि स्थितः ।
[1]अन्यथा च चतुर्धायत् सम्यक्तुं श्रोतुमर्हसि ॥ ३४ ॥
यत्तत्पद्ममभूत्पूर्वं तत्र ब्रह्मा व्यजायत ।
ब्रह्मणश्चाऽपि संभूतः शिवइत्यवधार्यताम् ॥ ३५ ॥
शिवात्स्कन्धः संबभूव एतत्सृष्टिचतुष्टयम् ।
मम यत्परमं गुह्यं शाश्वतं ध्रुवमव्ययम् ॥
तदेवं परमो गुह्यो देवो नारायणो हरिः ।
[2]न तच्छक्यं भुजङ्गारे! वेत्तुमभ्युदयान्वितैः ॥ ६६ ॥

---

वासुदेवं' इति पूर्वोदाहृतवचनेन च 'एकोदेवः—साक्षीचेताकेवलोनिर्गुणश्च' ६-११ इति श्वेताश्वतरश्रुतौ सृष्टिस्थितिलयप्रयोजकसत्त्वरजस्तमोगुणत्रयाधिष्ठानशून्यः वासुदेवः प्रतिपाद्य इति बोधितम् ॥

[1] अन्यथाचेत्यादिनाऽकर्मवश्यसंकर्षणादिवैलक्षण्यं ब्रह्मरुद्रादिमूर्तीनां बोधितम् ॥

[2] नारायणस्य सर्वस्मात्परत्वं तद्भक्तिविधुरा नज्ञातुं शक्नुवन्तीत्याह । नतच्छक्यमिति । अत्र वासुदेव नारायणविष्णुशब्दत्रयेण नारायणाय विद्महे—विष्णुः प्रचोदयात्, इतिश्रुतिविवृता। एव मत्र अन्यथाचे'त्यादिना ब्रह्मरुद्राद्युत्पत्तेः पृथगुक्त्या विष्णोरुत्पत्तिमनभिधाय ध्येयत्वोक्त्या पूर्वं 'सर्वं कृष्णात्स्थावरजङ्गमं च विश्वात्मानं विष्णुमेनं प्रतीहि' इत्युक्त्याच 'ब्रह्मविष्णुरुद्रेन्द्रास्तेसर्वे संप्रसूयन्ते' इत्यथर्वशिरस्युक्ता विष्णूत्पत्तिः नकर्मनिबन्धना किन्तु स्वसंकल्पमात्रनिबन्धनेत्यपि सिध्यति । एतदुत्तरं उपमन्यूपाख्यानमधिकृत्य परमतभङ्गे आचार्यपादैः सहस्रग्रन्थसम्मितातिविततध्यायमुपमन्यूपाख्यानमनाप्तमिति केचिद्वदन्ति । आप्तत्वेऽपि तामसाधिकारिणामुपयुक्त तामसधर्मविशेषपरत्वात्सात्त्विकानामनुपादेयम्—इत्युक्तं । अत्र—अर्जुनमिश्रादिभिरव्याख्यातत्वादान्ध्र-

ध्यायन्तो मनसा विष्णुंगच्छन्ति परमांगतिम् ॥ इतिच ॥४४-११

भीष्मपर्वणि अनन्तराध्याये—

वासुदेवोऽर्चनीयो व [1] स्सर्वलोकमहेश्वरः ।
यत्तत्पुरुषसञ्ज्ञं वै गीयते ज्ञायते नच ॥
एवं विदित्वा तत्त्वार्थं लोकानामीश्वरेश्वरः ।
वासुदेवो नमस्कार्य स्सर्वलोकैस्सुरोत्तमाः ॥
यतः कृष्णस्ततोधर्मो यतोधर्म स्ततोजयः ।
स एष शाश्वतो देव स्सर्वगुह्यमयश्शिवः ॥
[2] वासुदेव इति ज्ञेयो यन्मांपृच्छसि भारत ।
ब्राह्मणैः क्षत्रियव्यैश्यैश्शूद्रैश्च [3] कृतलक्षणैः ॥

---

भाषायां प्राचीनपरिवर्तनाभावाच्च महाभारते बहुषुप्रदेशेषु उपक्रमादितात्पर्य लिङ्गैर्नारायणस्य परत्वसमर्थनाच्चोपमन्यूपाख्यानस्य प्रक्षिप्तत्वं वेदान्तकौस्तुभे-स्थापितम् । द्वितीयःपक्षो (या. रा. स्वा.) लक्षाभरणेमहाभारतव्याख्यानेसाधितः इत्यवसेयम् ॥

[1] अनेन 'तमीश्वराणां परमं महेश्वरम्' इत्यादिश्वेताश्वतरादिश्रुत्यर्थउक्तः ॥

[2] ब्रह्मबिन्दूपनिषदि 'स्वरेणसन्धयेद्योगं' ४. ७. 'अप्रमेयमनाद्यं च ज्ञात्वा च परमं शिवम्' ४. ९. इत्युपक्रान्तस्यार्थस्य 'सर्वानुग्राहकत्वेन तदस्म्यहं वासुदेवस्तदस्म्यहं वासुदेवः' ४. २३. इत्युपसंहारात् 'शाश्वतं शिवमच्युतम्' इति नारायणानुवाके श्रवणाच्चेति भावः । एतेन 'प्रपञ्चो-पशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः, इति माण्डू-क्यश्रुत्यादिषु शिवशब्दो मङ्गळार्थकः वासुदेव पर इति बोधितम् ॥

[3] कृतलक्षणै—इत्यस्य कृतचक्रादिलक्षणैरित्यर्थस्स्थापितस्सच्चरित्ररक्षा-यामाचार्यपादैः ॥

[1] अर्चनीयश्च सेव्यश्च नित्ययुक्तैस्स्वकर्मसु ।

[1] अर्चनाकरणे दोषस्सभापर्वणि (६२. अ. ९. ७. पत्रे) उक्तः । हेमाद्रिणाऽपि चतुर्वर्गचिन्तमणौ परिशेषखण्डे विष्णुपूजायास्सन्ध्यावन्नित्यत्वं अकरणे प्रत्यवायश्चेति स्फुटं प्रमाणतस्साधितं । तथाहि—"अथ विष्णु पूजाकालः । तत्र विष्णुधर्मोत्तरे"—

'एककालं द्विकालं वा त्रिकालं पूजयेद्धरिम् ।
अपूज्य भोजनं कुर्वन् नरकाणि व्रजेन्नरः ॥'

नारदीये—

प्रातर्मध्यन्दिने सायं विष्णुपूजां समारभेत् ।
यथासन्ध्या तथानित्या देवपूजा स्मृता बुधैः ॥
अशक्तो विस्तरेणैव प्रातः सम्पूज्यकेशवं ।
मध्याह्नेचैव सायञ्च पुष्पाञ्जलिमपि क्षिपेत् ॥
मध्याह्नेवा विस्तरेण संक्षेपेणाथवा हरिं ।
सम्पूज्य भोजनं कुर्यादन्यथा नरकंव्रजेत् ॥
निमित्तेषु च सर्वेषु तत्काले च विशेषतः ।
पूजये द्देवदेवेशं द्रव्यं सम्पाद्य यत्नतः ॥

इति अत्र हरिशब्दस्य 'ब्रह्माणम्' इत्याद्युक्तदिशा ब्रह्मरुद्रादिसहारकारक-इति केशवशब्दस्य 'क इति ब्रह्मणोनाम, इत्याद्यनुसारेण ब्रह्मरुद्रस्रष्टा इतिं चार्थ एवं (वै. ना.दी आ. कां) पुराणे—

विष्णुपूजा विहीनस्य दत्तं चेष्टं हुतं श्रुतम् ।
तपश्च व्यर्थतां यान्ति प्रेतालङ्कारवद्द्विजे ॥
मातृवत्परिरक्षन्तं सृष्टिसंहारकारकम् ।
योनार्चयति वै विष्णुं सोऽक्षयं नरकं व्रजेत् ॥

[1] सात्वतं विधिमास्थायगीतस्सङ्कर्षणेनयः ॥

---

कूर्मपुराणे—

एकाहमपि न स्थेयं विनाकेशवपूजनम् ।
भुङ्क्ते स याति नरकं सूकरेष्वपि जायते ॥
अनर्चयित्वा गोविन्दं यैर्भुक्तं धर्मवर्जितैः ।
शुनोविष्ठा समं चान्नं नीरं च सुरया समम् ॥

स्कान्दे—

केशवार्चा गृहे यस्य न तिष्ठति महीपते ।
तस्यान्नं नैव भोक्तव्यमभक्षणसमं स्मृतम् ॥ (वी. मि. पू. प्र.)
ब्रह्मचारी गृहस्थोऽपि वानप्रस्थोऽथ भिक्षुकः ।
केशवाराधनं हित्वा नैव याति परां गतिम् ॥ १८६॥१७ भा.आनुष.

इत्यादि वचनेष्वपि विष्णुपूजाया अकरणे प्रत्यवायस्स्फुटः देवतान्तर-पूजनाकरणे प्रत्यवाय बोधकानि सर्वसम्मतान्यकल्पितानि वचनानि नोपलभ्यन्ते । अतो देवतान्तरपूजनं काम्यम् इति वृद्धाः अत एव ॥ (कू. पु. व्या. स्मृ.)

न विष्ण्वाराधनात्पुण्यं विद्यते कर्मवैदिकम् ।
तस्मादनादिमध्यान्तं नित्यमाराधयेद्धरिम् ॥

इत्यादि वचनेषु उत्पत्तिलयशून्यस्य ब्रह्मरुद्रादिसंहर्तुर्विष्णोराराधनस्य नित्य-कर्तव्यत्वं तत्तदुपकरणमन्त्रप्रशंसनं एतद्विशेषमन्तरारुद्राराधनस्य कर्तव्यता-मात्रं प्रतिपादितं संगच्छते । अत्र 'शौनकोहं प्रवक्ष्यामि नित्यं विष्णव-र्चनं परं । प्रवः पान्थ मन्धसो धियेत्यर्धर्चस्य विधानत' इति व्यास-स्मृत्युपात्ता ऋग्वेदश्रुतिर्मूलं । एवं मैत्रायणीयश्रुतिरपीत्युत्तरत्र निरूपयिष्यते ।

[1] सात्वतंविधिमिति । सात्त्वतशब्दश्च भगवति तच्छास्त्रे तत्प्रतिपाद्यधर्मे तद-नुष्ठातृभगवद्भक्तपुरुषेषु इति चतुर्ष्वर्थेषु प्रयुज्यते । तत्र उद्योगपर्वणि ६९–७,

शान्तिपर्वणि. नारायणाख्यानेच–३५२–१३. सात्त्वत शब्दो भगवति निरुक्तः 'तन्त्रंसात्त्वत माचष्ट १ भाग' 'सात्त्वतोक्तेन विधिना ११६–१. वि-धर्मो' इत्यत्रतत्त्प्रातिपादक शास्त्रे 'धर्मंच मत्तो गृह्णीष्वसात्त्वतं, शान्ति ३५८–२९' इत्यादौ तत्प्रातिपाद्यधर्मे 'एवमेषमहान्धर्मः—सात्त्वतैर्धार्यते सदा ५५' 'वासुदेवश्च सात्त्वतैः वि. पु' इत्यत्र तदनुष्ठातृपुरुषेषु प्रयुक्तः। सात्त्वतमित्यत्र सत्वतः अयं सात्वतः तं सात्वतं इति शब्दव्युत्पत्तिः। सत्वान् भगवान् इत्यर्थः अतः सात्वत भागवतशब्दयोरैकरूप्यमित्यागम-प्रामाण्ये यामुन मुनयः प्राहुः। ज्ञानादि गुणवान् भगवच्छब्दार्थः। पार-मार्थिक (ज्ञानादिगुण) वान् स त्वच्छब्दार्थ इति विशेषः। एतेनगुणानाम-विद्याकल्पितत्वं नास्तीति बोधितम् ॥

'तन्त्रंसात्वतमाचष्ट' इति भागवतं वैष्णवं पंचरात्रागममिति व्याकुर्वतः श्रीधराचार्यस्यापि सत्वान् विष्णुरिति विवक्षितमिति प्रतीयते ॥

एवं च भगवद्व्यतिरिक्तेष्वप्यर्थेषु संबन्धभेदेऽपि प्रकृत्यर्थ एकरूप एवेति यामुनमुनीनामाशयः। सात्वतं विधिमित्यत्रविधिः प्रयोगविधिर्विव-क्षितः। पञ्चरात्रस्य कल्पसूत्रवत् श्रुतिविहित चक्राङ्कनभगवराधनादेः प्रयोग-विधित्वं (पं-सं.) 'श्रुतिमूल मिदंतन्त्रं प्रमाणं कल्पसूत्रवत्, (न्या.प। प.म.भं) इत्यादिषु स्फुटं ॥

एतेन पञ्चरात्रेऽर्चनस्य पूर्ण उपदेश इति तस्यैव सर्वोपादेयत्वं बोधितम् ॥

'बह्वल्पं वा स्वगृह्योक्तं यस्य कर्म प्रकीर्तितम्।
तस्य तावति शास्त्रार्थे कृते सर्वं कृतं भवेत् ॥'

इति कात्यायनवचनन्तु सर्वाङ्गोपसंहाराभावेऽनुकल्पविधानार्थमित्युक्तं शाखा-न्तराधिकरणकौस्तुभे खण्डदेवेनेति न तद्विरोधः। आश्वलायनश्च 'तद्येके-

च न छान्दोग्येवाऽऽध्वर्यवेवाहौत्रामर्शास्समाम्नाता न तान्कुर्यादकृत्स्नत्वा द्धौत्रस्य २८-१३-३२, इति सूत्रे सामवेदेयजुर्वेदे ये होत्राभासा स्तेनकार्याः पूर्णप्रयोगाविरहादिति व्यवस्थापयति । एतन्नयायेन यत्र पञ्चरात्रे प्रयोग-पूर्तिस्तदुक्तरीत्यैव शक्तैर्भगवदाराधनं कार्यं । अन्यथा 'प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्तते । न साम्परायिकं तस्य दुर्मतेर्विद्यते फलम्, ११. ३, इति मनूक्तदोषानतिवृत्तेरिति समर्थितं पाञ्चरात्ररक्षायाम् ॥

नारायणाख्याने श्वेतद्वीपनिवासिनां उपरिचरवसोश्च वृत्तान्तयोः पञ्चकालविभागेनार्चनं आश्वमेधिके च अर्चने मूर्तिमन्त्रविशेषादिकं च स्पष्टम् ॥

विष्णुधर्मोत्तरे च (१.खं.६१.अ.) शङ्करगीतायां संहितोक्त अच्छिद्र पञ्चकालज्ञस्य अखण्डकारित्वमभिधाय 'रामाभिगमनं पूर्वमुपादानमतःपरं । इज्या स्वाध्यायकालौ च योगकालस्तथैव च ॥ ६.श्लो तेषां प्रत्येकशो वक्ष्ये विधिं ते भृगुनन्दन । ७. इत्युपक्रम्य संहितोक्तबलमन्त्रमुक्त्वा—

भगवान्वासुदेवस्तु देवस्सङ्कर्षणस्ततः । प्रद्युम्नश्चानिरुद्धश्च प्रभावोऽय मुदाहृतः ॥ ६३. अ.३४. चत्वार एते धर्मज्ञ वासुदेवाः प्रकीर्तिताः । भगवच्छब्दवाच्याश्च सर्वभूतभवोद्भवाः ॥ ३७ श्लो. तदेतत्पठ्यते सूक्ते पौरुषे द्विजसत्तम । पादोस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि ॥ ४० श्लो. इत्यन्तेन वासुदेवादिमूर्तिचतुष्टयस्य वैकुण्ठसंहितोक्त दिशा पुरुषसूक्तप्रति-पाद्यत्वमप्यभिधाय पञ्चकालविधिर्निरूपितः ॥

श्रीभागवते एकादशे उद्धवगीतायां (२७ अ.)—

'क्रियायोगं समाचक्ष्व भवदाराधनं प्रभो ।
यस्माद्ये त्वां यथार्चन्ति सात्त्वतास्सात्त्वतर्षभ ॥ १ ॥
एतद्वदन्ति मुनयो मुहुर्निश्रेयसं नृणाम् ।
नारदो भगवान्व्यास आचार्योऽङ्गिरसस्सुतः ॥ २ ॥

[1] द्वापरस्य युगस्यान्ते आदौ कलियुगस्य च ।
इत्यनेन पञ्चरात्रोक्तविधिना वासुदवोऽर्चनीय इत्यवादीत् ॥

---

एतद्वै सर्ववर्णानामाश्रमाणां च सम्मतम् ।
श्रेयसामुत्तमं मन्ये स्त्रीशूद्राणां च नारद ॥ ४ ॥

इति उद्धवप्रश्नस्य—

यथास्वनिगमेनोक्तं द्विजत्वं प्राप्य पूरुषः ।
यथा यजेत मां भक्त्या श्रद्धया तन्निबोध मे ॥ ८ ॥
उभाभ्यां वेदतन्त्राभ्याम्मह्यं तूभयसिद्धये ॥ २४ ॥
अर्चादिषु यथा यत्र श्रद्धा मां तत्र चार्चयेत् ॥ ४६ ॥
एवं क्रियायोगपथैः पुमान्वैदिकतान्त्रिकैः ।
अर्चन्नुभयतस्सिद्धिं मत्तो विन्दत्यभीप्सिताम् ॥ ४७ ॥

इत्यन्तप्रतिवचने वैदिकतान्त्रिकमिश्रपूजानिरूपणेन पञ्चरात्रस्य वेदाविरोधः । तदुक्तार्चनस्य सर्ववर्णाधिकारिकत्वं विशिष्य द्विजाधिकारिकत्वं द्वादशे ११ अ. वेदतन्त्राभ्यां अर्चनीयस्य वासुदेवस्य विग्रहादिविशेषः चातुरात्म्यं विश्व-तैजसप्राज्ञतुरीयरूपत्वं च स्पष्टमुक्तम् ॥

एवं 'यदप्यस्य भगवतोऽभिगमनादिलक्षणमाराधनमजस्रमनन्य-चित्ततया अभिप्रेयते तदपि न प्रतिषिध्यते । श्रुतिस्मृत्योरीश्वरप्रणिधानस्य प्रसिद्धत्वात्' इति (२ अ. २ पा. ४२ सू.) शङ्करसूत्रभाष्ये 'क्रियायोगश्च तत्प्राप्त्युपायस्तत्रोपदिश्यते अभिगमनोपादानेज्यास्वाध्याययोगैः भगवन्तं वासुदेवमाराध्य तमेव प्रतिपद्यत इति तदेतत्सर्वं श्रुतिप्रसिद्धमेव । यदत्र देवार्चनध्यानसमाधिलक्षणं कर्मज्ञानं चोपादिश्यते तत्सर्वं प्रमाणीक्रियते' इति भास्करभाष्ये च पाञ्चकालिकार्चनस्य श्रुतिसिद्धत्वं स्फुटमुक्तम् ॥

[1] द्वापरस्येत्यादि यस्मिन्नश्वकाले वासुदेवस्य चतुरात्मनोऽवतारः

पुरुषाणां ज्ञानशक्तिमान्द्यं पर्यालोच्य व्यासेन वेदविभागकरणं च तस्मिन् 'ध्यायन् कृते यजन् यज्ञै स्त्रेतायां द्वापरेऽर्चयन्' इत्युक्तदिशाऽर्चनप्रधान-काल इति भावः। एवं 'कृते नारायणः शुद्धः सूक्ष्मरूप उपास्यते। त्रेतायां यज्ञरूपेण पञ्चरात्रैस्तुद्वापरे' (वरा. ७०. अ. २४.) इति हेमाद्र्यु-दाहृतवचनेऽप्ययमर्थोऽवसेयः। एतदुत्तरं 'कलौमत्कृतमार्गेण वहुरूपेण तामसैः। इज्यते द्वेषबुद्धया सः परमात्मा जनार्दनः। २५. इत्यारभ्य 'युगेषुत्रिषु भूयांसो मामुपैष्यन्ति मानवाः। अन्त्येयुगे प्रविरला भविष्यन्ति मदाश्रयाः। एष मोहं सृजाम्याशु योजनं मोहयिष्यति। २५ त्वंचरुद्र महाबाहो मोहशास्त्राणि कारय। दर्शयित्वाल्पमायासं फलं शीघ्रं प्रदर्शय। ३६ आ. प्रा. कुहकंचेन्द्रजालादि विरुद्धा चरणानिच। दर्शयित्वा जनं सर्वं मोहयाशु महेश्वर,। ३७ आ. प्रा. इत्यन्तसन्दर्भे कलौ भगवद्भक्त-वाहुल्याभाव उक्तः एवं तत्रैव पूर्वं श्वेतद्वीपे भगवन्नारदसंवादेऽपि।

'पौरुषं सूक्तमास्थाय ये यजन्ति, द्विजास्तु मां। संहिता जपमास्थाय ते मां प्राप्स्यन्ति (मानवाः) ब्राह्मणाः। (वरा. ६६ अ. १० श्लो श्रु. प्र.) अलभे वेदमन्त्राणां पञ्चरात्रोदितेनहि। मार्गेण मां प्रपद्यन्ते ते मां प्राप्स्यन्ति मानवाः। ११ ब्राह्मणक्षत्रियविशां पञ्चरात्रं विधीयते। शूद्रादीनां नतच्छोत्र पदवीमुपयास्यति। १२ एवं मयोक्तं विपेन्द्र-पुराकल्पे पुरातनं। पञ्चरात्रं सहस्राणां यदि कश्चिद्ग्रहिष्यति। १३ कर्मक्षये च मां कश्चिद्यदिभक्तो भविष्यति। तस्य वेदाः पञ्चरात्रं नित्यं हृदि वसिष्यति। १४ इतरे राजसैर्भावैस्तामसैश्च समावृताः। भविष्यन्ति द्विजश्रेष्ठ मच्छासनपराङ्मुखाः। १५ कृतं त्रेता द्वापरश्च युगानित्रीणिनारद। सत्त्वस्था मां समेष्यन्ति कलौ रजस्तमोऽधिकाः। १६ अन्यच्च ते वरंदाम्नि शृणु नारद साम्प्रतं। यदिदं पञ्चरात्रं मे शास्त्रं परमदुर्लभं। १७ तद्भवा-

न्वेत्स्यते सर्वं मत्प्रसादान्नसंशयः। वेदे न पञ्चरात्रेण भक्त्या यज्ञेन च द्विज। प्राप्योहं नान्यथाप्राप्यो वर्षलक्षैरपि द्विज। १८ (वरा. ६६.) इति अत्र वैदिक १० तान्त्रिक ११ मिश्र १८ अर्चनत्रयं प्रतिपादितम्। यथोक्तं पाञ्चरात्ररक्षायां 'अलाभे वेदमन्त्राणां पञ्चरात्रोदितेन वा, इति स्मृतिरपि प्रणवाष्टाक्षरद्वादशाक्षरादिमन्त्राणामाथर्वणरहस्याम्नायाद्यधीततया वेद-मन्त्रशब्देन सङ्ग्रहात् पञ्चरात्रोदितेन वा इत्ययमंशः तान्त्रिकसंज्ञितप्रत्यक्षेतर-श्रुतिमूलमन्त्रान्तरविषयतयायोज्यः' इति—उदाहृतवचनेषु आद्यन्तयोः वैदिक-मिश्रार्चने विवक्षिते इत्याचार्यपादानामाशयः। युक्तं चैतत्। बृहन्नारदीये अष्टाक्षरादेः 'प्रणवं चापैनिषदं द्वादशाक्षरमेव च। अष्टाक्षरमहावाक्य-मित्यादीनि च यो जपेत्। स्वाध्यायश्च समाख्यातो योगसाधनमुत्तमं।' इत्यत्र स्वाध्यायत्वयोगसाधनत्वयोः अश्वमेधिके च (१०४ अ. ८५) अर्चन करणत्वस्य व्यक्तमुक्तेः अनुशासनिके (१८६) इतिहाससमुच्चये (३२) च पुण्डरीकनारदसंवादे ब्राह्मणश्रेष्ठस्य पुण्डरीकस्य अष्टाक्षरनिष्ठत्वस्य पाद्मे च तत्रैव 'वैदिकैस्तान्त्रिकैश्चैव तथा पौराणिकैरपि। आराधयतिसर्वेशं ततस्सिद्धि-मवापसः, (६. ८१. ४३.) इत्यादिना अष्टाक्षरादिवैदिकतान्त्रिकोभय-निष्ठत्वस्य प्रतिपादनात्। अत्राऽपि 'वेदेनपञ्चरात्रेण' इत्युपसंहारे द्विजस्य मिश्राधिकारित्वोक्तेः मध्ये पञ्चरात्राधिकारिणो दुर्लभत्वस्य 'यस्य हृदि वेदः पञ्चरात्रञ्च वसिष्यति तदितरेषां राजसतामसभावसमावृतत्वभगवच्छासनपरा-ङ्मुखत्वयोश्च कथनात्। 'अलाभे वेदमन्त्राणा'मित्यत्र पञ्चरात्रोदितस्य अवैदिकमात्राधिकारिकत्वप्रतीतिनिरासाय 'ब्राह्मणक्षत्रियविशां पञ्चरात्रं विधी-यते' इत्यनन्तरमेव पञ्चरात्रस्य वैदिकाधिकरिकत्वस्य स्फुटमभिधानात्। 'स्त्रीशूद्रद्विजबन्धूनां त्रयीनश्रुतिगोचराः। इति भारतमाख्यानं कृपया मुनिना कृतम्' इति बचनस्य भारतस्य वैदिकाधिकारिकत्वाऽबाधकतावदस्याऽपि तदबाधकत्वाच्च। शिवार्कमणिदीपिकायामस्मिन्वचने पञ्चरात्रस्यावैदिकाधिकारि-

कत्वोत्प्रेक्षणस्यानुचितत्वात्। शूद्रकमलाकरे तु अस्मिन्वचने 'शूद्रादीनाञ्चतच्छ्रोत्रपदवी'मिति पाठमभ्युपेत्य पाञ्चरात्रिकमन्त्रेषु शूद्रस्याधिकारस्स्मृतिकौमुद्यामुक्त इत्यभिहितं तत्रापि तान्त्रिकमन्त्र एव विवक्षितः न तु वैदिकाष्टाक्षरादिः तत्र शूद्रस्यानधिकारस्य पञ्चरात्र एव स्फुटत्वात् 'वैदिकोमिश्रितोवापि विप्रादीनां विधीयते तान्त्रिको विप्रभक्तस्य शूद्रस्यापि प्रकीर्तितः' इति देवपूजाप्रकरणे शूद्रकमलाकरोदाहृतपाद्मवचनाच्च ॥

वस्तुतस्तु 'शूद्रादीनांनतच्छ्रोत्रपदवी, मिति (आ. प्रा.) (श्रु. प्र.) पाठएवोचितः प्राचीनलिखितकोशेषु बहुषूपलंभात् 'मोक्षचिन्तामातिक्रम्य योऽन्यचिन्तापरिश्रमः। हरिसेवाविहीनोयस्सपशुर्योनितः पशुः। निगमागमतन्त्राणि नाध्यापयति यो द्विजः। नश्रृणोति च पापात्मा सदुष्ट इति चोच्यते (५. ५६) इति भविष्ये मध्यमपर्वणि द्विजस्यैव पञ्चरात्रश्रवणव्यतिरेके दोषकथनाच्च। शूद्रकमलाकरेऽपि 'अन्यैस्तु नतच्छ्रोत्रेति पाठोलिखितः' इत्यारभ्य वाराहवचनैः चातुर्वर्ण्यदीक्षां प्रसाध्य 'एवं यत्रविशेषवचनं तत्रैवशूद्रस्याधिकार' इत्युक्तं। अत्रान्यैस्त्विति बहुवचनेन 'न तच्छ्रोत्रे'तिपाठो बहुजनसम्मत इति--यत्रविशेषवचनमित्यनेन 'अलाभेवेदमन्त्राणां पञ्चरात्रोदितेनहि' इत्यादिवचनैः तान्त्रिकमन्त्रदीक्षादौ शूद्रस्याधिकारः न तु पञ्चरात्रश्रवणे निषेधादितिचबोधितं। अत एव शान्तिपर्वणि 'अवश्यं वैष्णवोदीक्षां प्रविशेत्सर्वयत्नतः। दीक्षिताय विशेषेण प्रसीदेन्नान्यथाहरिः। वसन्ते दीक्षयेद्विप्रंग्रीष्मे राजन्यमेवच। शरदस्समये वैश्यं हेमन्तेशूद्रमेव च। स्त्रियं च वर्षाकालेतु पञ्चरात्रविधानतः, (आ. प्रा.) इति चातुर्वर्ण्यदीक्षोक्तिस्संगच्छते ॥

'आगमोक्तैर्वेदमन्त्रैः प्रतिष्ठाप्यविशेषतः। पश्चाद्वा अर्चनं कार्यं यथाशास्त्रानुसारतः। ६. ८३. अ. २५. इति पाद्मे 'वैष्णवैर्द्विजसत्तमै, रित्यादिना वैष्णवद्विजसत्तमसामान्यस्य प्रतिष्ठाऽर्चनादिविधिमुक्त्वा अन्ते 'श्रौतस्मार्तागमोक्ताना मर्चनंविधिना द्विजः। कुर्याद्भक्त्या यथार्हं च विष्णोः प्रयतमानसः।

वक्ष्यतिचाऽश्वमेधिकेऽपि—

शृणु पाण्डव तत्सर्वमर्चनाक्रममात्मनः ।
स्थण्डिले पद्मकं कृत्वाचाष्टपत्रंसकर्णिकम् ॥ १०५. ८४.
अष्टाक्षरविधानेन ह्यथवा द्वादशाक्षरैः ।
वैदिकैरथमन्त्रैश्च मम सूक्तेनवापुनः ॥ ८५.
स्थापितं मां ततस्तस्मिन्नर्चयीत विचक्षणः ।
पुरुषंच ततस्सत्य मच्युतं च युधिष्ठिर ॥ ८६.

---

६. २८०. ५४. यथोपादिष्टं गुरुणा तथाकुर्वीतवैष्णवः । श्रौतं वैखानसं प्रोक्तंवासिष्ठंस्मार्तमुच्यते । ५५. पञ्चरात्रविधानंयद्दिव्यागम इतीरितम् । क्रियालोपोनकर्तव्यः विष्णोराराधनंपरम् । ५६. इत्युक्तौद्विजस्य श्रौतविकल्पेन आगमोक्तार्चनप्रतिपादनमात्रेण श्रौताऽनधिकारिणश्शूद्रस्यतान्त्रिकमन्त्रेणाऽर्चनस्य नकापिक्षतिः । एवमत्रोपसंहारेऽपि 'क्रियालोपोनकर्तव्य, इत्यनेन पञ्चरात्रोक्तं पूर्णमर्चनं शक्तैस्सर्वैः कार्यमिति निर्णयेन वैखानसै श्श्रौतं तदन्यैरशक्तैस्स्मार्तं कार्यमिति उपक्रमे यथार्हमित्यत्र विवक्षितामिति प्रतीयते ॥

वैदिकन्तु जपं कुर्यात्पौराणं पाञ्चरात्रिकम् ।
यो वेदस्तानि चैतानि यान्येतानि च सा श्रुतिः ॥

पञ्चरात्रविधानेन स्थण्डिले वाऽथपूजयेत् ।

इति वीरमित्रोदाहृतबृहत्पराशरवचनेऽपि पञ्चरात्रविधानेन पूजनं सर्ववर्णसाधारणम् तत्र वैदिकामिश्रयोः द्विजस्य तान्त्रिके शूद्रविप्रभक्तयोरधिकार इत्येवभिदा। 'सर्वेचागममार्गेण कुर्युर्वेदानुसारिणः' इति (वी-मि.) बोधायनवचनात् ॥

उपायोयं परप्राप्तौ परमः परिकीर्तितः ।
नारायणस्यानुध्यानमर्चनं यजनं स्तुतिः ॥ २५३. २ ॥

इत्युपक्रम्य —

जपश्चतुर्विधः प्रोक्तो वैदिकस्तान्त्रिकोऽपि च ।
पौराणिकश्च विद्वद्भिः कथितः स्मार्त एव च ॥ ४ ॥

इति जपचातुर्विध्यमभिधाय—

इत्युक्ताऽष्टाक्षरध्यानजपादिश्रेयसंयुता ।
यमेनानुगृहीताभूत्पुण्यलोकानिवासिनी ॥ १० ॥

इत्युपसंहारे आश्वमेधिके विप्रकन्यायाः अष्टाक्षरजपाभिधानेऽपि स्त्रीणां वैदिकाष्टाक्षरमन्त्रजपस्य पञ्चरात्रेऽपि निषेधे तान्त्रिकाष्टाक्षरमन्त्रविषयं तदिति न विरोध इत्यन्यत्र व्यक्तम् ॥

स्मृतिपुराणयोरैक्यपृथग्भावविवक्षया त्रेधा चतुर्धा च विभाग उपपद्यते—

यजन्ति वेदतन्त्राभ्यां परं जिज्ञासवो नृप ।
नमस्ते वासुदेवाय नमस्सङ्कर्षणाय च ।
प्रद्युम्नायानिरुद्धाय तुभ्यं भगवते नमः ॥ ११·५·२९ ॥
इति द्वापर उर्वीशस्तुवन्ति जगदीश्वरम् ।
नानातन्त्रविधानेन कलावपि यथाशृणु ॥ ३१
कलौ खलु भविष्यन्ति नारायणपरायणाः ।
क्वचित्क्वचिन्महाभागाद्रमिडेषु च भूरिशः ॥ ३८.

इति हेमाद्रिपरिशेषखण्डाद्युदाहृत भागवत वचनैककण्ठ्यादपि ' अलाभेवेदमन्त्राणा, मित्यस्य यथोक्त एवार्थः । कल्पतरु शास्त्रदर्पणवाक्यैः पञ्चरात्रस्य व्यामोहनार्थतावचनानि पुराणेषु प्रक्षिप्तानीति ' प्राक्सूर्यमुखनिस्सृतम् ' इत्येतद्विवरणावसरेनिरूपयिष्यते । शूद्रस्याऽपि तान्त्रिकमन्त्रेणार्चनंवाराहभागवतपाद्मादिष्वप्युक्तं । अतश्च ' ब्राह्मणैःक्षत्रियै ' रित्यादिकं सुष्ठूक्तं । पञ्चरात्रार्चनस्य सर्वाश्रमिभिरनुष्ठेयता नारायणाख्यानोपक्रमे वक्ष्यते । वाराहभागवतादौ अत्रापि प्रकरणान्तरे उक्तं कलौ भगवद्भक्तदौर्लभ्यं भावि समालोच्य ' आदौकलियुगस्यचे, त्युक्तमितिदिक् ॥

अनिरुद्धं च मां प्राहुर्वैखानसविदोजनाः ।
अन्येत्वेवं विजानान्ति मां राजन्पाञ्चरात्रिकाः ॥८७.
वासुदेवं च राजेन्द्र सङ्कर्षणमथाऽपि वा ।
प्रद्युम्नं चानिरुद्धं च चतुर्मूर्तिं प्रचक्षते ॥ ८८.
एताश्चान्याश्च राजेन्द्र संज्ञाभेदेन मूर्तयः ।
विद्धचनर्थान्तरा एव मामेवं चार्चयेद्बुधः ॥ ८९ ॥ इति॥

(एतानि वचनानि पाञ्चरात्ररक्षायां पराशरमाधवीये चोदाहृतानि)

एतेन वैखानसव्यतिरिक्तैः शक्तैः पाञ्चरात्रविधिना अर्चनं कार्यमिति भीष्मपर्ववचनार्थः पर्यवस्यति । भीष्मपर्वणि अनन्तरम्—

'वासुदेवो महद्भूतं सर्वदैवत दैवतम् ।
न परं [1]पुण्डरीकाक्षाद्दृश्यते भरतर्षभ ॥ २.
ये च कृष्णं प्रपद्यन्ते नते मुह्यन्ति मानवाः ।

इत्यनेन उद्योगपर्वोक्तार्थं विशदीचकार ॥

शान्तिपर्वणि च राजधर्मे— ७. अ. ३५. १२. अ. ८. ९. १०. ११. श्लो. 'त्यागेनैके' इति श्रुति घटकस्य त्यागशब्दस्य. १३. ४. अष्टाक्षरघटकस्य नमश्शब्दस्य चार्थं निष्कृष्य—

अनादि निधनं विष्णुमात्मयोनिं सनातनम् । ४६-१५.

वासुदेवमथाऽस्तुवत् । इत्युपक्रम्य—

यं वाकेष्वनुवाकेषु निषत्सूपनिषत्सु च ।
गृणन्ति सत्यकर्माणं सत्यं सत्येषु सामसु ॥ २८.॥
चतुर्भिश्चतुरात्मानं सत्त्वस्थं सात्वताम्पतिम् ।
यं दिव्यैर्देवमर्चन्ति गुह्यैः परमनामभिः ॥ २९ ॥

---

[1] अत्र पुण्डरीकाक्षशब्देन वासुदेवस्य दिव्यमङ्गळविग्रहयोग उक्तः ।

यमनन्यो व्यपेताशी रात्मानं वीतकल्मषम् ।
इष्ट्वानन्त्याय गोविन्दं पश्यत्यात्मान मात्मनि ॥ ३२ ॥
यमेकं बहुधात्मानं प्रादुर्भूतमधोक्षजम् ।
[1]मान्यभक्ताः क्रियावन्तो यजन्ते सर्वकामदम् ॥ ३५ ॥

इत्यनेन एकायन शाखाघटकस्य अनुवाकस्थानापन्नस्य भागस्य वाकेतिनाम उपनिषत् स्थानापन्नस्य भागस्य निषादितिनाम पञ्चरात्र प्रसिद्धं विर्दिश्य चतुरात्मन उभयतात्पर्य विषयत्व अनन्याराध्यत्व देवतान्तर भक्तनर्चनीयत्वाभिधानमुखेन भीष्मपर्वोक्तार्थं प्रकटीकृत्य 'नारायणपरम्ब्रह्म' १२८. त्यादिना नारायणानुवाकोक्तम्परतत्वान्निरणैषीत् ॥

मोक्षधर्मेच वासुदेवेति विख्यातः तं विदित्वाऽश्नुतेऽमृतम् । १०४. १२. इत्यत्र वासुदेव ज्ञानस्य मोक्षसाधनत्वम्—

नारायणं हृषीकेशं गोविन्दमपराजितम् ।
तत्त्वेन भरतश्रेष्ठ ! श्रोतुमिच्छामि केशव ॥ २०६ ॥ २.

इति युधिष्ठिरप्रश्नस्य भीष्मप्रतिवचनेषु—

ईदृशोऽसौ हृषीकेशो वासुदेवः परात्परः ।
केशवो भरतश्रेष्ठ भगवानीश्वरः प्रभुः ॥ ५ ॥
सोऽग्रजं सर्वभूतानां सङ्कर्षणमचिन्तयत् ।
प्रद्युम्नमसृजत्तस्मात्सर्वतेजः प्रकाशकम् ।
अनिरुद्धस्ततो जज्ञे सर्वशक्तिर्महाद्युतिः ॥
तस्मात्सं जज्ञिरे देवाः ब्रह्मविष्णु महेश्वराः ।
सृष्टिस्थित्यन्तकर्माण स्त्रयस्ते सुमहौजसः ॥ १४ ॥

---

[1] अन्यभक्ताः मायजन्ते इत्यन्वयः । एतेन पूर्वश्लोके अनन्य इत्यस्य अन्यभक्तिशून्य इत्यर्थः । अनन्या च भक्त्या त्व इति हि वक्ष्यते ॥

मधुसूदनमित्याहुः ऋषभं सर्वसात्वताम् ।

इत्यन्तेन व्यूहसृष्टिं ब्रह्मादिसृष्टिं मधुसूदनसंक्षिप्तचरित्रं चाभिधाय '

तदेवकृष्णोदाशार्हश्श्रीमान् श्रीवत्सलक्षणः ।
न भूतसंघसंस्थानो देहोऽस्य परमात्मनः ॥ ६० ॥
य एनं प्रति वर्तन्ते वेदान्तानि च सर्वशः ।
भक्तिहीनाः नतेयान्ति नित्यमेनं कथंचन ॥ ६३ ॥

इत्यनेन वासुदेवस्य भक्तिविधुरैर्वेदान्तैरप्यलभ्यत्वम् ।

किंनुस्मरन् कुरु श्रेष्ठ मरणे समुपस्थिते ।
प्राप्नुयात्परमां सिद्धिं श्रोतुमिच्छामि तत्त्वतः ॥ २१०. २.

इति युधिष्ठिरप्रश्नस्य नारायणनारदसंवादरूप भीष्मप्रतिवचनेषु नारायणोक्तौ मोक्षोपायप्रपत्तिकरणभूतवासुदेवद्वादशाक्षरमन्त्रस्यान्तकालेऽनुस्मरणीयत्वम् ॥ १०. ११.

चतुर्मूर्ते परं धाम लक्ष्म्यावासपरार्चित ।
सर्वावास नमस्तेस्तु वासुदेव प्रधानकृत् ॥ २९ ॥
चिन्तयन्तो हि यं नित्यं ब्रह्मेशानादयः प्रभुं ।
निश्चयं नाधिगच्छन्ति तमस्मि शरणं गतः ॥ ३३ ॥
कामक्रोधविनिर्मुक्ताः रागद्वेषविवर्जिताः ।
मान्यभक्ता विजानन्ति नपुनर्भवका द्विजाः ॥ ४४ ॥
एकान्तिनो हि निर्द्वन्द्वाः निराशीः कर्मकारिणः ।
ज्ञानाग्निदग्धकर्माणः त्वां विशन्ति विचिन्तकाः ॥ ४५ ॥
अशरीरं शरीरस्थं समं सर्वेषु देहिषु ।
पुण्यपापविनिर्मुक्ताः भक्तास्त्वां[1] प्रविशन्त्युत ॥ ४६ ॥

---

[1] अत्र प्रवेशप्राप्तिः पूर्वोत्तरवचनानुसारात् ।

इति नारदोक्तौ चतुर्मूर्तेः वासुदेवस्य ब्रह्मेशानादिभिश्चिन्तनीयस्य शरणागत्युद्देश्यत्वं अनन्यभक्तज्ञेयत्वं एकान्तिभक्तप्राप्यत्वम्—

श्रुत्वैतन्नारदो वाक्यं दिव्यं नारायणेरितम् ।
अत्यन्तभक्तिमान्देवे एकान्तित्वमुपेयिवान् ॥ ८४ ॥
नारायणमृषिं देवं दशवर्षाण्यनन्यभाक् ।
इदं जपन्वैप्राप्नोति तद्विष्णोः परमंपदम् ॥ ८५ ॥
किन्तस्य बहुभिर्मन्त्रैः भक्तिर्यस्य जनार्दने ।
नमो नारायणायेति मन्त्रस्सर्वार्थसाधकः ॥ ८६ ॥

इति भीष्मोक्तौ अष्टाक्षरमन्त्रजापि भक्तप्राप्यत्वं च —भीष्मेण युधिष्टिरं प्रति गरुडेनात्मानं प्रत्युक्त श्रीभगवन्महिमानुवादे—

अनेके मुनयस्सिद्धाः मानसोत्तरवासिनः ।
पप्रच्छुर्मां महाप्राज्ञाः वासुदेवपरायणाः ॥ २११. ११.
पक्षीन्द्र वासुदेवस्य तत्त्वं वेत्सि परं पदम् ।

इति मुनिप्रश्नस्य गरुडप्रतिवचनोक्त्यनन्तरम्—

नान्यथा शक्यरूपोसौ ज्ञानगम्यः परः पुमान् ।
अनन्यया च भक्त्या च प्राप्तुं शक्यो महा हरिः ॥
तस्माद्राजेन्द्र सर्वात्मा वासुदेवः प्रधानकृत् ।
ज्ञानेन[1] भक्त्या सुलभो नान्यथेति मतिर्मम ॥ ७१.

---

[1] 'भक्तास्त्वां प्रविशन्त्युत' 'भक्तिहीनानते यान्ति' इति पूर्वं अन्वयव्यतिरेकाभ्यां प्राप्तेर्भक्तिसाध्यत्वं यदुक्तं तदनेन दृढीकृतम्—'अनन्यया च भक्त्याच' इति समुच्चयेऽपि ज्ञानानन्तरं भक्त्युत्कीर्तनात् भक्तेरेव मोक्षप्राप्तौ साक्षात्साधनत्वमिति प्रतीयते । तेन—

वासुदेवेति विख्यातस्तंविदित्वाऽश्नुतेऽमृतम् ।

इत्यत्र भक्तिप्राप्यत्वं । श्वेतकेतुसुवर्चलोपाख्याने युधिष्ठिरं प्रति नारदोक्तौ—

भर्ता च तामनुप्रेक्ष्य नित्यनैमित्तिकान्वितः ।
परमात्मनिगोविन्दे वासुदेवे महात्मनि ॥ २२४-१०३.
समाधाय च कर्माणि तन्मयत्वेन भावितः ।
कालेन महता राजन्प्राप्नोति परमाङ्गतिम् ॥ १०४.

---

इति पूर्वोदाहृतवचनेऽपि वेदनं भक्तिद्वारा मोक्षसाधनमिति वा भक्तिरूपमिति वा विवक्षितं । एवमुदाहरिष्यमाण वचनेष्वपिध्यानं भक्तिरूपमेव मोक्षसाधनमिति च । तदनेन 'परात्परं पुरुषमुपैति' 'तरतिशोकम् तरतिपाप्मानम्, इति पर्वपर श्रुत्यर्थकथनेन 'ब्रह्मवेद ब्रह्मैवभवती, त्यत्रमध्यमश्रुतौ वेदनं भक्तिः भवत्यर्थः प्राप्तिः इति निर्णीतम् ॥

वस्तुतस्तु—असौ ज्ञानगम्यः परः पुमान् महाहरिः अनन्यया च भक्त्या च प्राप्तुं शक्यः नान्यथाप्राप्तुं शक्यरूप इति योजनायां एकश्च शब्दः त्वर्थे अन्यश्च शब्द एवार्थे—अर्थद्वयोपपादकं परः महाहरिः इति पदद्वयम् । उत्कृष्टपुरुषप्राप्तिः उत्कर्षानुसन्धानपूर्वकमहनीयाविषयकप्रीत्यात्मक भक्तिशब्दवाच्यज्ञानात् न त्वतादृशात् ज्ञानात् दृष्टद्वारा भक्त्याऽपि न ज्ञानद्वारापरप्राप्तिः किन्तु परस्य 'सर्वपापेभ्यो मोक्षयिष्यामि' इति भगवन्निग्रहसङ्कल्पनिवृत्तिरूप सर्वपापहरणसङ्कल्पद्वारैवेत्याशयः । अयमर्थः—

पुरुषस्सपरः पार्थ भक्त्या लभ्यस्त्वनन्यया ।
यस्यान्तस्थनिभूतानि येन सर्वमिदं ततम् ॥ ८. २२.

इति गीतावचने व्यक्तः. परत्वं च—

अहं कृत्स्नस्य जगतः प्रभवः प्रळयस्तथा ।
मत्तः परतरं नान्यत्किञ्चिदस्ति धनञ्जय ॥ ७. ६.

इत्यत्र प्रकृतिजीवकारणत्वेन निरूपितम् ।

भक्तौ च एतादृशपरत्वज्ञानं हेतुरिति—

अहं सर्वस्य प्रभवो मत्तस्सर्वं प्रवर्तते ।
इति मत्वा भजन्ते मां बुधा भावसमन्विताः ॥ १०-८ ॥

इत्यत्र वक्ष्यति ।

सर्वस्य चाहं हृदि सन्निविष्टो
मत्तस्स्मृतिर्ज्ञानमपोहनं च ॥ १५-१५ ॥
क्षरस्सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥ १६ ॥
उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥ १७ ॥
यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥ १८ ॥
यो मामेवमसम्मूढो जानाति पुरुषोत्तमम् ।
स सर्वविद्भजति मां सर्वभावेन भारत ॥ १९ ॥

इत्यत्र—

('ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति' इत्यत्रेव सर्वभूतशब्दस्य अचित्संसृष्टचेतनवाचितया कूटस्थशब्दस्य परिशुद्धात्मस्वरूपे स्वरसतया च) परमात्मनः पुरुषोत्तमस्य अवरात्मबद्धमुक्तपुरुषव्यापकधारकनियन्तृशेषिभावङ्गतस्य नित्यस्य ततएव बद्धमुक्तविलक्षणस्य धारकत्वादिधर्मज्ञानस्य सर्वभावेन भक्तिहेतुता प्रतिपादयिष्यते—

महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः ।
भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ॥ ९-१३ ॥

इत्यत्र दैवीं सात्त्विकीं प्रकृतिमाश्रिता एव प्रकृति जीवकारणभूतस्य नित्यस्य परमात्मः ज्ञानेन भजन्तीत्यभिधास्यते । तदनेन जगत्कारणत्वधारकत्व-

नियन्तृत्वादिवैशिष्ट्यनित्यत्वतत्कृतावरजीवभेदादिरूपं परत्वं ये जानन्ति त एव सात्त्विकप्रकृतयः पुरुषोत्तमे भक्तिमारचयन्ति न तु परावरजीवैक्य-ज्ञानिनः इति प्रतीयते । पूर्वोक्तज्ञानवत एव—

तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते ॥ ७ अ. १७ ॥

इत्यत्र उपायफलयोरैक्यज्ञानेन एकभक्तित्वम् ॥

. . . . ज्ञानवान्मां प्रपद्यते ।

वासुदेवस्सर्वमिति स महात्मा सुदुर्लभः ॥ १९

इत्यत्र 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' बृ. ६-३-३२. इत्युक्तदिशा वासुदेवस्य सर्वफलरूपत्वेनानुसन्धानपूर्वकं तमेव प्रपन्नस्य दुर्लभ-तमत्वञ्चोक्तम्—अतः 'पुरुषस्स परः पार्थे' ति श्लोके पूर्वोक्तपरत्वज्ञानपूर्व-कानन्यप्रयोजनभक्त्यैव भगवत्प्राप्तिः । साऽपि 'स यत्पूर्वोऽस्मात्सर्वस्मात् सर्वान्पाप्मान औषत्' बृ. ३-४-१ इति श्रुत्युक्तदिशा सर्वपापदाहकत्वप्रवृत्ति-निमित्तकपुरुषशब्दपर्यालोचनया सर्वपापेभ्यो मोक्षयिष्यामीति सङ्कल्पपूर्विकैवेति सिद्ध्यति ॥

शुद्धभावंगतोभक्त्या शास्त्राद्वेत्ति जनार्दनम् । (उद्यो. प. ६८-५)

इत्यत्र भक्तेः ज्ञानहेतुत्वं—

भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन ।

ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप ॥ ११-५४ गी.

इत्यत्र च भक्तेः ज्ञानदर्शनप्रवेशसाधनत्वं प्रतिपादितम् । तच्च भक्तिपर्वक्रमेण तदेतत्सर्वमनुगृहीतमाचार्यपादैस्तात्पर्यचन्द्रिकायां "ज्ञानदर्शनप्राप्तिहेतुत्वेभक्तेः पर्वभेदान्नान्योन्याश्रयणादिदोषः । पूर्वजन्मसुकृतमूलसात्त्विकजनसंवादादि-जनितं यथावच्छ्रवणानुगुणं किञ्चिदानुकूल्यरूपं भक्तिमात्रं शास्त्रजन्यज्ञानोत्पत्तौ सहकारी भवति । उत्कटदिदृक्षागर्भा तु परभक्तिस्साक्षात्कारहेतुः साक्षात्कृते

तु परिपूर्णानुभवाभिनिवेशलक्षणा परमभक्तिः प्रवेशहेतुरिति । अत्र 'अनन्यया, इति पदं प्रागुक्तप्रक्रियया अनन्यप्रयोजनयेति भाव्यम्' इति—

भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः ।
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ॥ १८-५५.

इत्येतद्वचनमप्येतत्पर्वभेदक्रमतात्पर्यकमेव अत्र भक्त्येति 'मद्भक्तिं लभते-पराम्' इति पूर्वश्लोकोक्तपरभक्तिपरम् अभिजानातीत्यत्र अभीत्युपसर्गात् यावानित्याद्युक्तेः 'द्रष्टुं प्रवेष्टु'मितिक्रमानुसाराच्चविशदस्य परभक्तिसाध्यस्य परज्ञानस्याभिप्रेतत्वात् 'भक्त्याप्रवेष्टुं च परन्तप' इत्यत्रोक्तार्थप्रत्यभिज्ञापनाय अत्रापि उपक्रमेभक्त्येत्यस्य—उपसंहारेच 'विशते तदनन्तरम्' इत्यत्र विशेर्धातोश्च प्रयोगात् । 'तत्त्वतो ज्ञात्वे' त्यत्रोक्तज्ञानस्यैव प्रवेश-हेतुत्वविवक्षायां तासिल्प्रत्ययान्तप्रसिद्ध तत इत्यस्य वैय्यर्थ्याच्च 'धर्मं जैमिनि-रत एव ३-२-४.' इत्यत्र 'श्रुतत्वाच्च' इति पूर्व सूत्रोक्त श्रुतिसजातीय-श्रुतेरिदं शब्देन विवक्षावत् तत इत्यत्र भक्त्येत्यत्रोक्त भक्तिसजातीयपरम-भक्तिविवक्षणेन 'तत्त्वतोज्ञात्वा तत इत्यादियोजनायां तत्त्वतोज्ञात्वेत्यनेन परमभक्तौ परज्ञानसाध्यत्वलाभेन तदनन्तरमित्यनेन परमभक्तिप्रवेशयोः उपाय-भूतज्ञानान्तरव्यवधाननिषेधेन परज्ञानसाध्य परमभक्तेरेव प्रवेशहेतुत्वं विवक्षित-मिति व्यक्तं भाष्यतात्पर्यचन्द्रिकनिष्णातानाम् । एतेन—

तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥

इत्यत्र परज्ञानस्य परमभक्तिद्वारकमेव प्राप्तिहेतुत्वं विवक्षितम् इति बोध्यम् । परमते सर्वत्र प्राप्तिप्रतिपादकशब्दप्रयोगो विरुद्ध्यत इति स्फुटम् । अतो 'गीतानां मोक्षधर्माणां चैकार्थ्यात्' (ई. शं. भा.) इत्युक्त-

इत्यत्र वासुदेवध्यानेन गृहस्थस्यापि श्वतेकेतोर्मोक्षप्राप्तिः; श्रीवासव-संवादान्ते—

वासुदेवपरोनित्यं ज्ञानध्यानपरायणान् ।
विशेषणार्चयेथास्त्वं सततं पर्युपास्व च ॥ २३५. १२२.

इत्यत्र वासुदेवभक्तानामप्यर्चनीयत्वम् ॥

भीष्मेण युधिष्ठिरं प्रति वृत्राय सनत्कुमारोक्तविष्णुमाहात्म्यानु-वादवचनेषु—

अनादिनिधनः श्रीमान् हरिर्नारायणः प्रभुः ॥ २८६. १९.
तं विश्वभूतं विश्वादिं परमं विद्धि चेश्वरम् ॥ २३.
मूलस्थायी स भगवान्स्वेनानन्तेन तेजसा ।
तत्स्थः सृजति तान्भावानात्मरूपान्महामनाः ॥ ६१.
स चानिरुद्धः सृजते महात्मा
तत्स्थं जगत्सर्वमिदं विचित्रम् ॥ ६४.

इत्यत्र परवासुदेवस्य सङ्कर्षणादिरूपेण अवतारसङ्कल्पवत्त्वं चाकथयत् ॥

तत्रैव (३४२-३६१) विंशत्यध्यायात्मके[1] ज्ञानकाण्डे नारा-णाख्याने प्रथमे—

---

रीत्या गीतानुरोधेन 'नाऽन्यथा शक्यरूपोसौ . . . . . . मति-र्मम' इत्यादावपि भक्तेः प्राप्तिहेतुत्वमेव विवक्षितमिति सिद्धम् । अत एव—

वेदेन पञ्चरात्रेण भक्त्या यज्ञेन च द्विज ।
प्राप्योहं नान्यथा प्राप्यो वर्षलक्षशतैपि ॥ (व. पु. ६६-१८)

इति वचने गीताविस्तारभूतपञ्चरात्रोपबृंहितवेदप्रतिपाद्ययज्ञोपोद्बलितभक्तेरेव प्राप्तिहेतुत्वप्रतिपादनं सङ्गच्छत इति दिक् ॥

[1] परमतभङ्गे च एतत्प्रघट्टकं ज्ञानकाण्डमिति व्यवाहार्याचार्यपादैः ॥

गृहस्थो ब्रह्मचारी च वानप्रस्थोऽथ भिक्षुकः ।
य इच्छेत्सिद्धिमास्थातुं देवतां कां यजेत सः ॥ ३४२-१.
देवतानां च को देवः पितॄणां च पिता तथा ॥ ४.

इत्यादियुधिष्ठिरप्रश्नानां भीष्मेण प्रतिवचने नारायणनारदसंवादे— कृतयुगे धर्मात्मजत्वेन नारायणावतारभूतयोः बदर्याश्रमे अष्टचक्ररथमासाद्य तपस्तपतोः नरनारायणयोर्मध्ये नारायणसमीपमागत्य नारदेन कृतस्य—

वेदेषु सपुराणेषु साङ्गोपाङ्गेषु गीयसे ।
चत्वारो ह्याश्रमा देव सर्वे गार्हस्थ्यमूलकाः ।
यजन्ते त्वामहरहः नानामूर्तिसमास्थितम् ॥
पिता माता च सर्वस्य देवतानां च शाश्वतम् ॥
कं त्वद्ययजसे देवं पितरं कं न विद्महे ।
कमर्चसि महाभाग तन्मे ब्रूहि पृच्छतः ॥

इति प्रश्नस्य नारायणेन प्रतिवचने—

सह्यन्तरात्मा भूतानां[1] क्षेत्रज्ञश्चेति कथ्यते ।
तां योनिमावयोर्विद्धि . . . . . ॥
आवाभ्यां पूज्यते यो हि . . . . ।
नास्ति तस्मात्परोऽन्यो हि पिता देवोऽथवा द्विज ॥

इति नरनारायणाभ्यां समर्चनीयं विभवव्यूहमूलभूतं परवासुदेवम्

---

[1] 'क्षेत्रज्ञो वासुदेवः' 'सर्वावासं वासुदेवं क्षेत्रज्ञं विद्धि तत्त्वतः' (३५४-१०) इति हि वक्ष्यते ॥

प्रक्रम्य—

[1]तं देवाश्चाश्रमा(ऋषय)श्चैव [2]नानातनुसमाश्रितम् ।

---

[1]'अत्र देवतानां च को देवः' 'तं देवाः भक्त्या संपूजयन्ति' इति प्रश्नप्रतिवचनाभ्यां एकस्य सर्वदेवताराध्यत्वोक्त्या 'नास्ति तस्मात्परोन्यो हि पिता देवः' इत्यत्र अन्यदेवतामप्रतिषिध्य तदन्यपरदेवतानिषेधेन च सर्वदेवतैक्यं नास्तीति सिध्यति । नारायणस्य तु सर्ववेदप्रतिपाद्यत्वकथनात् वासुदेवनारायणयोरुभयोस्सर्वाश्रमिसमाराध्यत्वप्रतिपादनाच्च वासुदेवस्वरूपैक्यमेव । विग्रहभेदनिबन्धन एव मूलमूलिभावः 'तां योनिमावयोर्विद्धि' इत्यत्र विवक्षितः—वक्ष्यति च—

सब्रह्मकास्सरुद्राश्च सेन्द्रा देवा महर्षयः ।

अर्चयन्ति सुरश्रेष्ठं देवं नारायणं हरिम् ॥ (३५०-३०) इति ।

[2]नानातनवश्च व्यूहविभवशरीराणि ब्रह्मरुद्रादिदेवताशरीराणि च संकर्षणादीनां ब्रह्मरुद्रादिभिराराधनीयता पञ्चरात्रे स्फुटा । ब्रह्मादिदेवतायजनं तदन्तर्यामिविष्णुयजनमेवेति 'ये यजन्ति पितॄन्देवान् . विष्णुमेव यजन्ति ते ॥ (३५५-२५) इत्यत्र वक्ष्यते । एवं नारायणस्य ब्रह्मरुद्रान्तर्यामित्वं 'तवान्तरात्मा मम च' (३६१-४) इत्यत्र—'स ह्यन्तरात्मा भूतानां क्षेत्रज्ञश्चेति कथ्यते' इत्यत्राप्युपक्रमे बोध्यम् । 'गतिं चैषां ददाति सः' इत्यत्र मोक्षव्यतिरिक्तं फलं 'तं प्रविशन्ति' इत्यत्र भगवत्प्राप्तिरूपं मोक्षाख्यं फलमिति विभागोऽवसेयः एतेन—'मोक्षश्चैव किंमात्मकः' इत्यन्तप्रश्नानां प्रतिवचनमुक्तम् । भगवद्गीतायां च 'चतुर्विधा भजन्ते माम्' (७-१६) 'स महात्मा सुदुर्लभः' (७-१) । 'कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः' (७-२०) 'यो यो यां यां तनुं भक्तः' (७-२१) 'अन्तवत्तु फलं तेषां' 'देवान्देवयजो यान्ति मद्भक्ता यान्ति मामपि'

भक्त्या संपूजयन्त्यद्य गतिं चैषां ददाति सः ॥
ये तु तद्भाविता लोके ह्येकान्तित्वं समास्थिताः ।
एतदभ्यधिकं तेषां यत्ते तं प्रविशन्त्युत ॥

इत्युक्तौ तत्तत्फलार्थिभिस्सर्वैरप्याश्रमिभिः स्वस्वाभीप्सितमूर्तिमधितिष्ठतः वासुदेवस्यैव पूजनीयत्वं, तत्तत्फलप्रदातृत्वं, अनन्यमनस्कैरेकान्तिभिस्तस्यैव प्राप्यत्वं च प्रातिपादितम् ॥

द्वितीये—नारायणमूलरूपभूतं वासुदेवं द्रष्टुं बदर्याश्रमात् मेरोः पश्चिमोत्तरभूतक्षीरोदधेरुत्तरं श्वेतद्वीपं गतेन नारदेन अवलोकितानां श्वेतद्वीपस्थानां पुरुषाणां लक्षणं श्रुत्वा—

अनिन्द्रिया निराहारा अनिष्पन्दास्सुगन्धिनः ।
कथं ते पुरुषा जाताः का तेषां गतिरुत्तमा ॥ ३४३-१३.
[1] ये च मुक्ता भवन्तीह नरा भरतसत्तम ।
तेषां लक्षणमेतद्धि यच्छ्वेतद्वीपवासिनाम् ॥ १४.

---

(७-२३) इति सप्तमे । 'ये त्वन्यदेवता भक्ताः यजन्त्यविधिपूर्वकम्' (९-२३) । 'अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च । न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते' (२४) । 'यान्ति देवव्रता देवान्–यान्ति मद्याजिनोऽपि माम्' (२६) इति नवमे चैतद्विस्तरोऽवसेयः । एवं 'चतुर्विधा मम जनाः' (३५०-३) । 'यस्मात्परिमितं फलम्' इत्यत्रापि ॥

[1] श्वेतद्वीपवासिमुक्तयोर्लक्षणसाम्यकथनेन श्वेतद्वीपो न मुक्तप्राप्यस्थानं तद्वासी वासुदेवोऽपि न परवासुदेव इति बोधितम् । परव्यतिरिक्तस्यापि विभवमूलत्वं पञ्चरात्रसंहितासु व्यक्तं । तेन नारदस्य विभवमूलरूपदर्शनार्थं श्वेतद्वीपगमनोक्तेर्नविरोधः ॥

**इति युधिष्ठिरप्रश्नस्य शन्तनुं प्रति नारदोक्तिरूप(भीष्म)प्रतिवचने—**

**राजो परिचरो नाम बभूवाधिपतिर्भुवः ।**

**सात्त्वतं विधिमास्थाय [1] प्राक्सूर्यमुखनिस्सृतम् ॥**

**पूजयामास देवेशं तच्छेषेण पितामहान् ॥ २०.**

---

[1] (३२३) जनकयाज्ञवल्क्यसंवादे याज्ञवल्क्याय शुक्लयजुर्वेदोपदेष्टा यस्सूर्यस्सएव सात्त्वतविधिप्रवर्तक इत्यभिधानेन शुक्लयजुर्वेद पञ्चरात्रयोरैकरस्यं ख्याप्यते । तेनच शुक्लयजुर्वेदवत् पञ्चरात्रं कात्स्न्र्येन प्रमाणं—प्रथम शाखान्यायनिर्णये पूर्वपक्षे उपात्तानि शुक्लयजुर्वेदि याज्ञवल्क्यादिनिन्दा (कालिकाखण्ड) वचनानीव पञ्चरात्रनिन्दादि (कू. पु. सू. सं) वचनान्यपि कलौ भगवद्भक्तिविधुरैस्तामसैः पुराणे प्रक्षिप्तानीति व्यंजितम् । तदुक्तं शास्त्रदर्पणे उत्पत्त्यसम्भवाधिकरणे अमलानन्दयतिभिः—'ईशोक्तं न पुराणेषु व्यामोहार्थमितीरितम् । पञ्चरात्रम्' इत्यादि श्लोकेन प्रक्रम्य पञ्चरात्र-कर्तुर्वासुदेवस्य वेदादेव सर्वज्ञत्वावगमात्कपिलपतञ्जल्यादीनां च जीवत्वात् पञ्चरात्रस्य च पुराणेषु बुद्धादिदर्शनवत् व्यामोहार्थमीश्वरप्रणीतत्वाश्रवणात्, इत्यादि पूर्वपक्षे 'अतः प्रमाणापहृतविषये गौणं तद्वचनं न तु भ्रान्तं पूर्वोक्त युक्तिभिः' इति सिद्धान्ते च । एवमेव पञ्चरात्रकर्तुरित्यादि कल्प-तरावप्युक्तन्तैरेव । तत्र न तु भ्रान्तं पूर्वपक्षयुक्तिभिरितीयान्भेदः । अत्र सिद्धान्तव्याख्याने कल्पतरुपरिमलः 'यद्यपि वेदावगतसार्वज्ञ्यस्य भ्रान्तिर्न सम्भवति—तथापि वेदविरोधदर्शने सति बुद्धदेशनावत्तदंशे व्यामोहकत्व-शङ्कानापैति । सापि शङ्का यद्यपि न भवति तथापि उपजीव्यविरोधे गौणत्व-कल्पनमावश्यकमिति' इति । अत्र सापि शङ्का यद्यपि न भवतीत्यत्र पञ्च-रात्रस्य पुराणेषु बुद्धादि दर्शनवत् व्यामोहार्थमीश्वरप्रणीतत्वाश्रवणात् इत्येव हेतुरिति न तिरोहितं विदुषां—एवं कपिलपतञ्जल्यादीनां च जीवत्वात्

इत्यनेन सांख्ययोगपाशुपतकर्तॄणामपि जीवत्वेन भ्रमसम्भवो बोधितः— तदनेन विरोधादिकरणतन्त्रवार्तिके वर्णकान्तरे 'यद्वा यान्येतानि त्रयीविद्भिर्न-परिगृहीतानि —सांख्ययोगपाशुपतशाक्यनिर्ग्रन्थपरिगृहीतधर्माधर्मनिबन्धनानी' त्यत्र पाञ्चरात्रपदाघटित एव पाठः इति निश्चीयते। तन्त्रवार्तिकविवरणेष्वपि प्राचीनेषु पञ्चरात्रपदादर्शनात्। तन्त्रवार्तिकलिखितकोशेषु प्राचीनेषु केषु चित्पंच-रात्रपदादर्शनाच्च। यद्यपि तान्त्रिकमीमांसायामप्पयदीक्षितैः वेदामूलकत्वादा-गमा न प्रमाणं इति सोमनाथेन च '(१-३-४ शा.दी) शाक्यादीत्यादि शब्देन वार्तिकोक्तपाशुपतपञ्चरात्रादिसंग्रहः इति उक्तम्' तथापि (शा-दी) सोम-नाथीये अप्पयदीक्षितनामोल्लेखेन उभयोस्समकालिकतया दीक्षितानां च 'हेतुदर्शनाच्च (१-३-४,) इति सूत्रोक्तनयेन प्रवृत्तेर्विदुषां व्यक्ततयाचन-सोमनाथलेखमात्रेण वार्तिके पञ्चरात्रपदप्रयोगनिर्णयः सम्भवति। कल्पतरुपर्यन्त-ग्रन्थकारकालात्प्राक्तनग्रन्थेषु वार्तिके पञ्चरात्रपदसद्भावग्राहक अप्रक्षिप्त संप्र-तिपन्नदृढतरप्रमाणविरहात् कल्पतरुग्रन्थपर्यालोचनाच्च वार्तिकेऽपि पञ्चरात्रपदं-प्रक्षिप्तमित्येव युक्तम्। एतेन रसगङ्गाधरादिबहुग्रन्थकृता पण्डित जगन्नाथेन नागेशेन च गुरुद्रोहीति (सि-ले-सं. भूमिकायां) प्रख्यापितेन भट्टोजिदीक्षितेन तन्त्राधिकारिनिर्णयोक्तमपि दत्तोत्तरमिति तत्त्ववृद्धाः॥

एवं शुक्लयजुर्वेदप्रवर्तकस्य सूर्यस्य तदुपबृंहणपञ्चरात्रस्मृतिरूपसात्त्वत-विधिप्रवर्तकत्वोक्त्या इदमपि सूच्यते (सि-चं) शतपथब्राह्मण विहितसुदर्शन-धारणस्य पञ्चरात्रं प्रयोगविधिरिति। चतुर्वेदेषु परं श्रेयोऽलब्ध्वा शाण्डिल्य इदं शास्त्रमधीतवान्, इति वाक्यमपि वाजसनेयिनां अनुदितहोमाचरणस्य 'उदितेहोतव्य'मित्यनन्तरं 'प्रातःप्रातरनृतं ते वदन्ति पुरोदयाज्जुह्वतियेऽग्नि-होत्रम्, इति (२५-६-३१.) ऐतरेयब्राह्मणस्थ निन्दावत् (पां-र) ऋग्वेदे तदन्यवेदनिन्दावच्च नहिनिन्दान्यायेन सङ्गमनीयम्। 'श्रुतिमूलमिदन्तत्रं

प्रमाणं कल्पसूत्रवत्, इति पञ्चरात्र एवोक्तेरिति च । अवान्तरसंगतिवशादिहपादेऽस्य लेखः इति कल्पतरूक्तावपि पञ्चरात्रस्य स्मृतित्वमभिप्रेतम् । एवं ब्रह्मविद्याभरणेऽपि पञ्चरात्रस्य स्मृतित्वं व्यक्तम्—सच्चरित्ररक्षा --परिकरविजय, सिद्धान्तचन्द्रिका, तप्तचक्राङ्कनसमर्थनद्वय, सुदर्शनसुरद्रुमादौ सुदर्शनधारणविधिर्व्यवस्थापित इति दिक् ॥

अत्रेदं तत्त्वम्—आगम मन्त्र तन्त्र तन्त्रान्तरसिद्धान्तभेदेन चतुर्धाविभक्ते पञ्चरात्रे आगमासिद्धान्ते आगमसिद्धान्तनिष्ठानां सावित्र्यनुवचनादिधर्मलोपः प्रतिपादितः । एतन्मूलकतयैव पञ्चरात्रस्य वेदविरोधवादः प्रवृत्ते । इदञ्चाभ्युपेत्य (कृत्वा चिन्तया) पञ्चरात्रतन्त्रं वेदाविरुद्धांशे प्रमाणमिति पञ्चरात्राऽधिकरणं समयोजि प्राचीनेऽस्मदीय सूत्रभाष्ये । एतेन—

'यावन्मोहं तु भेदस्स्याज्जीवस्य च परस्य च ।
ततः परं न भेदोऽस्ति भेदहेतोरभावतः' ॥ (अ-सि-८४२) इति वचनतुल्यं ॥

'आमुक्तेर्भेद एवस्याज्जीवस्य च परस्य च ।
मुक्तस्य तु न भेदोऽस्ति भेदहेतोरभावतः' ॥

इति भास्करेण (१-४-२१ ब्र.) उदाहृतं पाञ्चरात्रिकवचनमपि यथाश्रुतार्थकं भवतुवेदविरोधेन तदप्रामाण्येऽपि क्षतिविरहात् इति ॥

भगवद्यामुनमुनयस्तु—आगमसिद्धान्तेऽपि वेदविप्रतिषेधो नोद्भावयितुं क्षमः तन्मूलभूताया एकायनशाखायास्तदनुसारि कल्पसूत्रस्य च सत्त्वेन तन्निष्ठानां सावित्र्यनुवचनादिलोपस्यादोषत्वात् । न ह्येकशाखानुसारिणामन्यशाखातदनुसारिकल्पोक्तकर्माननुष्ठानं दोषमावहतीति कश्चिदभ्युपैति । अस्मदीयं प्राचीनसूत्रभाष्यन्तु कृत्वाचिन्तयाप्रवृत्तं । अद्यत्वे आगमसिद्धान्तः लुप्तः । तदितरसिद्धान्तेषुं न कस्मिंश्चिदप्यंशे वेदविरोधः उत्प्रेक्षितुमप्यल-

मिति पञ्चरात्राधिकरणं कार्त्स्न्येन पञ्चरात्रप्रामाण्यपरमिति आगमप्रामाण्ये व्यवास्थापयन् । श्रीभाष्यमप्येतदनुसार्येव । एवं—'आमुक्तेर्भेदः, इत्यादि-वचनानि पूर्वापरादिपरामर्शप्रवणानां 'तद्भावभावमापन्नः' 'विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते' इत्यादि विष्णुपुराणवचनानीव औपाधिकवैधर्म्यरूप-भेदनिवृत्तिपराणीति सुगममितिपरमतभङ्गे भास्करमतभङ्गाधिकारे आचार्य-पादोक्तमपि—भगवद्यामुनमुन्यादिकालानन्तरन्तु पञ्चरात्रागमस्य वेदविरुद्धत्वा वैदिकाद्यधिकारिकत्वप्रतिपादकपुराणवचनकल्पनम् लुप्ताया एकायनशाखायाः कल्पितत्वप्रतिपादनं चेति प्रामाणिकानां पन्थाः ॥

वीरमित्रोदयकारास्तु—यत्तु 'साम्बकौर्मादिवचनैः श्रुतिभ्रष्टादीनामे-वागमेष्वाधिकारप्रतिपादनात् वेदविदामनधिकार इति कैश्चिदुक्तम् । तन्न-न्यायविदामभिधानं । तथाहि । श्रुतिभ्रष्टादिवाक्येषु न तन्त्रमुद्दिश्य कर्तारो विधीयन्ते राजसूयोद्देशेन राजेव येनान्येषामनधिकारस्स्यात्, किंतु श्रुति-भ्रष्टादीनुद्दिश्य तन्त्रं विधीयते । तथा च 'स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा । इति भारतमाख्यान'मिति वचनात् स्त्रीशूद्रादीन्प्रतिभारत-प्रवृत्तावपि अन्येषां भारताधिकारवदागमेष्वविहतोऽधिकारः, (वी-प--प्र-२४ पु) इति निरूपयन्ति ॥

ब्रह्मविद्याभरणकारा अपि 'वेदविरोधरहितानां तु शैववैष्णवागमानां वैदिकपरिग्राह्यत्वे नकाचिदनुपपत्तिः । पुराणादिवत्तेषामपि वेदमूलकत्वेनैव प्रामाण्यसम्भवात्' इति च प्रतिपादयन्ति ॥

'कलौ जगत्पतिं विष्णुं सर्वस्रष्टारमीश्वरम् ।
नार्चयिष्यन्ति मैत्रेय पाषण्डोपहता जनाः ॥'

इति पराशरोक्तरीत्या 'अन्त्येयुगेप्रविरला भविष्यन्ति मदाश्रयाः' इति पूर्वोदाहृत (२३. पु) वाराहवचनेन च कलौ पाञ्चरा[त्रि]कभगवदर्चननिष्ठानां प्रविरलत्वेऽपि ॥

पाञ्चरात्रविदो मुख्यास्तस्य गेहे महात्मनः ।
प्रापणं भगवद्भुक्तं भुञ्जते चाग्र्यभोजनम् ॥ २६.

इत्याद्युपरिचरवृत्तान्ते—

ये हि ते ऋषयः ख्याताः सप्तचित्रशिखण्डिनः ।
तैरेकमतिभिर्भूत्वा यत्प्रोक्तं शास्त्रमुत्तमम् ॥
वेदैश्चतुर्भिस्समितं कृतं मेरौ महागिरौ ॥ २९.
मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः ।
वसिष्ठश्च महातेजाः ते हि चित्रशिखण्डिनः ॥
सप्त प्रकृतयो ह्येतास्तथा स्वायम्भुवोऽष्टमः ॥
नारायणानुशिष्टा हि तदा देवी सरस्वती ।
विवेशतानृषीन्सर्वान्लोकानां हितकाम्यया ॥ ३६.
ऋषीनुवाच तान्सर्वानदृश्यः पुरुषोत्तमः ।
कृतं शतसहस्रं हि श्लोकानां हितमुत्तमम् ॥
ऋग्यजुस्सामभिर्जुष्टमथर्वाङ्गिरसैस्सह । ४१.
सर्वे प्रमाणं हि यथा तथा तच्छास्त्रमुत्तमम् ।
[1]भविष्यति प्रमाणं वै एतदेवानुशासनम् ।

---

'कलौ खलु भविष्यन्ति नारायणपरायणाः ।
क्वचित्क्वचिन्महाभागाद्रमिडेषु च भूरिशः, ॥

इति हेमाद्रिपरिशिष्टखण्डोदाहृत श्रीभागवतादि वचनैः वैदिका अपि पुरुषाः पाञ्चरात्रिकार्चनादिनिष्ठा भविष्यन्ति ततश्च 'द्वापरस्य युगस्यान्ते आदौ कलियुगस्य च।' इति भीष्मपर्वोक्तिः सुसंगता । तदेतद्द्रढयति ।

[1] 'भविष्यति प्रमाणं वा' इति । आगमप्रामाण्य पाञ्चरात्ररक्षादौ कस्मिन्नप्यम्शे पञ्चरात्रस्य वेदविरोधाऽसम्भवेन कार्त्स्न्येनानुष्ठापकत्वरूपप्रामाण्यं व्यवस्थापितम् । एतेन 'भविष्यति प्रमाणं वा एतदेवानुशासनम्' इति पञ्चरात्रं प्रस्तुत्य

[1] अस्मात्प्रवक्ष्यते धर्मान्मनुस्स्वायम्भुवस्स्वयम् ॥
उशना बृहस्पतिश्चैव यदोत्पन्नौ भविष्यतः ।
तदा प्रवक्ष्यतश्शास्त्रं युष्मन्मतिभिरुद्धृतम् ॥
युष्मत्कृतमिदं शास्त्रं प्रजापालो वसुस्ततः ।
बृहस्पतिसकाशाद्वै प्राप्स्यते द्विजसत्तमाः ॥
एतद्धि सर्वशास्त्राणां शास्त्रमुत्तमसञ्ज्ञितम् ।
एतदर्थ्यं च धर्म्यं च रहस्यं चैतदुत्तमम् ॥
संस्थिते च नृपे तस्मिन् शास्त्रमेतत्सनातनम् ।
अन्तर्धास्यति तत्सर्वं एतद्वः कथितं मया ॥

इत्यत्र पञ्चरात्रशास्त्रस्य प्राक् (वाजसनेय) शुक्लयजुर्वेदप्रवर्तक सूर्य मुखनिस्सृतत्वं चतुर्वेदतुल्यत्वं सप्तचित्रशिखण्डिप्रवर्तितत्वं अष्टम-स्वायंभुवमनुशुक्रबृहस्पतीनां तदुक्तधर्मप्रवर्तकत्वं पञ्चरात्रशास्त्रस्य तदा तदा तिरोधानेऽपि पुनः आविर्भावेन द्वापरयुगान्तेकलियुगादावपि अनुष्ठापकत्वरूपं प्रामाण्यं अनन्तरमाविर्भविष्यतोऽपि पञ्चरात्रशास्त्रस्य चित्रशिखण्डिसंहितारूपस्य उपरिचरिवसुकालानन्तरमन्तर्धानम् ॥

---

यद्भावितया प्रामाण्यकीर्तनं तत्कलौ वैदिकमार्गप्रच्युतः प्राचुर्यात् । प्राचुर्येण पाञ्चरात्रमार्गः प्रतीतो भविष्यतीति एवमभिप्रायं व्याख्येयम् इति ब्रह्मविद्या-भरणोक्तिर्निरवकाशा वेदितव्या पूर्वोत्तरवचनविरोधात् । [1]

अस्मादिति । भविष्यति प्रमाणंवेत्येतत्पूर्वार्धे पञ्चरात्रशास्त्रमेव विव-क्षितमिति परेषामपि सम्मतम् । एवं च अस्मादित्यत्र इदं शब्देन पञ्चरात्रशास्त्रमेव परामृश्यते । स्वायंभुवमनोस्तदुक्तधर्मप्रवर्तकत्वमेवात्रविव-क्षितम् । एतेन मनोः महाभारतोक्तधर्मप्रवर्तकत्वम् । शुक्रबृहस्पत्योरेव पाञ्चरात्रिकधर्मप्रवर्तकत्वमिति (अ.मा ९७) उक्तिरनवधानमूलेति वेदितव्यम् ॥

तृतीये—उपरिचरवसुना बृहस्पतेस्सकाशात् चित्रशिखण्डिप्रवर्तितं पञ्चरात्रं अधीत्य तदनुसारेण विरचिते अश्वमेधे बृहस्पत्यादिभिरदृश्येन भगवता स्वां मूर्तिमुपरिचरवसोः एव प्रदर्श्य साक्षादेव यज्ञभागे गृहीते—

न यजेयमहं चात्र परिभूतस्त्वया नृप ॥ १९ ॥
त्वयापशुर्वारितश्च कृतः पिष्टमयः पशुः ।
त्वं देवं पश्यसे नित्यं न पश्येयमहं कथम् ॥ २० ॥

इति बृहस्पतेः क्रोधान्धत्वम्—

[1]नैष धर्मः कृतयुगे यत्त्वं रोषमिहाहिथाः ॥ २४ ॥
अरोषणोह्यसौ देवः यस्य भागोयमुद्यतः ।
न शक्यः स त्वया द्रष्टुं अस्माभिर्वा बृहस्पते ।
यस्य प्रसादं कुरुते स वै तं द्रष्टुमर्हति ॥ २५ ॥

इति एकतद्वितत्रितमहर्षिभिस्तत्क्रोधशमनस्योपक्रमः—

क्षीरोदधेरुत्तरतः श्वेतद्वीपोमहाप्रभः ।
तत्र नारायणपरा मानवाश्चन्द्रवर्चसः ॥ ३२ ॥
एकान्तिनस्ते पुरुषाः श्वेतद्वीपनिवासिनः ।
गच्छध्वं तत्र मुनयस्तत्रात्मा मे प्रकाशितः ॥ ३४ ॥

इति स्वैः अशरीरवाक्यस्य श्रवणं ततश्श्वेतद्वीपं प्रतिगमनं तन्निवासिनां एकान्तिपुरुषाणां दर्शनम् ॥

---

[1] अत्र उत्तरत्र च (ना. आ. ४-८८-८०) युगभेदेन यागीयपशुव्यवस्थायाः करणेऽपि पिष्टमयपश्वाचरणं पाञ्चरात्रिकधर्म इति अस्मिन्नंशे पञ्चरात्रस्य वेदविरोधोद्भावनं (अ. मा. १७) विदुषां विस्मयावहम्. स्मृतिकाराश्च बहुत्रयुगभेदेन वैदिकधर्मं व्यवस्थापयन्त्येव ॥

जितन्ते पुण्डरीकाक्ष नमस्ते विश्वभावन ।
नमस्तेऽस्तु हृषीकेश महापुरुषपूर्वज ।
इति शब्दः श्रुतोऽस्माभिः शिक्षाक्षरसमन्वितः ॥

इत्यत्र जितन्त इत्यादि [1] ऋग्वेदखिल शब्दस्यश्रवणम् ॥

तैरिष्टः पञ्चकालज्ञैः हरिरेकान्तिभिर्नरैः ।
भक्त्यापरमयायुक्तैः मनोवाक्कर्मभिस्तदा ॥ ५१ ॥
नूनं तत्रागतो देवो यथातैर्वागुदीरिता ।
वयं त्वेनं नपश्यामो मोहितास्तस्य मायया ॥ ५२ ॥

इत्यत्र श्वेतद्वीपवासिभिः दृष्टस्य वासुदेवस्यादर्शनम् ॥

दृष्टावः पुरुषाः श्वेताः सर्वेन्द्रियविवर्जिताः ।
दृष्टोभवति देवेश एभिर्दृष्टैर्द्विजोत्तमैः ॥ ५७ ॥

---

[1] अत्र शिक्षाक्षरसमन्वित इत्यनेन जितन्त इत्यादेर्वेदरूपत्वं सूच्यते. एवं
स्वर्णघर्मानुवाकेन तथापुरुषविद्यया ।
पौरुषेण च सूक्तेन सामभीराजनादिभिः ॥ इति

श्रीभागवत (११-२७. अ.) वचने स्वर्णघर्मानुवाकादिवेदसहपाठेन पुरुष विद्यापदवाच्यत्वेन बहुव्याख्यातृसम्मत जितन्त इत्यादि स्तोत्रस्य वेदरूपता-सिद्यति किञ्च शान्तिकमलाकरोदाहृत महार्णवऋग्विधानवचनेषु—

एवं हुत्वाततश्चैवमनुज्ञाप्ययथाक्रमम् ।
अग्नेर्भगवतस्तस्य समीपे स्तोत्रमुच्चरेत् ॥
जितन्ते पुण्डरीकाक्ष ——— महापुरुष पूर्वज ॥

इत्याद्युक्त्या जितन्त इत्यादेः ऋग्वेदरूपत्वं सिद्यति. अत एव कृष्णपादैः एतत्स्तुतिव्याख्यानोपक्रमे अस्य ऋग्वेदखिलत्वोक्तिः संगच्छते ॥

गच्छध्वं मुनयः सर्वेयथागतमितोऽचिरात् ।
न स शक्यस्त्वभक्तेन द्रष्टुं देवः कथंचन ।। ।। ५८ ।।
कामं कालेन महता एकान्तित्वमुपागतैः ।
शक्योद्रष्टुं सभगवान्प्रभामण्डलदुर्दृशः ।। ५९ ।।

इत्यत्र तत्रत्यवासुदेवोक्त्या परावर्तनं इत्यादिकथनेन—

एवमेकतवाक्येन द्वितत्रितमतेन च ।
अनुनीतः सदस्यैश्च बृहस्पतिरुदारधीः ।
समापयत्ततोयज्ञं दैवतं समपूजयत् ।। ५५ ।।

इत्यत्रतत्क्रोधस्य निश्शेषशामनं[1] । ततो बृहस्पतिना अश्वमेधक्रतु-समापनम् ।।

चतुर्थे—इन्द्रकृतयज्ञे बृहस्पतिना सवनीय पशोः काले पिष्ट-मानीयतामित्युक्ते (अजेन यष्टव्यमिति) मांसाभिकाङ्क्षिदेवताभिः ।।

नैषधर्मस्सतां देवाः यत्र वध्येत वै पशुः ।
इदं कृतयुगं श्रेष्ठं कथं वध्येत वै पशुः ।। ८ ।।

इत्यत्र पिष्टमयपशुना यष्टव्यमिति वदद्भिः ऋषिभिस्सह विवादे प्रारब्धे उपरिचरवसुंचान्तरिक्षगतं दृष्ट्वा ऋषिभिर्देवताभिश्च विवाद-पदनिर्णेतृत्वेन वृतेन वसुना पक्षद्वयं ज्ञात्वा देवानामाभिप्रायानुराधेन छागेन यष्टव्यमिति निर्णये कृते—

---

[1] वितर्कडोलां व्यवधूय सत्वे
बृहस्पतिं वर्तयसे यतस्त्वम् ।
तेनैव देवत्रिदशेश्वराणा-
मस्पृष्टडोलायितमाधिराज्यम् ।। (ह-श्री-स्ता-८)

इत्याचार्यपादसूक्तौ एतद्वृत्तान्तोऽनुसन्धेयः ।

अद्यप्रभृति तेराजन्नाकाशे विहतागतिः ।
अस्माच्छापाभिघातेन महीं भित्वा प्रवेक्ष्यसि ॥ १९.

इति ऋषिभिश्शप्तेन वसुना—

तत्रापि पञ्चभिर्यज्ञैः पञ्चकालानरिन्दम ।
अयजद्धरिं सुरपतिं भूमेर्विवरगोऽपिसन् ॥ ३६.

इत्यत्र भूविवरेऽपि पाञ्चकालिकयजनानुष्ठानं वसोरनन्यप्रयोजनया भक्त्या परितुष्टेन नारायणेन समाज्ञप्तेन गरुत्मता द्रागेव आकाश-समारोपणेन शापविमोचनम् ॥

पञ्चमे—नारदकृत पाञ्चरात्रिक वासुदेवस्तुतिः ॥

षष्ठे—(भ-गी-११.) कृष्णेनार्जुनस्येव (१श्लो) वासुदेवेन नारदस्य विश्वरूपप्रदर्शनम् । (११-१३ श्लो) वासुदेवस्य एकताद्वित-त्रितैरदृश्यत्वं ऐकान्तिकश्रेष्ठमात्रदृश्यत्वम् ॥

उवाच वचनं भूयो गच्छनारदमाचिरम् ॥ १८ ॥
इमेह्यनिन्द्रियाहारा मद्भक्ताश्चन्द्रवर्चसः ।
एकाग्राश्चिन्तयेयुर्मां नैषां विघ्नो भवेदिति ॥ १९ ॥
सिद्धाह्येते महाभागाः पुराह्येकान्तिनोऽभवन् ।
तमो रजोभिर्निर्मुक्ता मां [1] प्रवेक्ष्यन्त्यसंशयम् ॥ २० ॥

इत्यत्र नारदस्याऽपि श्वेतद्वीपानिवासस्य तत्रत्य पुरुषकर्तृक भगवद्ध्यानविरोधित्वम् ॥

---

[1] अत्र श्वेतद्वीपनिवासि वासुदेवस्य मामित्युक्तिः (भ-गी ९-३४) (१८-६५) 'मामैवैष्यस्यसी'ति अर्जुनं प्रति कृष्णोक्तिवत् मूलरूपाभेद-

सत्त्वं रजस्तमश्चैव नगुणास्तं भजन्ति वै ।
यश्च सर्व[1]गतस्साक्षी लोकस्यात्मेति कथ्यते ॥ २२ ॥
[2]द्विर्द्वादशेभ्यस्तत्वेभ्यः ख्यातो यः पञ्चविंशकः[3] ॥ २३ ॥
यं प्रविश्यभवन्तीह मुक्तावै द्विजसत्तमाः ।
स वासुदेवो विज्ञेयः परमात्मा[4] सनातनः ॥ २५ ॥
पश्येदेवस्य माहात्म्यं महिमानं च नारद ।
शुभाशुभैः कर्मभिर्यो न लिप्यति कदाचन ॥ २६ ॥
सत्त्वंरजस्तमश्चेति गुणानेतान्प्रचक्षते ।
एतेसर्वशरीरेषु तिष्ठन्ति विचरन्तिच ॥ २७ ॥
एतान्गुणांस्तुक्षेत्रज्ञो[5] भुङ्क्तेनै[6]भिः स भुज्यते ।
[7]निर्गुणोगुणभुक्चैव गुणस्रष्टागुणातिगः ॥ २८ ॥

---

विवक्षया । [1] सर्वगतत्वं आत्मत्वे हेतुः । [2] चतुर्विंशतिः अचित्तत्त्वानि सुबाल, मन्त्रिकोपनिषदादावधीतानि (३१९. अ) अत्रैव मोक्षधर्मे निरूपितानि । [3] वासुदेवस्य षड्विंशस्याऽपि जीवस्थत्वेनैकत्वविवक्षया पंचविंशकत्वोक्तिः इति अत्रैव पूर्वं जनकयाज्ञवल्क्यसंवादे (३२३ अ. ७७-७८) स्पष्टम् । [4] सनातनशब्देन मुक्तप्राप्यत्वं परवासुदेवस्येति बोधितम् ॥

[5] क्षेत्रज्ञशब्दार्थस्य वासुदेवस्य पूर्वं शुभाशुभकर्मलेपाभावोक्त्या स्वेच्छाप्रवर्तितगुणपरिणाममूलक आनन्द एव भुङ्क्त इत्यत्र विवक्षितः ॥

[6] अत्र गुणानुभाव्यत्वाभावः गुणत्रयसम्बद्धपुरुषानुभाव्यत्वाभावे पर्यवस्यति । सोऽपि त्रिगुणदेशे स्वस्याप्राप्यत्व इति बोध्यम् ॥

तदेतत्सूचयति गुणातिग इति गुणानतिक्रम्य त्रिगुणप्रकृतेरूर्ध्वं शुद्धसत्त्वपरमपदे वर्तमान इति यावत् ॥

[7] अत्र सत्त्वरजस्तमोगुणान्प्रक्रम्य निर्गुण इत्युक्त्या 'साक्षी चेता

इत्यत्रवासुदेवस्य निर्गुणत्वम् ।

अव्यक्तं पुरुषे ब्रह्म न्निष्क्रिये संप्रलीयते ।

इत्यन्ते व्यष्टिसमष्टि प्रलय कारणत्वम् ।

नास्तितस्मात्परतरः पुरुषाद्वै[1] सनातनात् ॥ ३१ ॥

नित्यं हि नास्ति जगति भूतं स्थावरजङ्गमम् ।

ऋते तमेकं पुरुषं वासुदेवं सनातनम् ॥

इत्यत्र परवासुदेव[2] विग्रहस्य नित्यत्वम् ।

[3]सर्वभूतात्मभूतोहि वासुदेवो महाबलः ॥ ३२ ॥

पृथिवी वायुराकाश मापोज्योतिश्च पञ्चमम् ।

ते समेतामहात्मनः शरीरमिति संज्ञितम् ॥ ३३ ॥

तदाविशति योब्रह्मन्नदृश्यो लघुविक्रमः ।

उत्पन्न एव भवति शरीरं चेष्टयन्प्रभुः ॥ ३४ ॥

---

केवलो निर्गुणश्च इति श्रुतौ गुणशब्देन तन्त्रभेदेनानियतप्रवृत्तिनिमित्तकेन वेदान्तसाङ्ख्यतन्त्रसिद्धार्थपरिग्रहस्य न्याय्यतया निर्गुणशब्देन सत्त्वरजस्तमोगुणशून्यत्वमेव बोध्यते इति सूच्यते । सङ्कर्षणप्रद्युम्नाऽनिरुद्धानां सत्त्वरजस्तमोगुणाधिष्ठातृत्वं परवासुदेवस्य तु तच्छून्यत्वमिति पञ्चरात्रे व्यक्तम् ॥

[1] अत्र अहिर्बुध्न्यसंहिताद्युक्तरीत्या गुणत्रयाधिष्ठात्रनिरुद्धप्रद्युम्नसङ्कर्षणलयाधारः परवासुदेवः सनातनशब्दे विवक्षितः ॥

[2] 'नित्यत्वं वासुदेवाह्वयवपुषिजगौमोक्षधर्मेमुनीन्द्रः, इति (त-मु-क) आचार्यपादश्रीसूक्त्या एतच्छ्लोकार्थो निरणायि । विवेचयिष्यते चेदमुपरिष्टात् ॥

[3] अत्र सर्वभूतात्मभूतत्वं अन्तःप्रविश्य नियन्तृत्वनिबन्धनमिति तदाविशति चेष्टयन्नित्याभ्यां व्यक्तीकृतम् 'अन्तःप्रविष्टश्शास्ता जनानां सर्वात्मा' इति हि श्रुतिः ॥

न विना धातुसङ्घातं शरीरं भवति क्वचित् ।
नच जीवं विना ब्रह्म [1] न्वायवश्चेष्टयन्त्युत ॥ ३५ ॥
स जीवः परिसंख्यातः शेषः सङ्कर्षणः प्रभुः ।
यस्मिंश्च सर्वभूतानि प्रलयं यान्ति संक्षयम् ॥ ३६ ॥
समनः सर्वभूतानां प्रद्युम्नः परिपठ्यते ।
तस्मात्प्रसूतोयः [2] कर्ता कारणं कार्यमेव च ॥ ३७ ॥
तस्मात्सर्वं संभवति जगत्स्थावरजङ्गमम् ।
सोऽनिरुद्धः स ईशानोव्यक्तिस्सासर्व कर्मसु ॥ ३८ ॥
यो वासुदेवो भगवान् क्षेत्रज्ञो निर्गुणात्मकः ।
ज्ञेय [3] स्स एव राजेन्द्र जीवः सङ्कर्षणः प्रभुः ॥ ३९ ॥
सङ्कर्षणाच्चप्रद्युम्नो मनोभूतः स उच्यते ।

---

[1] 'जातमात्रस्तु वैष्णवेन वायुना' इति गर्भोपनिषदि मूलप्रकृतौ वायुशब्दप्रयोगात् प्रकृतिपरिणामशरीरात्मकं पञ्चभूतानि वायवः ॥

[2] अत्र प्रद्युम्नस्य स्थितिहेतुत्वमेव विवक्षितम् । उदाहृता(१५ पु.)- नुशासनिकवचनानुरोधात् । तस्मादित्यत्र तच्छब्देन वक्ष्यमाण अनिरुद्ध एव विवक्षितः । यद्वा तस्मादित्यत्र तच्छब्दः प्रद्युम्नपरामर्श्येव इति प्रद्युम्नस्यैव सृष्टिहेतुत्वं । स ईशान इत्यत्र अनिरुद्धस्य स्थिति हेतुत्वं विवक्षितं अयमपि प्रकारः संहितासु व्यक्तः कल्पभेदेन उभयोर्विरोधपरिहारः ॥

[3] सङ्कर्षणप्रद्युम्नानिरुद्धानां वासुदेवात्क्रमश उत्पत्तिप्रतिपादनेन भेद-शङ्कां स एवेत्यादि तच्छब्दत्रयेणापाकरोति । विग्रहभेदनिबन्धनएवोत्पाद्यो-त्पादकभावः न तु स्वरूपपरिणामभेदनिबन्धन इति भावः । अयमप्यर्थः पञ्चरात्रे स्फुटः (स जीवः) इति तु पूर्वोक्तद्वारभूतजीवचेष्टयितृत्वेनेति स्फुटी-भविष्यति ॥

प्रद्युम्नादनिरुद्धस्तु सोऽहंकारस्स ईश्वरः ॥ ४० ॥

इत्यत्र वासुदेवकर्तृक समष्टिसृष्टिः [1] अनिरुद्धकर्तृकव्यष्टिसृष्टिश्च वासुदेवादीनां चतुर्णामैक्यम् । तेन [2] ।

मत्तस्सर्वं संभवति जगत्स्थावरजङ्गमम् ।
अक्षरं चक्षरंचैव सच्चाऽसच्चैवनारद ॥ ४१ ॥

इत्यत्र व्यष्टिसृष्टेरपि वासुदेवकर्तृकत्वम् ।

मां प्रविश्यभवन्तीह मुक्ता भक्तास्तुये मम ॥ ४२ ॥

इत्यत्र सृष्टिवाक्यानां [3] पितरिपुत्रस्येव जगत्पितरि वासुदवे भक्त्यनुष्ठान मूलकफलसिद्धितात्पर्यम् ॥

---

[1] अनिरुद्ध कर्तृकेति प्रथम कल्पाभिप्रायेण । द्वितीयकल्पे तु प्रद्युम्न कर्तृकेति बोध्यम् ॥

[2] अभेदोक्ति फलमाह तेनेति । एवं च वासुदेवस्यैव सर्वोत्पादकत्वं पर्यवस्यति । प्रद्युम्नानिरुद्धयोः क्रमशः उत्पत्ति प्रतिपादनं एकस्मिन्काले वासुदेवस्य न सङ्कर्षणादि विग्रहत्रयोत्पत्ति सङ्कल्पः अपि तु क्रमेणेति क्रमिक सङ्कल्पनिबन्धनमिति फलितम् । 'आकाशाद्वायुः वायोरग्निः अग्नेरापः' इत्यादिश्रुतावपि एषैवरीतिः । यथोक्तं शङ्कराचार्यैः (२-३-१०) 'यदापि ह्याकाशं वायुं च सृष्ट्वा वायुभावापन्नंब्रह्म तेजोऽसृजतेति कल्प्यते । तदापि ब्रह्मजत्वं तेजसोनविरुध्यते । यथा तस्याः श्रृतं तस्यादधि तस्या आमिक्षेत्यादि' इति । अतः सङ्कर्षणादीनां क्रमिकोत्पत्तिप्रतिपादन मात्रेण न वासुदेवाद्भेदस्सिद्ध्यति । अत एव पूर्वोदाहृत (२१, पु) विष्णुधर्मोत्तरवचने सङ्कर्षण प्रद्युम्नानिरुद्धानां वासुदेवाभेदोक्तिस्संगच्छत इति बोध्यम् ॥

[3] परम कारणत्वं स्वस्यैवाहेत्यवतार्य 'मत्तस्सर्वं संभवतीति, श्लोके अक्षरं जीवः इति नीलकण्ठेनापि व्याख्यातं ततश्च अक्षरसच्छब्दार्थस्य

अहं हि [1]पुरुषोज्ञेयो निष्क्रियः पञ्चविंशकः ।
निर्गुणोनिष्कलश्चैव निर्द्वन्द्वोनिष्परिग्रहः ॥ ४२ ॥

---

जीवस्य वासुदेवादुत्पत्तिकथन पूर्वकं वासुदेवभक्तानां तत्प्राप्त्यभिधानेन पितारिपुत्रस्येवमुमुक्षोः भगवति भक्त्यातत्प्राप्तिः इति सूच्यते । बृहदारण्यके (४-१-२०) 'एवमेतस्मादात्मनस्सर्वेप्राणाः' '(सर्व एत आत्मानः) व्युच्चरन्ति' इति श्रुति विवरणावसरे 'अत्र च सम्प्रदायविदः आख्यायिकां सम्प्रचक्षते कश्चित्किलराजपुत्रो जात मात्र एव माता पितृभ्यामपविद्धो व्याधगृहे संवर्धितः। सोऽमुष्यवंश्यतामजानन् व्याधजाति प्रत्ययो व्याधजातिकर्माण्येवानुवर्तते नराजास्मीति राजजातिकर्माण्यनुवर्तते । यदापुनः कश्चित्परमकारुणिको राजपुत्रस्य राजश्रीप्राप्तियोग्यतां जानन्नमुष्य पुत्रतां बोधयति न त्वं व्याधः अमुष्यराज्ञः पुत्रः कथं चिद्व्याध गृहमनुप्रविष्ट इति । स एवं बोधितः त्यक्त्वा व्याध जाति प्रत्ययकर्माणि पितृ पैतमहीमात्मनः पदवीमनुवर्तते राजाहमस्मीति' इति (उभा शं.) (उक्तेऽर्थेद्रमिडाचार्य सम्मतिमाह अत्र चेति आ. गि-व्या) शङ्कराचार्यप्रदर्शितद्रमिडाचार्य सम्मत राजकुमारन्यायः श्रीभाष्यकारैः समन्वयाधिकरण श्रीभाष्ये सम्यक्प्रदर्शितः जिज्ञासाऽधिकरणे भूमाधिकरणादौ चैतदेकदेशश्च । अयं च न्यायः (र-त्र-सा) उपोद्घाताधिकारे आचार्यपादैः परिष्कृत्य प्रदर्शितः । स एव न्यायोत्र विवक्षितः । (३३-३४ पु.) पूर्वोदाहृत भगवद्गीता वचनेषु पितरिपुत्रस्येव जगत्पितरिनित्ये भगवति पुत्रस्य जीवस्य निरतिशयभक्ति तत्प्राप्त्यादिकंस्फुटम् ॥

[1] पुरुषः सर्वशरीरीवासुदेवः निष्क्रियः दिभुत्वात्स्पन्दशून्यः यद्वा सृष्टिस्थितिलयरूपक्रियाशून्यः सङ्कर्षण प्रद्युम्नाऽनिरुद्धरूपेणैव तत्करणात् । तल्लयानन्तरं वासुदेवस्य निष्क्रियत्वं सम्भवति । निर्गुणः गुणत्रयाऽधिष्ठान-

**एत[1]त्त्वयानविज्ञेयं रूपवानिति दृश्यते ॥ ४३ ॥**
**इच्छन्मुहूर्तान्नश्येयमीशोऽहं जगतो गुरुः ।**
**[2]मायाह्येषामयासृष्टा यन्मां पश्यसि नारद ॥ ४४ ॥**
**सर्वभूतगुणैर्युक्तं नैवं त्वं ज्ञातुमर्हसि ।**
**[3]मयैतत्कथितं सम्यक्तवमूर्तिचतुष्टयम् ॥ ४५ ॥**

---

शून्यः । निष्कलः विग्रहस्य सावयवत्वेऽपि स्वरूपस्य निरवयवत्वात् । एतेन अचिद्वैलक्षण्यमुक्तम् । जीव वैलक्षण्यमाह निर्द्वन्द इत्यादिना ॥

[1] अत्र नीलकण्ठः—'ननु विश्वरूपस्यतवकथं निष्कलत्व मत आह । एतदिति । अयं रूपवानिति यदेतत्त्वयानज्ञातव्यम् । यतोहं मुहूर्तान्नश्शेय-मदृश्योभवेयं इच्छन्निति मदीक्षामात्रं सृष्टि संहारावित्यर्थः, इति व्याचख्यौ । अत्र नाशे वासुदेवेच्छाया एव हेतुत्व प्रतिपादनेन विश्वरूपस्य ज्ञाननिवर्त्यत्व रूपमिथ्यात्वं नास्तीति बोधितम् । तदेतत्प्रकटयति 'ईशोहं जगतो गुरुः, इत्यादिना । वासुदेवस्य प्राकृतसर्ववस्तु नियामकत्वमेव न तु तद्ध्रमाधिष्ठा-नत्वं नापि जगदभेद इति भावः ॥

[2] सर्वभूतात्मभूतः, समनः प्रद्युम्नः अनिरुद्धः सोहंकारः इत्यादौ पूर्वं प्राकृतपदार्था भेदो वासुदेवस्य प्रतीयत इति भ्रमं व्युदस्यति । मायेति । यत् जगद्रूपं मां पश्यसि एषा जगद्रूपा मया सृष्टा माया मूलप्रकृतिरित्यर्थः । मायाशब्देन जगतो न मिथ्यात्वसिद्धिरिति अन्यत्र स्पष्टम् । प्राकृतजगन्निया-मकत्वमात्रमेव न तु प्राकृतवस्त्वभेदः अतः स्वस्य सत्त्वरजस्तमोगुणवत्त्वं न कदापीत्याह । सर्वभूनगुणैर्युक्तामिति । एतेन पूर्वोक्तनिर्गुणत्वं प्राकृतगुण-शून्यत्वमेव न तु गुणसामान्यशून्यत्वमिति सिद्धम् ॥

[3] प्रद्युम्नानिरुद्धयोरहंकारमनोऽभेदाभावेन मूर्तिचतुष्टयस्यापि सम्यक्त्व-मित्याह । मयैतत्कथितमिति ॥

[1]अहं हि जीवसंज्ञोवै मयि जीवः समाहितः ।
मै[2]वं ते बुद्धिरत्राभूद्दृष्टोजीवोमयेति वै ॥ ४६ ॥
[3]अहं सवत्रगो ब्रह्मन्भूतग्रामान्तरात्मकः ।
भूतग्रामशरीरेषु नश्यत्सुननशाम्यहम् ॥ ४७ ॥

---

[1]मनोहंकारयोः मूलप्रकृत्यभेद एव । तन्नियामकत्वमेव वासुदेवस्येति कथनेपि 'स जीवः सङ्कर्षणः, इत्यत्र सङ्कर्षणे जीवाभेदोक्त्या वासुदेवे केषाञ्चित् जीवाभेदस्य सम्मततया च मूर्तिचतुष्टयस्य कथं सम्यक्त्वमित्याक्षेपमपाकरोति । अहं हीति । मयि जीवस्समाहित इति जीवसंज्ञत्वे हेतुकथनं इत्थं च जीवसंज्ञत्वं न जीवाभेदनिबन्धनं अपि तु जीवस्य स्वस्मिन्सम्यगाधाननिबन्धनमिति न मूर्तिचतुष्टयस्य सम्यक्त्वक्षतिरिति भावः । एतेन जीवमनोहंकाराणां संकर्षणाद्यभेदोक्तिः धारण नियमनविशेषनिबन्धनेत्युक्तं भवति तेन च 'न च जीवं विना' इत्यत्र जीवस्य द्वारत्वमात्रं विवक्षितमिति बोधितम् ॥

[2]वासुदेवस्य जीवाभेदाभावेन तद्दर्शनं जीवान्तर्यामिदर्शनमेव न तु जीवदर्शनमित्याह । मैवमिति ॥

[3]'इच्छन्मुहूर्तान्नश्येय'मित्यत्र वासुदेवस्यापि नाशः प्रतीयते । स च अचेतनवत् न स्वरूपपरिणामरूपः अपि तु 'ईशोहं जगतो गुरुः' इत्यत्रोक्ततदन्तर्यामित्वाभावरूप एव इति दर्शयति । अहं सर्वत्र ग इति । 'सर्वभूतात्मभूतोही'त्याद्युपक्रमे शरीरं प्रक्रम्य 'तदा विशती'ति 'उत्पन्न एव भवति शरीरं चेष्टयन्नि'ति च ईशोहं जगतो गुरुः अहं सर्वत्रगः, भूतग्रामान्तरात्मकः, इति उभयत्र व्याप्तिनियमनयोरुक्त्या सूक्ष्मचिदचिच्छरीरकं ब्रह्मकारणं स्थूलचिदचिच्छरीरकं तदेव कार्यमिति सिद्धान्तितं भवति अतश्च चेतनाचेतनयोः कार्यत्वं 'मत्तस्सर्वं संभवति' 'अक्षरंचक्षरंचैव' इति मध्येयदुक्तं तदत्रैव पर्यवसितं भवति तेननाद्वैतश्रुति विरोधः ॥

[1] सिद्धा हि ते महाभागा नराह्येकान्तिनोऽभवन् ।
तमो रजोभ्यां निर्मुक्ताः प्रवेक्ष्यन्ति च मां मुने ॥ ४८ ॥

इत्यत्र वासुदेवस्य मनोऽहंकारभूतनियमनं, मनोऽहंकारभूतानां मूलप्रकृतिपरिणामतया मूलप्रकृत्यभेदः तेन वासुदेवस्य भूतगुणशून्यत्वरूपं निर्गुणत्वं तदभिन्नसंकर्षणप्रद्युम्नाऽनिरुद्धानामपि तादृशत्वं अभिमानविशेषेण स्वस्मिन् जीवानां आधानेन जीवसंज्ञत्वं जीवाभेदाभावः स्वस्य सर्वभूतान्तर्यामित्वेन जीववत् भूतनाशेप्यनश्यत्वं तेन नित्यस्य राज्ञः स्वस्य नित्यकुमारभूतैः मुक्तैः प्राप्यत्वोपपादनम् ॥

[2] हिरण्यगर्भो लोकादि श्चतुर्वक्त्रोऽ[3]निरुक्तगः ।
ब्रह्मासनातनोदेवो मम बह्वर्थचिन्तकः ॥ ५१ ॥
ललाटाच्चैवमेरुद्रोममक्रोधाद्विनिस्सृतः ।
पश्यैकादश मे रुद्रान्दक्षिणं पार्श्वमास्थितान् ॥ ५२ ॥
द्वादशैव तथादित्यान्वामपार्श्वे समास्थितान् ।
अग्रतश्चैव मे पश्य वसूनष्टौ सुरोत्तमान् ॥

इत्यादिना—
त्रींश्चैवेमान्गुणान्पश्यमत्स्थान्मूर्तिविवर्जितान् ।

इत्यन्तेनस्वविभूति भूत ब्रह्मरुद्रादि प्रदर्शनम्—
देवानां च पितॄणां च पिताह्येकोऽहमादितः ।
अहं हयशिराभूत्वा समुद्रे पश्चिमोत्तरे ॥

---

[1] अचिद्वदत्यन्तपारतन्त्र्यमेव जीवस्यस्वरूपमिति नित्य राजकुमारत्वमेव जीवस्येति राजभूतवासुदेव प्राप्तिरेवजीवस्य न तु वासुदेवाभेद इति सम्यक्प्रतिष्ठापितं भवतीति निगमयति । सिद्धाहिते—प्रवेक्ष्यन्ति च मांमुने ॥ इत्यादिना—

[2] अत्र मैत्रायणीय श्रुतिर्मूलम् ॥

[3] नाम रूप विनिर्मुक्त जीवसमष्टिभूतः ॥

पिबामि सुकृतं हव्यं कव्यं च श्रद्धयान्वितम् ।
मयासृष्टः पुराब्रह्मा मांयज्ञमयजत्स्वयम् ॥
ततस्तस्मैवरान्प्रीतोदत्तवानस्म्यनुत्तमान् ।
मत्पुत्रत्वं च कल्पादौ लोकाध्यक्षत्वमेव च ॥

इत्यादिना—

प्रादुर्भावगतश्चाहं सुरकार्येषुनित्यदा ।
अनुशास्यस्त्वया ब्रह्मन्नियोज्यश्च सुतो यथा ।
एतांश्चान्यांश्च रुचिरान्ब्रह्मणेऽमिततेजसे ।
एवं रुद्रायमनवे इंद्रायाऽमिततेजसे ॥
अहं दत्वावरान्प्रीतो निवृत्तिपरमोऽभवम् ।

इत्यन्तेन—सर्वदेवपितृजनकस्य स्वस्य हयशिरो रूपधारिण एव पश्चिमोत्तर समुद्रप्रदेशे हव्यकव्यभोक्तृत्वं स्वसृष्टब्रह्मरुद्रादिभिर्यज्ञादिभिराराधितेनस्वेन तेषां अधिकारादि स्वप्रादुर्भावनियामकत्वादि पर्यन्तवराणांप्रदानम् ॥

[1] विद्यासहायवन्तं मामादित्यस्थं सनातनम् । ६९.
एकाकीविद्ययासार्धं विहरिष्येजगत्पुनः ॥ ७२.
ततो भूयोजगत्सर्गं करिष्यामीहविद्यया ।
अस्मन्मूर्तिश्चतुर्थीयासाऽसृजच्छेषमव्ययम् ॥
साहि संकर्षणःप्रोक्तः प्रद्युम्नंसोऽप्यजीजनत् ।
प्रद्युम्नादनिरुद्धोऽहं सर्गोममपुनःपुनः ॥
अनिरुद्धात्तथा ब्रह्मा तन्नाभिकमलोद्भवः ॥

---

[1] विद्याशब्दस्य लक्ष्म्यर्थकत्वं 'विद्यासहायवान्देवः' (ना. आ. १६–१९.) इत्येतद्विवरणावसरेस्फुटंभविष्यति ॥

ब्रह्मणस्सर्वभूतानि चराणिस्थावराणिच ।
एतांसृष्टिं विजानीहि कल्पादिषु पुनःपुनः ॥

इत्यत्र—लक्ष्मीविशिष्टस्यैव स्वस्य आदित्यमण्डलान्तस्थत्वं लक्ष्म्या-सहैवस्वेन सृष्ट्यादेःकरणं, अनिरुद्धाद्यभिन्नस्यापि लक्ष्मीवैशिष्ट्यं इत्थमेव प्रतिकल्पं [1] शुद्धाशुद्ध सृष्ट्यादिकम् ॥

सप्तमे—

शृणुनारदतत्वेन प्रादुर्भावान्महामुने ।
मत्स्यः कूर्मोवराहश्च नरसिंहोऽथवामनः ॥
रामो रामश्च रामश्च बुद्धः कल्कीतितेदश ॥ २

इत्युपक्रम्य [(३) मत्स्य (४) कूर्म (५–६) वराह (७) नरसिंह (८–१४) वामन (१५) भार्गवराम (१६–२०) दाशरथिराम (२१–४१) कृष्ण-राम (४२–४९) बुद्ध (५०–५२) कल्कि] दशा[2]वतारचरितं प्रादु-र्भावानामानन्त्यं विश्वरूपधरस्य वासुदेवस्यान्तर्धानं नारदस्य नर नारायणदर्शनार्थं बदर्याश्रमगमनम्—

इदं महोपनिषदंचतुर्वेद समन्वितम् ।

---

[1] भगवद्गीतायां (११. अ) विश्वरूपप्रदर्शन प्रकरणे अनुक्तस्यसङ्कर्षण प्रद्युम्नानिरुद्ध वृत्तस्य अत्र कथनमुखेन पञ्चरात्र प्रामाण्योक्त्या 'कथितोहरि-गीतासु समासविधिकल्पितः' (ना. आ. १५–१० १७–५३) इत्यादिना वक्ष्यमाणं पञ्चरात्रस्य गीतार्थविशदीकरण रूपत्वं उपपादितं भवति ॥

[2] अत्र बुद्ध परशुरामादयः गौणप्रादुर्भावाः प्रतिबुद्धैरनुपास्या इति अन्यत्रस्पष्टम् ॥

सांख्ययो[1]गकृतान्तेन पञ्चरात्रानुशब्दितम् ॥ ६२.
नारायणमुखोद्गीतं नारदोऽश्रावयत्पुनः ।
ब्रह्मणस्सदनेतात यथा दृष्टं यथा श्रुतम् ॥ ६३ ॥

इति पञ्चरात्रप्रामाण्यं आश्चर्यभूतस्य भगवन्माहात्म्यस्य साम्प्रदायिकत्वं (भानु, ऋषि, देव, असितद्विज, पितृ,शन्तनु, भीष्म,) पारम्पर्यक्रमागतस्याख्यानस्य अपात्रे अदेयत्वं आख्यानश्रवणपठनयोः देवप्राप्ति प्रयोजकत्वम्—

त्वयाऽपिसततंराजन्नभ्यर्च्यः पुरुषोत्तमः ।
स हि मातापिताचैव कृत्स्नस्य जगतो गुरुः ॥ ८२ ॥

इति भीष्मवचनानन्तरं—

श्रुत्वैतदाख्यानवरं धर्मराड्जनमेजय ।
[2] भ्रातरश्चास्य ते सर्वे नारायण पराभवन् ॥ ८४ ॥

इति धर्मराजादीनां पाञ्चरात्रिकैकान्ति धर्मानुष्ठानम् ॥ इति ॥

अष्टमे—यज्ञाग्रहराध्याये—

[3] कथं स भगवान्देवो यज्ञेष्वग्रहरः प्रभुः ।

---

[1] अत्र 'साङ्ख्ययोगशब्दाभ्यां ज्ञानयोग कर्मयोगावभिहितौ' इति (श्रीभा) ज्ञानयोग कर्मयोगोपेतमित्यर्थः । इति (श्रु—प्र) ॥

[2] एतेन गीतोपदेशानन्तरमर्जुनस्याप्येकान्ति धर्मानुष्ठान नियमो नेति सूचितं । अनुगीतोपक्रमे अर्जुनस्यस्मृतिभ्रंश प्रतिपादनेनाप्ययमर्थस्सिद्ध्यतीति गीता(१८)तात्पर्यचन्द्रिकायां स्पष्टम् ॥

एतेन द्रोणपर्वणि जयद्रथवधप्रस्तावे पाशुपतास्त्र सिद्धये अर्जुनेन रुद्रपूजाकृतेत्युक्तेर्नविरोधः ॥

[3] 'धर्मोविश्वस्य जगतः प्रतिष्ठा' 'धारणाद्धर्म इत्याहुः' इत्यादिनोक्तं यज्ञादि धर्माणां लोकधारकत्वं देवताप्रीतिद्वारकमिति अङ्गोपस्कृतेषु वेदेषु

यज्ञधारी च सततं वेदवेदाङ्गवित्तथा ॥ १ ॥
[1] कथं प्रवृत्ति धर्मेषु भागार्हादेवताः कृताः ।
कथं निवृत्ति धर्माश्च कृतान्यावृत्तबुद्धयः ॥ २ ॥
इति (शौ-प्र)
[2] अयं हि दुरनुष्ठेयो मोक्षधर्म स्सना[3]तनः ।
यं हित्वा देवतास्सर्वाः हव्यकव्यभुजो भवन् ॥ ९ ॥
[4] किञ्च ब्रह्माच रुद्रश्च शक्रश्च बलभित्प्रभुः ।
सूर्यस्ताराधिपोवायु रग्निर्वरुण एव च ॥ १० ॥
आकाशं जगतीचैव येच शेषादिवौकसः ।
प्रळयं न विजानन्ति आत्मनः परिनिर्मितम् ॥ ११ ॥
[5] ततस्ते नास्थितामार्गं ध्रुवमक्षरमव्ययम् ।

---

यज्ञकरणमन्त्रेषु प्रतीयमानानां तत्तद्देवतानामेव यज्ञभागार्हत्वं यज्ञादिसत्ता-निर्वाहकत्वं च वाच्यम् । एवं च वासुदेवस्य यज्ञेष्वग्रहरत्वं यज्ञधारित्वं च कथमिति प्रश्नार्थः ॥

[1] वासुदेवस्य यज्ञेष्वग्रहरत्वं देवतानां यज्ञभागार्हत्वाऽविरोधेनैवोपपाद-नीयम् । तच्च यज्ञरूपधर्मद्वैविध्यमङ्गीकृत्यकचिद्वासुदेवस्य क्वचित्तदन्यदेवतानां इति व्यवस्थयावाच्यम् । तथा व्यवस्थाच किन्निबन्धना इति भावः ॥

[2] मोक्षव्यतिरिक्त फलेच्छां विहाय क्रियमाण इत्यर्थः । 'क्रियास्वभ्यु-दयोक्तासु सक्ताद्दश्यन्तिसर्वशः' इत्यनन्तरमुक्तेः ॥

[3] सनातन शब्देन नश्वरदेवतानां मुमुक्षुभिरनुपास्यत्वं सूच्यते ॥

[4] तदेतद्दृढयति किञ्चेत्यादिना ॥

[5] एतेन ब्रह्मादि देवतानां स्वस्वप्रळयाऽज्ञानेन, जातस्याऽपि ज्ञानस्य अकार्यकरत्वेन वा उत्कटवैराग्याभावेन मोक्षमात्र फलेच्छया प्रवृत्यभावेन

[1] कथ भागहराः प्रोक्ताः देवताः क्रतुषुद्विज ।
[2] किमर्थं चाध्वरे ब्रह्म न्निज्यन्ते त्रिदिवौकसः ।
येच भागं प्रगृह्णन्ति यज्ञेषु द्विजसत्तम ॥
[3] ते यजन्तो महायज्ञैः कस्य भागं ददन्तिवै ॥ १८ ॥

इति (ज-प्र) प्रश्नद्वयमुपाक्षिप्य व्यासेन सुमन्तु, जैमिनि, पैल, वैशम्पायन कृतस्यास्यैव प्रश्नस्य यत्प्रतिवचनमुक्तं तदेवप्रतिवचनमुपक्रम्य समष्टिव्यष्टिसृष्टिः, एकादशरुद्रैः तदन्यैश्च चतुर्मुखसमीपं गत्वा स्वेषां कस्कोऽधिकारः केन केन च बलेन तत्परिपालनं इति पृष्टेन चतुर्मुखेन स्वस्य तन्निर्णयाशक्त्या—

इतस्सर्वेऽपि गच्छाम श्शरणं लोकसाक्षिणम् ।
महापुरुष मव्यक्तं स नो वक्ष्यति यद्धितम् ॥ ४३ ॥

इत्युक्त्यनन्तरं सर्वैः क्षीरोदोत्तरकूले दिव्यं वर्षसहस्रं दारुणतपसः करणम्—

एष ब्रह्मा लोक गुरु स्सर्वलोक पितामहः ।
यूयश्च विबुधश्रेष्ठाः मां यजध्वं समाहिताः ॥

---

मोक्षमात्रफलेच्छुभिः स्वकृतयज्ञेषु तेषां देवतात्वेन परिग्रहः न युक्त इति भावः ॥

[1] कथमिति । वेदमन्त्रेषु ब्रह्मादीनां देवतात्वं श्रूयते तच्च तेषां भागहरत्व मन्तरानघटते । तच्च भगवतो भागहरत्वे कथमित्यर्थः ॥

[2] किमर्थमिति । भगवत एव सर्वफल प्रदत्वात् ब्रह्मादीनां देवतात्वेन परिग्रहे न किञ्चित्फलमिति भावः ॥

[3] त इत्यादि । ब्रह्मादिकृत यज्ञेषु भगवत एवाराध्यत्वे सर्वत्राऽपि तस्यैवाराध्यत्वं संभवतीति भावः ॥

सर्वेभागान्कल्पयध्वं यज्ञेषु मम नित्यशः ।
तत्र श्रेयोभिधास्यामि यथाऽधीकारमीश्वराः ॥

इति वासुदेवस्याऽशरीरवचसश्श्रवणम्—वेददृष्टेन विधिना कृते वैष्णवे क्रतौ स्वस्वभागकल्पनम्—

येन यः कल्पितो भागः स तथा मा मुपागतः ।
यूयं यज्ञैरिज्यमाना स्समाप्त वरदाक्षिणैः ॥
युगे युगे भविष्यध्वं प्रवृत्ति फलभागिनः ।
योमे यथा कल्पितवा न्भागमस्मिन्महाक्रतौ ॥
स तथा यज्ञभागार्हो वेदसूत्रे मयाकृतः ।
[1] यूयं लोकान्भावयध्वं यज्ञभाग फलोचिताः ॥

---

[1] यद्यपि गीतायां—निवृत्ति धर्म प्रकरणे–(निष्कामकर्म)
यज्ञार्थात्कर्मणोन्यत्र लोकोयं कर्मबन्धनः ।
तदर्थं कर्मकौन्तेय मुक्त सङ्गस्समाचर ॥ ३ अ.

इत्युपक्रम्य—

देवान्भावयतानेन ते देवाभावयन्तुवः ।
परस्परं भावयन्तश्श्रेयः परमवाप्स्यथ ॥

इत्यादिकमुक्तं । तथापि तत्र काम्यकर्म न विवक्षितं अपि तु नित्यकर्मैवेति परैरप्यङ्गीकारेण नित्यकर्माणि देवतान्तरसंबन्धस्य तत्तद्देवान्तर्यामिपर्यंतत्वानुसन्धानेन देवतान्तर संबन्धप्रतिपादनस्य—

अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेवच ।
न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्तिते ॥
यान्तिदेवव्रतादेवान्—यान्ति मद्यजिनोऽपिमाम् ।

सर्वार्थचिन्तकालोके मयाधीकारनिर्मिताः ।
याः क्रियाः प्रचरिष्यान्ति प्रवृत्ति फल सत्कृताः ॥
ताभिराप्यायितवला लोकान्वैधारयिष्यथ ।
यूयं हि भावितायज्ञैः सर्वयज्ञेषु मानवैः ॥
मां ततो भावयिष्यध्वं एषावो भावना मम ।
[1] अयं क्रियावताम्पन्थाः व्यक्तीभूतस्सनातनः ॥
अनिरुद्ध इति प्रोक्तो लोकसर्गकरः प्रभुः ।
यतोहं प्रसूतः पूर्वमव्य[2] क्तात्रिगुणोमहान् ।
तस्मात्परतरो योसौ क्षेत्रज्ञ इति कल्पितः ॥

---

इति तत्रैवोक्तेः । अत्र तु 'लोकान्भावयध्वं' लोकान्वैधारयिष्यथ, इत्यत्र लोकपदेन तत्वज्ञानशून्याः विवक्षिता इति नानुपपत्तिः ॥

[1] पूर्वश्लोके, 'प्रवृत्तिधर्मिणश्चैते' इत्यत्रोक्त प्रवृत्तिधर्म एवात्र क्रियापदार्थः ॥

[2] पूर्वं महापुरुषं प्रस्तुत्य—

तस्मात्प्रसूतमव्यक्तं प्रधानं तं विदुर्बुधाः ।
अव्यक्ताद्व्यक्तमुत्पन्नं लोकसृष्ट्यर्थमीश्वरात् ॥
अनिरुद्धो हि लोकेषु महानात्मेति कथ्यते ।
योऽसौ व्यक्तत्वमापन्नो निर्ममे च पितामहम् ॥

इत्यत्र 'व्यक्तीभूतस्सनातनः । व्यक्तीभूतः, इत्यत्र च व्यक्ताभिमानित्वेन व्यक्तत्वमनिरुद्धस्योक्तम् । अत्राऽपि तदेव विवक्षितम् । 'यतोऽहं प्रसूतः, इति अनिरुद्धे अहमर्थवासुदेवाभेदस्योक्त्या अनिरुद्धात्परत्वं वासुदेवस्य विग्रहभेदेन ज्ञानादिषाड्गुण्याभिव्यक्तिनिबन्धनमिति पञ्चरात्रोक्तमर्थं दर्शयति कल्पित इत्यादिना ॥

सोऽहं क्रियावताम्पन्थाः पुनरावृत्तिदुर्लभः ॥
यो यथा निर्मितो जन्तु र्यस्मिन्यस्मिंश्च कर्मणि ॥
प्रवृत्तौ वा निवृत्तौ वा तत्फलं सोऽश्नुतेऽवशः ।
एष लोकगुरु र्ब्रह्मा जगदादिकरः प्रभुः ॥
एष माता पिता चैव युष्माक ञ्च पितामहः ।
मयाऽनुशिष्टो भविता सर्वभूतवरप्रदः ॥
अस्य चैवानुजो रुद्रः ललाटाद्यस्समुत्थितः ।
ब्रह्मानुशिष्टो भविता सर्वभूतवरप्रदः ॥
गच्छध्वं स्वानधीकारान् चिन्तयध्वं यथाविधि ।
प्रवर्तन्तां क्रियास्सर्वाः सर्वलोकेषु मा चिरम् ॥

इत्यत्र वासुदेवेन तद्यज्ञभागस्य स्वीकरणम् । प्रवृत्तिलक्षणधर्मेषु ब्रह्मादिदेवेभ्यो यज्ञभागस्य प्रदानम्। निवृत्तिधर्मेषु स्वस्यैव[1] यज्ञभागार्हत्वस्य कल्पनम् । ब्रह्मरुद्राभ्यां सर्वपुरुषवरप्रदानाधिकारस्य दानम् ।

इदं कृतयुगं नाम कालश्श्रेष्ठः प्रवर्तितः ।
अहिंस्या यज्ञपशवो युगेऽस्मि न्न तदन्यथा ॥
चतुष्पात्सकलो धर्मो भविष्यत्यत्र वै सुराः ।

---

[1] अत्रचाध्याये व्यासशिष्यस्य जैमिनेः कर्मसु देवतानां फलप्रदत्वस्य भगवतो निवृत्तिधर्माराध्यत्वस्य च गुरूपदेशान्निर्णयकथनेन कर्मणोऽपूर्वद्वारा-फलजनकत्वं उपनिषदां कर्मकर्तृस्तावकत्वं च व्यासं प्रति जैमिनिना पृष्टोऽर्थस्स्यान्न तु तात्पर्यविषयः इति सिद्ध्यति । तेन पूर्वोत्तरमीमांसयोरैकशास्त्र्यं निर्व्यूढम् ॥

इत्युपक्रम्य त्रेताद्वापरकलिषु एकैकपादधर्मह्रासोक्त्यनन्तरं ब्रह्मादि-देवकृतस्य कलौ वासप्रदेशप्रश्नस्य—

गुरवो यत्र पूज्यन्ते साधुवृत्तसमन्विताः ।
वस्तव्यं तत्र युष्माभिर्यत्र धर्मो न हीयते ॥
यत्र वेदाश्च यज्ञाश्च तपस्सत्यं दमस्तथा ।
[1] हिंसा च धर्मसंयुक्ता प्रचरेयुस्सुरोत्तमाः ।
स वै देशस्सेवितव्यः मा वोऽधर्मः पदा स्पृशेत् ।

इति प्रतिवचनम् । ब्रह्मव्यतिरिक्तदेवानां स्वस्वस्थानं प्रति गमनम्—

गतेषु त्रिदिवौकस्सु ब्रह्मैकः पर्यवस्थितः ।
दिदृक्षुर्भगवन्तं त मनिरुद्धतनौ स्थितम् ॥
तन्देवो दर्शयामास कृत्वा हयशिरो महत् ।
साङ्गा नावर्तयन्वेदान्कमण्डलु[2]त्रिदण्डधृक् ।

---

[1] अयमेव पाठः प्राचीनकोशेषु दृश्यते (र.त्र.सा) आचार्यपादादृतश्च । पूर्वं 'अहिंस्यायज्ञपशवोयुगेऽस्मिन्, इति कृतयुगे प्रत्यक्षपशुहिंसानिषेधोक्तिवत् कलियुगे तादृशप्रत्यक्षपशुहिंसानिषेधकवचनस्य महाभारतेऽनुपलम्भादयमव पाठोयुक्तः ॥

[2] परमोहंस एवादौ प्रणवं समुपादिशत् ।
उपादिशत्ततोवेदान् . . . . . ॥

इति (ह.श्री.स.) भगवच्छास्त्रवचनैकार्थ्यादत्रहयशिराः परमहंसः सन्यासीविवक्षितः । परमहंसस्य त्रिदण्डधारणं प्रमाणतस्साधितं शतदूषण्यां यतिलिङ्गभेदभङ्गवाद आचार्यैः । हयशिरोनुष्ठानोपज्ञमेव आत्मज्ञानदेशिकानां भगवद्यामुनरामानुजमुन्यादीनां त्रिदण्डधारणाद्यनुष्ठानम् ॥

ततोऽश्वशिरसन्दृष्ट्वा तन्देवममितौजसम् ॥
लोककर्ता प्रभुर्ब्रह्मालोकानां हितकाम्यया ।
मूर्ध्नाप्रणम्य[1]वरदं तस्थौप्राञ्जलिरग्रतः ॥
स परिष्वज्यदेवेन वचनं श्रावितस्तदा ।
लोककार्यगतीस्सर्वास्त्वं चिन्तय यथा विधि ॥
धातात्वं सर्व भूतानां त्वम्प्रभुर्जगतो गुरुः ।
त्वय्यावेशितभारोऽहं धृतिंप्राप्स्याम्यथाञ्जसा ॥
यदा च [2] सुरकार्यन्तेऽह्यविषह्यं भविष्यति ।
[3] प्रादुर्भावंगमिष्यामि तदात्मज्ञानदेशिकः ॥

---

[1] हयशिरसश्चतुर्मुखवरप्रदत्वं पूर्वं (५७ पु.) 'अहं हयशिराभूत्वा, (५८ पु.) 'ततस्तस्मैवरान्प्रीतो दत्तवान्' इत्यत्रव्यक्तम् ॥

[2] अत्र सुराः दिवौकसः दैवसम्पत्समृद्धाः भूसुरास्तदन्ये च विवक्षिताः। अत एव—यदा यदा हि धर्मस्य ग्लानिः—तदात्मानं सृजाम्यहम् ॥
परित्राणाय साधूनां—सम्भवामि युगेयुगे ॥
इति गीतावचनैकार्थ्यमुपपद्यते ।

[3] अत्र प्रादुर्भावः मत्स्यकूर्महंसादिः आचार्यपादपर्यन्तः विवक्षितः 'आत्मज्ञानदेशिक, इति अत्रैवोक्तेः ।
साक्षाद्देवो जगन्नाथः कृत्वा मर्त्यमयीं तनुम् ।
मग्नानुद्धरते लोकान्कारुण्याच्छास्त्रपाणिना ॥ (जय-सं)
पूर्वोत्पन्नेषु भूतेषु तेषुतेषु कलौ प्रभुः ।
अनुप्रविश्य कुरुते यत्समीहितमच्युतः ॥ वि.ध. १०-८-७)
इत्यादिवचनान्तरानुसाराच्च । हयग्रीव एव प्रादुर्भावेषु प्रथम इति एतत्प्रघट्टकार्थं

व्यासउवाच—

एवमुक्त्वा हयहयाशिरा स्तत्रैवान्तरधीयत ।

तेनानुशिष्टो ब्रह्माऽपि स्वंलोक मचिराद्गतः ॥

इत्यादौ चतुर्मुखस्य अनिरुद्धदर्शनार्थं गमनम् । अनिरुद्धेन च कमण्डलुत्रिदण्डधारि हयशिरोरूपस्य प्रदर्शनम्। हयशिरसा चतुर्मुखं प्रतिदेवकार्यार्थं आचार्यपर्यन्त मत्स्यकूर्मादिप्रादुर्भावान्परिग्रहिष्यामीत्युक्तिः । हयशिरोरूपान्तर्धानम् । ब्रह्मणस्स्वस्थानं प्रतिगमनम् ॥

विवस्वतेऽश्वशिरसे चतुर्मूर्तिंधृतेसदा ।

इत्यादि भगवत्स्तोत्रम् । एतदध्यायार्थ श्रवणादि फलकीर्तनम् ॥

नवमे—अर्जुनं प्रति भगवता (अध्यायत्रयेण) नारायणादिस्वनाम्नां निर्वचनप्रसङ्गे—

यस्य प्रसादजोब्रह्मा रुद्रश्चक्रोध सम्भवः ।

योऽसौयोनिर्हि सर्वस्य स्थावरस्य चरस्य च ॥ १२ ॥

तस्मात्सर्वाः प्रवर्तन्ते सर्गप्रळय विक्रियाः ॥ १५ ॥

एतौ द्वौ विबुधश्रेष्ठौ प्रसादक्रोधजौस्मृतौ ।

---

परकालमुनिः श्रीसूक्ताख्यप्रबन्धे सप्तमशतके शठकोपमुनिश्च श्रीमुखसूक्ताख्यप्रबन्धे द्वितीय शतके प्राकाशयताम्—एतत्सर्वमभिप्रेत्याहुराचार्यपादा अपि (श. दू.) ॥

हयमुखमुखैस्तत्तद्रूपैरकर्मविनिर्मितैः

उपदिशति य स्तथ्यं पथ्यं सतामवसीदताम् ।

जननपदवी यातायातश्रमापहरान्धियं

जनयतु स मे देवश्श्रीमान्धनञ्जयसारथिः ॥ इति ॥

तदादर्शितपन्थानौ सृष्टिसंहारकारकौ ॥ १९ ॥
निमित्तमात्रं तावत्र सर्वप्राणिवरप्रदौ ॥ २० ॥

इत्यनेन 'एकोहवैनारायण आसीन्नब्रह्मानेशानः तस्यध्यानान्तस्थस्य ललाटात्र्यचक्षुश्शूलपाणिः पुरुषोऽजायत तस्यध्यानान्तस्थस्य ललाटात्स्वेदोऽपतत् ता इमाः प्रतता आपः ताद्धिरण्मय मण्डमभवत् तत्र ब्रह्माचतुर्मुखोऽजायत' 'स प्रजापतिः पुष्करणपर्णे समभवत्' इति महोपनिषदाद्युक्तक्रमेणनारायणस्य परत्व बोधकं ब्रह्मरुद्रयोः नारायण प्रसादक्रोधजत्वं सर्गप्रळयसामान्यस्यापितत्प्रवर्त्यत्वं ब्रह्मरुद्रयोः तच्छासनानुसारेण सृष्टिसंहारकारकत्वं सर्वप्राणिवरप्रदत्वं च रुद्राराधकानां रुद्रेणवरदानस्य भगवच्छासन मूलकत्वोपपादकम्—

'कपर्दीजटिलोमुण्डः . . . . ।
नारायणात्मको[1]ज्ञेयः पाण्डवेय युगे युगे' ॥

इत्यन्तेन रुद्रस्य नारायणान्तर्यामिकत्वं तेन च—

अस्मिन्हिपूज्यमाने हि देवदेवेमहेश्वरे ।
सम्पूजितो भवेत्पार्थदेवो नारायणः प्रभुः ॥

इत्यनेन[2]शरीरपूजायाः शरीरिपर्यवसानवत् [3]रुद्रपूजायाः नारायणेपर्यवसानम्—

---

[1] नारायणात्मक इत्यत्र आत्मशब्दः 'अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा' इत्यादिश्रुत्यनुसारात् अन्तःप्रविश्य नियन्तृवचन इति भावः ॥

[2] शरीरपूजाया इति । अयं राजेति ज्ञानविधुरेणापि पुंसा राजशरीरे अर्पितं पुष्पमालादिकं राजप्रीतिकरं भवत्येवेति सर्वजनविदितमेतत् ॥

[3] रुद्रपूजाया इति । रुद्रान्तर्यामी नारायण इति ज्ञानाभावेपि रुद्रपूजा नारायण एव पर्यवस्यति तदुक्तं गीतायाम्—

येप्यन्यदेवता भक्ता यजन्ते श्रद्धयान्विताः ।

[1]अहमात्मा हि लोकानां [2]विश्वेषां पाण्डुनन्दन ॥ २३ ॥
तस्मादात्मानमेवाग्रे रुद्रं सम्पूजयाम्यहम् ।
[3]यद्यहंनार्चयेयंवै ईशानं वरदं शिवम् ॥ २४ ॥
आत्मानं नार्चयेत्कश्चिदिति मे भावितात्मनः ।
मया प्रमाणं हि कृतं लोकः समनुवर्तते ॥ २५ ॥
प्रमाणानि हि पूज्यानि ततस्तं पूजयाम्यहम् ।
य[4]स्तं वेत्तिसमां वेत्तियोऽनुतं स हि मामनु ॥ २६ ॥
रुद्रोनारायणश्चैव सत्वमेकं द्विधाकृतम् ।

---

तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम् ॥ इति ॥

[1]एतेन 'अन्तः प्रविष्टः शास्ता जनाना'मिति श्रुतिः अन्तर्यामिब्राह्मणं च नारायणपरमिति ख्यापितम् । अयमर्थः शाङ्कर (बृ. आ.) भाष्यवार्तिकादिवाक्यैः 'ईश्वरो हि जगत्स्रष्टा' इति श्लोकविवरणावसरे स्थिरीकरिष्यते ॥

[2]एतेन विश्वान्तर्यामित्वं भगवतः रुद्रान्तर्यामित्वमन्तरा न घटते तेन च उत्तरार्धगतरुद्रशब्दोऽपि रुद्रान्तर्यामिपर इति द्योतितम् ॥

[3]एतावता भगवतः रुद्रान्निकर्षो नास्तीति सिद्ध्या रुद्रपूजामन्तरैव स्थितिसंभवे रुद्रपूजनं किमर्थमिति शङ्कायां पूर्वं रुद्राय स्वेन दत्तस्य वरस्य कार्यकारित्वसंपादनार्थमित्यभिप्रेत्याह यद्यहमित्यादिना ॥

[4]ज्ञानिनां विशेषमाह यस्त्वं वेत्तीत्यादिना 'नारायणात्मको ज्ञेयः, 'एतौ द्वौ विबुधश्रेष्ठौ प्रसादक्रोधजौ स्मृतौ । निमित्तमात्रं सर्वप्राणिवरप्रदौ' इति पूर्वोक्तेन यथावस्थिताकारेण वेत्तीत्यर्थः ॥

लोके चरति कौन्तेय [1]व्यक्तिस्थं सर्वकर्मसु ॥ २७ ॥
[2]न हि मेकेन चिद्देयो वरः पाण्डवनन्धन ।
इति संचिन्त्यमनसा पुराणं रुद्रमीश्वरम् ॥ २८ ॥
पुत्रार्थमाराधितवानहमात्मानमात्मना ।
[3]न हि विष्णुः प्रणमति कस्मै चिद्विबुधायच ॥ २९ ॥
ऋते आत्मान मेवेति ततोरुद्रं नमाम्यहम् ।

इत्यन्तेन सर्वान्तर्याम्यहमेवेति रुद्रान्तर्यामिण[4]मात्मानं पूजयामि—रुद्रस्य[4]वरदानाधिकारसङ्कल्पं मत्कृतमनुसृत्य लोकः प्रवर्तते । मया रुद्रपूजाया अकरणे श्रेष्ठजानाचारानुसारी लोकोऽपि रुद्रपूजां जह्यात्। तथासति रुद्रस्य वरदानाधिकारसङ्कल्पस्य मदीयस्य भङ्गस्स्यात् । नारायणात्मकं रुद्रं योवेत्ति स मां वेत्ति यो नारायणात्मकं रुद्रमनुसरति समामनुसरति नारायणात्मको रुद्रो नारायणश्चैकं तत्त्वं विशिष्टं विशेषणविशेष्यभावेन द्विधाकृतं न मे केनचिद्वरोदेयः न हि विष्णुः कस्मै चिद्विबुधाय प्रणमति । अतः पुत्रार्थं रुद्रान्तर्यामिणमेवाराधितवान्नमामि च । इति नारायण ललाटोद्भूतस्य तदादर्शितमार्गेण संहारकारकस्य तदनुग्रहलब्धवरदानशक्तिमतो नारायणात्मकस्य प्रादुर्भाव-

[1] एकमित्यस्यात्राप्यनुषङ्गः । व्यक्तिस्थम् । तत्तद्देवताव्यक्तिस्थं तत्तद्देवतान्तर्यामीति यावत् । 'अहमात्मा हि लोकानां, 'व्यक्तिस्थं सर्वकर्मसु' इत्युपक्रमोपसंहाराभ्यां वासुदेवस्य सर्वकर्मसमाराध्यत्वं निर्णीतम् ॥

[2] नहीति । एतेन कृष्णस्य रुद्राराधनं वरलाभार्थमिति भ्रमो व्युदस्तः ॥

[3] तदेव द्रढयति नहीति ॥

([4] ना. ६ अ. ६७. ९ अ. २०) इत्यत्र साक्षात् । (८ अ. ७७) इत्यत्र परम्परया वरदानाधिकारस्योक्तेरिति भावः ॥

दशायां स्वानुशासकत्वेन [1]पूर्वं हयशिरसाऽनुगृहीतस्य रुद्रस्य पूजनेऽपि न स्वस्य रुद्रान्निकर्ष इति प्रख्यापनम्—

[2]सब्रह्मकाः [3]सरुद्राश्च सेन्द्रा देवाः सहर्षिभिः ॥ ३० ॥
अर्चयन्ति सुरश्रेष्ठं देवं नारायणम् हरिम् ।
भविष्यतां वर्तताञ्च भूतानां चैव भारत ॥ ३१ ॥
सर्वेषामग्रणी[4]र्विष्णुस्सेव्यः पूज्यश्च नित्यशः ।
नमस्व हव्यदं विष्णुं तथा शरणदं नमः ॥ ३२ ॥
वरदं नमस्व कौन्तेय हव्यकव्यभुजं नमः ।

इति नारायणस्य ब्रह्मरुद्रादिसर्वदेवाराध्यत्वम् । तदवतारभूतस्य त्रिमूर्तिमध्यगतस्यापि विष्णोस्सर्वोत्तमत्वं हव्यकव्यभुक्त्वम्—

---

[1]ना. ६. ६६ ॥

[2]नारायणस्य सर्व देवताश्रेष्ठत्व, सर्वदेवताचर्यत्व कथनमुखेन 'नहिमे' 'नहि विष्णुः' इत्युक्तमर्थं साधयति 'स ब्रह्मका' इत्यादिना ॥

[3]अत्र रुद्रस्य ब्रह्मतदितर इन्द्रादि देवऋषि घटित समुदायान्तर्भावस्य कथनेन नारायणस्य सर्व सुरश्रेष्ठत्वाभिधानेन हरिमित्यनेन 'किञ्चब्रह्मा च रुद्रश्च । प्रळयं न विजानन्ति आत्मनः' (ना. ८. ११.) इति पूर्वोक्तरीत्या रुद्रसंहर्तृत्व प्रकाशनेन च पूर्वं रुद्र नारायणयो स्वरूपैक्यं न विवक्षितमिति स्फुटमावेदितम्—

अत्र—

[4]अर्चयन्तिसुरश्रेष्ठं देवं नारायणं हरिम् ।
सर्वेषामग्रिणीर्विष्णुस्सेव्यः पूज्यश्चनित्यशः ।

इत्युभाभ्यां विष्णुनारायणयोः स्वरूपैक्यं सिद्धम् ॥

[1] चतुर्विधा मम जना [2] भक्ता एव हि ते श्रुताः ॥ ३३ ॥
तेषा[3]मेकान्तिनः श्रेष्ठाः ते चैवा[4]नन्यदेवताः ।
अहमेव [5] गतिस्तेषां निराशीः कर्मकारिणाम् ॥ ३४ ॥
ये तु शिष्टास्त्रयोभक्ताः[6] फलकामा हि ते मताः ।

---

[1] ब्रह्मरुद्रादिभक्तापेक्षया भगवद्भक्तस्योत्कर्षकथनमुखेन भगवतः सर्वस्मात्परत्वं 'चतुर्विधाभजन्तेमां (७.१४) इति गीतैककण्ठ्येन बोधयितुमुपक्रते । 'चतुर्विधाममजना' इत्यादिना ॥

[2] अत्र भक्ता एवेत्येवकारेण अभक्तः ज्ञानीनास्तीतिबोधनमुखेन भक्तित्वानाक्रान्तं ज्ञानं न कार्यकरमित्यर्थस्यावेदनेन 'ज्ञानीनित्ययुक्त एकभक्तिः' इत्यन्वयेन गीतोक्तार्थः व्यतिरेकेणोक्तः ॥

[3] एकत्र, सुरश्रेष्ठे नारायणे 'अन्तः' पूर्वोक्तरीत्या श्रेष्ठत्वस्य निर्णयेन 'अहमेवगतिस्तेषा, मितिवक्ष्यमाणदिशाप्राप्यत्वस्य निश्चयः येषां ते एकान्तिनः एतत्स्थाने 'एकभक्ति'रितिगीता ॥

[4] निश्चयफलमाह । अनन्यदेवता इति । अन्याः 'मम' इत्यत्रोक्त वासुदेवव्यतिरिक्ताः 'सब्रह्मकाः' 'ब्रह्मणं शितिकण्ठंच' इति पूर्वं परत्र च शब्दतउक्ताः ब्रह्मरुद्रादि देवताः स्वोपास्या न विद्यते येषां ते अनन्यदेवताः । नारायणस्य सर्वस्मात्परत्व निश्चयेन देवतान्तर भक्तिविधुराः इति फलितम् ॥

[5] गतिः प्राप्यः, 'मामेवानुत्तमांगतिम्, ७. १८. 'मद्भक्तायान्तिमामपि' ७. २३. इति हि गीता ॥

[6] अत्र फलपदं 'अहमेवगति'रिति पूर्वमुक्तया भगवद्व्यतिरिक्त फलपरम् 'येतु' इत्यत्र तु शब्देन फलकामानां भगवतः प्राप्यत्वनिश्चय वैधुर्येण एकान्ति वैलक्षण्यबोधनाच्च ॥

सर्वेच्यवनधर्माणः[1] प्रतिबुद्धस्तु[2] मोक्षभाक् ॥ ३५ ॥

---

[1] पूर्वोक्त एकान्त्येव प्रतिबुद्धशब्देन बोध्यते । 'चतुर्विधा मम जना भक्ता एव, इति उपक्रम एवास्य भक्तत्वं स्फुटम् । प्रतिबोधे च नारायण-कटाक्षः हेतुरिति—

नारायणेन दृष्टस्तु प्रतिबुद्धो भवेत्पुमान् ।
एवमात्मेच्छया राजन्प्रतिबुद्धो न जायते ॥

इति (नारा १७ ७५) इत्यत्र वक्ष्यते ।

[2] अत्र 'प्रतिबुद्धस्तु मोक्षभाक्' इत्येव पाठः प्राचीनलिखितकोशेषु तदनुसारि (वा–रा–शा) मुद्रितकोशेऽपि दृश्यते । आचार्यपादसम्मतश्च ॥

शङ्कराद्ज्ञानमन्विच्छेन्मोक्षमिच्छेज्जनार्दनात् ।

इति स्मृतौ—

बन्धको भवपाशेन भवपाशाच्च मोचकः ।
कैवल्यदः परम्ब्रह्म विष्णुरेव सनातनः ॥

इति (भाग ११-११) श्रीधरोदाहृतस्कान्दवचने—

एषनो मोक्षदाता च एषमार्ग उदाहृतः ।
ध्यात्वा मां सर्वयत्नेन ततो जानीत केशवम् ॥
उपास्योयं सदा विप्राः उपायोस्मि हरेः स्मृतौ ।

इति हरिवंशे कैलासयात्राप्रकरणे मुनीन्प्रति रुद्रोक्तौ—

मुक्तिप्रदाता सर्वेषां विष्णुरेव न संशयः ।

इति (हरि कै. या. प्र. १२४ अ.) कृष्णं प्रति शिवभक्तघण्टाकर्णेन शिव-वचनस्यानूक्तौ च विष्णोरेव मोक्षप्रदत्वं स्पष्टम् ।

अत एव परव्याख्यातृभिरादृतायां रामतापनीयोपनिषदि—

श्रीरामस्य मनुं काश्यां जजाप वृषभध्वजः ।

मन्वन्तरसहस्रैस्तु जपहोमार्चनादिभिः ॥
ततः प्रसन्नो भगवाञ्छ्रीरामः प्राह शङ्करम् ।
वृणीष्व यदभीष्टंतद्दास्यामि परमेश्वर ॥ इति ॥

ततः सत्यानन्दचिदात्मानं श्रीराममीश्वरः पप्रच्छ—

मणिकर्ण्यां वा मत्क्षेत्रे गङ्गायां वा तटे पुनः ।
म्रियते देहि तज्जन्तोर्मुक्तिं नातोवरान्तरम् ॥ इति ॥

अथ होवाच श्रीरामः—

क्षेत्रेऽत्र तवदेवेश यत्र कुत्राऽपि वा मृताः ।
क्रिमिकीटादयोऽप्याशु मुक्ताः सन्तु नचान्यथा ॥
अविमुक्ते तव क्षेत्रे सर्वेषां मुक्तिसिद्धये ।
अहं संनिहितस्तत्र पाषाणप्रतिमादिषु ॥
क्षेत्रेऽस्मिन्योऽर्चयेद्भक्त्या मन्त्रेणानेन मां शिव ।
ब्रह्महत्यादिपापेभ्यो मोक्षयिष्यामि माशुचः ॥
त्वत्तो वा ब्रह्मणो वाऽपि ये लभन्ते षडक्षरम् ।
जीवन्तो मन्त्रसिद्धास्स्युर्मुक्तामां प्राप्नुवंति ते ॥
मुमुक्षोर्दक्षिणेकर्णे यस्य कस्यापि वा स्वयम् ।
उपदेक्ष्यसि तन्मन्त्रं समुक्तो भविता शिव ॥

इत्युक्तिस्संगच्छत—एतेन 'रुद्रस्तारकं ब्रह्मव्याचष्टेयेनासावमृतीभूत्वामोक्षीभवति' (जा-उ-१) इत्यत्र रामतारकं विवक्षितं तेन तत्रैवोत्तरत्र 'किंजप्येनामृतत्वं—शत-रुद्रीयेणेत्येतानि वा अमृतस्यनामधेयानि' इत्येतदपिपरं परयेतिसिद्धम् 'यश्शत-रुद्रीयमधीते-अनेनज्ञानमाप्नोति-तस्मादेवं विदित्वैनं कैवल्यंफलमश्नुते' (कै-उ) इत्यत्रपि वेदवेद्यपुरुषशब्दवाच्यवासुदेवज्ञानद्वारकमेव कैवल्यं विवक्षितमिति बोध्यम् ॥

ब्रह्माणंशितिकण्ठं च याश्चा[1]न्यादेवताः स्मृताः ।
[2]प्रतिबुद्धान [3]सेवन्ते यस्मात्परिमितं फलम् ॥ ३६ ॥
भक्तम्प्रतिविशेषस्ते एषपार्थानु कीर्तितः ।
[4]त्वं चैवाहं च कौन्तेय नरनारायणौ स्मृतौ ॥ ३७ ॥
भारावतरणार्थं तु प्रविष्टौमानुषींतनुम् ।
जानाम्यध्मात्मयोगांश्च योऽहं यस्माच्चभारत ॥ ३८ ॥

---

[1] सब्रह्मकाः सरुद्राश्च सेन्द्रादेवास्सहर्षिभिः ।
इति पूर्ववचनानुसाराद्विष्णोरपि व्यतिरिक्ता इन्द्रादिदेवता एव अन्या देवताः ।

[2] अयमेवपाठः प्राचीनलिखित कोशेषु तदनुसारि (वा–रा–शा) मुद्रित-कोशे च दृश्यते शिवतत्त्वविवेकेऽप्ययमेवपाठ आदृतः —

कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः । (गी. ७-२०)
अन्तवत्तुफलंतेषां तद्भवत्यल्पमेधसाम् ॥ (गी. ७-२३)
येऽप्यन्यदेवताभक्ताः यजन्तेश्रद्धयाऽन्विताः । (गी. ९-२३)
न तु मामभिजानन्ति तत्वेनातश्च्यवन्तिते ॥ (गी. ९-२४) इत्यादि

गीतैकार्थ्यादयमेव पाठोयुक्तः । न तु—

'प्रबुद्धचर्यास्सेवन्तो मामैवैष्यन्तियत्फलम्' ॥

इत्याधुनिक मुद्रितकोशपाठः । नारायणस्यैवसर्वदेवेभ्यः परत्वंह्यस्मिन्प्रकरणे प्रतिपाद्यते । परदेवताभक्तानामेवपरफलप्राप्तिः न अवरदेवताभक्तानां इत्यर्थ एवात्र प्रतिपिपादयिषितः । अतः 'प्रतिबुद्धानसेवन्त' इत्यादिपाठ एवयुक्तः ॥

[3] एतेन उपक्रमे 'भक्ता' इत्यत्र भजसेवायामिति धातुरेवविवक्षित इति बोधितम् । तेन च भगवदेकान्तभक्ताः देवतान्तरभक्ता न भवन्तीति पर्यवसायितम् । प्रतिबुद्धशब्दार्थस्तुपूर्ववत् ॥

[4] अत्रार्जुनस्य गौणप्रादुर्भावतैव जीवत्वात्—एतेन रुद्रस्यापि गौण-प्रादुर्भावत्वमेव । बुद्धपरशुरामादिवदिति व्याख्यातम् ॥

इत्यनेन ब्रह्मरुद्रयोर्मोक्षव्यतिरिक्त फलदान सामर्थ्यस्यदानेऽपिस्वमात्र भक्तानां मोक्षव्यतिरिक्त फलकामानां स्वेनैवतल्लाभः स्वमात्र भक्ताना-मितर भक्तापेक्षयाश्रैष्ठ्यं तत्रापि प्रतिबुद्धानां निराशीः कर्मकारिणां स्वस्यैव प्राप्यत्वं प्रापकत्वं मोक्षस्य नित्यत्वं । तदितरफलस्या-नित्यत्वं स्वेतरदेवतानां परिमितफलदातृत्वेन प्रतिबुद्धासेव्यत्वं इति भगवद्भक्तस्य विशेषः । स्वस्य सर्वलोकात्मत्वस्य पूर्वोक्तस्य स्थाप-नाय नारायणावतारत्वम्, अर्जुनस्य नरावतारत्वं चाभिधाय नारा-यणादिनाम्नां निर्वचनम् ॥

दशमे— विश्वरूपवृत्तान्ते—'इन्द्रो दधीचोस्थभिः' [1]'अथा-ब्रवीद्वृत्रमिन्द्रो हनिष्यन् सखे विष्णो वितरं विक्रमस्व' इत्यादि-श्रुत्यर्थनिष्कर्षणम् ॥

एकादशे, केषांचिन्नाम्नां निर्वचनानन्तरं—(३२-३५) श्लो. भगवतस्सर्ववेदप्रवर्तकत्वम्—

यत्तद्धयशिरः पार्थ समुदेति [2]वरप्रदम् ।
सोऽहमेवोत्तरे भागे क्रमाक्षरविभागवित् ॥ ३६ ॥

इत्यनेन हयशिरसः क्रमाक्षरविभागवित्त्वं वरप्रदत्वं कृष्णैक्यं च । मुञ्ज-केशनामनिर्वचनप्रसङ्गे दक्षयज्ञे रुद्रनारायणयोर्युद्धम्—

अहं प्रसादजस्तस्य कुतश्चित्कारणान्तरे ।
त्वं चैव क्रोधजस्तात पूर्वसर्गे सनातनः ॥ ६२ ॥

---

[1] एतत्तत्वं हयशिरोवतार श्लोकविवरणावसरे व्यक्तीभविष्यति ॥

[2] अहंहयशिराभूत्वा समुद्रे पश्चिमोत्तरे ।
पिबामिसुहुतं हव्यं कव्यं च श्रद्धायाऽन्वितम् ॥ ना. ६.६०
इति पूर्वोक्तार्थः वरप्रदशब्देन विशदीकृतः ॥

मया च सार्धं [1] वरदं विबुधैश्च महर्षिभिः ।
प्रसादयाशु लोकानां शान्तिर्भवतु मा चिरम् ॥ ६३ ॥
ब्रह्मणा त्वेवमुक्तस्तु रुद्रः क्रोधाग्निमुत्सृजन् ।
प्रसादयामास ततो देवं नारायणं प्रभुम् ॥
शरणं च जगामाद्यं वरेण्यं [1] वरदं [2] हरिम् ॥ ६४ ॥
ततोऽथ वरदो देवो जितक्रोधो जितेन्द्रियः ।
प्रीतिमानभवत्तत्र रुद्रेण सह सङ्गतः ॥ ६५ ॥
ऋषिभिर्ब्रह्मणा चैव विबुधैश्च सुपूजितः ॥
उवाच देवमीशानमीशः [3] स जगतो हरिः ॥ ६६ ॥
य[4]स्त्वां वेत्ति स मां वेत्ति यस्त्वामनु समामनु ।
नावयो[5]रन्तरं किञ्चिन्मा तेऽभूद्बुद्धिरन्यथा ॥ ६७ ॥

---

[1] अत्र वरदपदद्वयेन भगवतः प्रसादक्रोधजयोरुभयोः तस्यैववरप्रदत्व-स्योक्त्याब्रह्मरुद्राभ्यां परत्वं स्फुटम् ॥

[2] इलोपहूतं गेहेषु हरेभागं क्रतुष्वहम् ।
वर्णोमेहरितश्रेष्ठः तस्माद्धारिरहंस्मृतः ॥

इति अत्रैव (११-३) निर्वचनाद्यनुसारेण ब्रह्मरुद्रादिसर्वदेवकृत यज्ञभागहर्तारं इति हरिमित्यस्यार्थः ॥

[3] 'ईशस्सजगत' इत्यत्र जगत इति पदेन ईशानपदार्थस्य रुद्रस्य जगदीशत्वं नास्तीति सूचितम् ॥

[4] मत्क्रोधजं मदनुग्रहाधीनवरलाभवन्तं त्वांवेत्ति इत्यर्थः पूर्वं 'त्वंचैवक्रोधज' इत्यत्र रुद्रस्यक्रोधजत्वस्य 'वरद' मित्यनेन भगवदनुग्रहाधीन वरलाभवत्वस्य च बोधनात् ॥

[5] अन्तरं—छिद्रं, छिद्रं, दूषणमितिमेदिनी—

इत्यनेन ब्रह्मरुद्रयोः भगवत्प्रसादक्रोधजत्वं रुद्रेण शरणवरणेन भगवतः प्रसादनं ततो भगवता रुद्रे प्रीतिकरणं नारायणजन्यत्वेन रुद्रस्य ज्ञाने भगवतोऽपि ज्ञानं पितृपुत्रयोस्साक्षाद्भक्तस्वामिनोरिव नारायणरुद्रयोः किञ्चिदन्तरं नास्तीति प्रतिपाद्य अर्जुनं प्रति भगवता स्वक्रोधजस्य रुद्रस्य नन्तव्यत्वस्य कथनम् प्रतिवचन समापनं च ॥

द्वादशे–श्वेतद्वीपाद्बदरिकाश्रमं गतेन नारदेन—

तत्र ये पुरुषाः श्वेताः पञ्चेन्द्रियविवर्जिताः ।
प्रतिबुद्धाश्च ते सर्वे भक्ताश्च पुरुषोत्तमम् ॥ ५३ ॥
तेऽर्चयन्ति सदा देवं तैः सार्धं रमते च सः ।
प्रियभक्तो हि भगवान्परमात्मा द्विजप्रियः ॥ ५४ ॥
रमते सोऽर्च्यमानो हि सदा भागवतप्रियः ॥ ५५ ॥
साङ्गानावर्तयन्वेदांस्तपस्तेपे सुदुश्चरम् ।
यद्ब्रह्मा ऋषयश्चैव स्वयं पशुपति[1]श्च यत् ॥ ६२ ॥
हव्यं कव्यं च सततं विधियुक्तं प्रयुञ्जते ।
कृत्स्नं तु तस्य देवस्य चरणावुपतिष्ठतः ॥ ६३ ॥

---

छिद्राण्यस्यतुवाञ्छन्तियज्ञघ्नाः ब्रह्मराक्षसाः । प्रहरेदन्तरेरिपुम् ॥

इति शब्दकल्पद्रुमे, इत्थंच पितृपुत्रयोः स्वामिभक्तयोः नारायणरुद्रयोः छिद्रं न सम्भवतीति भावः । एवञ्च—

प्रीतिमानभवत्तत्र रुद्रेण सहसङ्गतः ।

इति पूर्वश्लोकार्थः पोषितो भवति—

[1] 'स ब्रह्मकाः स रुद्राश्च' इति पूर्वत्रैव रुद्रस्यापिविष्णुभक्तत्व विष्णुप्रियतरत्व प्रतिपादनेन 'प्रीतिमानभवत्तत्र' इति पूर्वोक्तार्थः अत्राऽपि परिपोषितो भवति ॥

[1] याः क्रियाः संप्रयुक्तास्स्युरेकान्तगतबुद्धिभिः ।
ताः सर्वाः शिरसादेवः प्रतिगृह्णातिवैस्वयम् ॥ ६४ ॥
न तस्यान्यः प्रियतरः प्रतिबुद्धैर्महात्मभिः ।
विद्यतेत्रिषु लोकेषु ततोऽस्म्यैकान्तिकंगतः ॥ ६५ ॥

इत्यादिना एकान्तिषु प्रतिबुद्धेषु ब्रह्मारुद्राद्यपेक्षया भगवतोऽधिकप्रीतिः । त्रयोदशे–नरनारायणाभ्यामुक्तार्थमनूद्य—

ये तु दग्धेन्धनालोके पुण्यपापविवर्जिताः ।
तेषां वैक्षेममध्वानं गच्छतां द्विजसत्तम ॥ १३ ॥
सर्वलोक तमोहन्तां आदित्योद्वारमुच्यते ।
ज्वालामाली महातेजायेनेदं धार्यते जगत् ॥ १४ ॥
आदित्यदग्धसर्वाङ्गा अदृश्याः केनचित्क्वचित् ।
परमाण्वात्म भूताश्चतंदेवं प्रविशन्त्युत ॥ १५ ॥
तस्मादपि च निर्मुक्ता अनिरुद्धतनौस्थिताः ।
मनोभूतास्ततोभूयः प्रद्युम्नं प्रविशन्त्युत ॥ १६ ॥
प्रद्युम्नाच्चापि निर्मुक्ता जीवं सङ्कर्षणं ततः ।
विशन्ति [2] विप्रप्रवराः [3] साङ्ख्यायोगाश्चतैः सह ॥ १७ ॥

---

[1] ब्रह्मरुद्राद्यपेक्षया अनन्यप्रयोजन भगवद्भक्तानां विशेष दर्शयति । 'याःक्रिया' इत्यादिना । एतेन—'ब्रह्माणंशितिकण्ठञ्च–प्रतिबुद्धानसेवन्ते' इति पूर्वोक्तार्थोदृढीकृतः ॥

[2] अत्र 'विप्रप्रवरा' इति उत्तरत्र 'द्विजश्रेष्ठा' इति पदद्वयेन पञ्चरात्रे तत्प्रतिपाद्य धर्मेचपतितकुण्डगोलकादीनामेव अधिकारः (तं. अ. नि.) इति गुरुद्रोहिदीक्षितोक्तिरपाकृता ॥

[3] एतेन पञ्चरात्रसाङ्ख्ययोगानां ऐकरस्यमाविष्कृतम् । एतच्चोत्तरत्र 'एवमेकं साङ्ख्ययोगम्–पञ्चरात्रं च कथ्यते, (ना. आ. १७–८१) इत्यत्र व्यक्तीभविष्यति ॥

ततस्त्रैगुण्यहीनास्तेपरमात्मानमञ्जसा ।
प्रविशन्ति द्विजश्रेष्ठाः क्षेत्रज्ञं निर्गुणात्मकम् ।
सर्वावासं वासुदेवं क्षेत्रज्ञं विद्धि तत्त्वतः ॥ १८ ॥
समाहितमनस्काश्च नियताः संयतेन्द्रियाः ।
एकान्तभावोपगता वासुदेवं विशन्तिते ॥ १९ ॥

इत्यादिना [1] पञ्चरात्रोक्त क्रममुक्तिप्रकारः ॥

चतुर्दशे वराहरूपधारिणा भगवता भूम्युद्धरणकाले स्वदंष्ट्रा-विलग्नानां त्रयाणां मृत्पिण्डानां धूननं भूमौ कुशानास्तीर्य आत्मान-मुद्दिश्य तेषामेव स्थापनादिकं । तेनलोकेमर्यादा प्रतिष्ठापनं । ततः—

ये यजन्ति पितॄन्देवान्गुरूंश्चैवातिथींस्तथा ।
गाश्चैवद्विजमुख्यांश्च पितरं मातरं तथा ॥ २५ ॥
कर्मणा मनसा वचा विष्णुमेव यजन्ति ते ।
अन्तर्गतः स भगवा[2]न्सर्व सत्वशरीरगः ॥ २६ ॥
समः सर्वेषु भूतेषु ईश्वरः सुखदुःखयोः ।
महान्महात्मा सर्वात्मा नारायण इति [3]श्रुतिः ॥ २७ ॥

---

[1] जयत्सेनसंहितादौ (र-सा) गतिचिन्तनाधिकारे—

[2] एतेन वेदमन्त्रघटकतत्तद्देवता बोधकशब्दानां तत्तद्देवतान्तर्यामिपरत्वं स्फोरितम्—

[3] 'यच्चकिञ्चिज्जगत्यस्मिन्दृश्यते श्रूयतेऽपि वा ।
अन्तर्बहिश्चतत्सर्वं व्याप्यनारायणस्स्थितः ॥'
'अन्तःप्रविष्टश्शास्ताजनानां सर्वात्मा' ।
'सर्वेवेदायत्रैकं भवन्ति' इत्यादिकाश्श्रुतयः ॥

इत्यादिना सर्वान्तर्यामिणो विष्णोस्सर्वे कर्म समाराध्यत्वम् ।
पञ्चदशे—

[1]नैवतस्या परोलोकोनायं पार्थिवसत्तम ।
कर्मणामनसावाचा योद्विष्याद्विष्णुमव्ययम् ॥ ५ ॥
मज्जन्ति पितरस्तस्य नरकेशाश्वतीः समाः ।
योद्विष्याद्विबुधश्रेष्ठं देवं नारायणं हरिम् ॥ ६ ॥
कथं नामभवेद्द्वेष्य आत्मालोकस्य कस्यचित् ।
आत्मा हि पुरुषव्याघ्र ज्ञेयो विष्णुरिति श्रुतिः ॥ ७ ॥

इत्यादिना सर्वान्तर्यामि विष्णुद्वेषे पितॄणां नरकेपतनं—

नारदेन तु सम्प्राप्तः सरहस्यः ससंग्रहः ।
एषधर्मो जगन्नाथात्साक्षान्नारायणान्नृप ॥ ९ ॥
एवमेषमहान्धर्मः सतेपूर्वं नृपोत्तम ।
कथितो हरिगीतासुसमासविधिकल्पितः ॥ १० ॥

इत्यादिना भगवद्गीतायाः (वासुदेवमात्रप्रतिपादिकायाः) पाञ्चरात्रिक धर्मसङ्ग्रह रूपत्वंचेत्येतत्सर्वं न्यरूपयत् ॥

---

[1] मामात्मपरदेहेषुप्रद्विषन्तोऽभ्यसूयकाः । (गी. १६-१८)
तानहंद्विषतः क्रूरान्संसारेषु नराधमान् ।
क्षिपाम्यजस्रमशुभानासुरीष्वेवयोनिषु ॥ (गी. १६-१९)

इति गीतोक्तार्थं प्रकटीकरोति 'नैवतस्ये' त्यादिना—पूर्वं 'सर्वसत्वशरीरगः' इत्यनेन गीतायां 'मामात्म परदेहेषु' इत्यस्यार्थ उक्तः तेन च 'यजन्ते नाम यज्ञैस्तेदम्भेनाऽविधिपूर्वकम्' इति तत्पूर्वगीतावाक्ये 'अविधिपूर्वकम्' इत्यत्र 'येत्वन्यदेवताभक्ताः' 'यजन्त्यविधिपूर्वकम्' इति गीतानवमोक्तार्थोऽपिविवक्षित इति व्यञ्जितम् ॥

सप्तदशे—हयशिर उपाख्यानानन्तराध्याये—

अहोह्येकान्तिनस्सर्वान्प्रीणाति भगवान्हरिः ।
विधिप्रयुक्ताम्पूजां च गृह्णातिशिरसास्वयम् ॥
केनैषधर्मः कथितोदेवेन ऋषिणापि वा ।
एकान्तिनां च काचर्या कदाचोत्पादिताविभो ॥

इति (ज) प्रश्नस्य प्रतिवचने—

समुपोढेष्वनीकेषु कुरुपाण्डवयोर्मृथे ।
अर्जुनेविमनस्केच गीताभगवतास्वयम् ॥
गहनोह्येषधर्मो वैदुर्विज्ञेयोऽकृतात्मभिः ।
संमितः सामवेदेन पुरैवादियुगे कृतः ।
धार्यते स्वयमीशेन राजन्नारायणेनह ॥

इत्यनेन पुरातनस्य एकान्तिधर्मस्य गीतोक्तत्वं ब्रह्मणो मानसचाक्षु, षवाचिकजन्मसु अस्यधर्मस्याविर्भावतिरोभावौ—

ऋग्वेदपाठपठितं व्रतमेतत्तुदुश्चरम् ।

इत्यनेन ऋग्वेद पठितत्वं ब्रह्मणश्श्रावण जन्मन्यपि तथैवाविर्भावति-रोभावौ—

ततोहि सात्त्वतोधर्मोव्याप्यलोकानवस्थितः ।

इत्यनेन गीतोक्तैकान्तिधर्माभिन्नस्य सात्वतधर्मस्य कृतयुगे व्याप्तिं त्रेतायुगे ब्रह्मणो ना(सिक्य)सत्यजन्मनि अण्डजजन्मनि च आवि-र्भावतिरोभावौ—

यदिदं सप्तमं जन्म पद्मजं ब्रह्मणो नृप ।
तत्रैष धर्मः कथितः स्वयं नारायणेन ह ॥ ४८ ॥

पितामहाय शुद्धाय युगादौ लोकधारिणे ।
पितामहश्च दक्षाय धर्ममेतं पुरा ददौ ॥ ४९ ॥
ततो ज्येष्ठे तु दौहित्रे प्रादाद्दक्षो नृपोत्तम ।
आदित्ये सवितुर्ज्येष्ठे विवस्वान् जगृहे ततः ॥ ५० ॥
त्रेतायुगादौ च ततो विवस्वान्मनवे ददौ
मनुश्च लोकभूत्यर्थं सुतायेक्ष्वाकवे ददौ ॥ ५१ ॥
इक्ष्वाकुणा च कथितो व्याप्य लोकानवस्थितः ।

इत्यादिना 'इमं विवस्वते योग'मिति गीतोक्तदिशा सात्त्वतधर्मस्य परम्पराप्राप्तत्वं त्रेतायुगेऽपि व्याप्तिम् ॥

कथितो हरिगीतासु समासविधिकल्पितः ॥ ५३ ॥
नारदेन तु संप्राप्तः सरहस्यस्ससंग्रहः ।
एष धर्मो जगन्नाथात्साक्षान्नारायणान्नृप ॥ ५ ॥
एवमेष महान्धर्म आद्यो राजन्सनातनः ।
दुर्विज्ञेयो दुष्करश्च सात्त्वतैर्धार्यते सदा ॥ ५५ ॥
धर्मज्ञानेन चैतेन सुप्रयुक्तेन कर्मणा ।
[1]अहिंसाधर्मयुक्तेन प्रीयते हरिरीश्वरः ॥ ५६ ॥

---

[1]अहिंसेति कृतयुगाभिप्रायम् । वस्तुतस्तु 'यज्ञानांजपयज्ञोस्मीति' गीतैकार्थ्याज्जपयज्ञ एवात्र विवक्षितः । अत्रैव (ना. ७ अ) धर्मराजादीनामेतदाख्यानश्रवणानन्तरं 'नित्यं जंप्यपराभूत्वा' इति जपयज्ञनिष्ठत्वोक्तेः । त्रेतायुगे—

प्रोक्षितायत्रपशवोवधं प्राप्स्यन्तिवैमखे । (ना. ८-८२).

इति प्रत्यक्षपशुवधस्य, अत्रैतद्धर्मस्य व्यासेश्चाभिधानेन पशुहिंसानिषेधविवक्षायाः वक्तुमशक्यत्वाच्च । अत्र 'इतरेषु यज्ञेषु हिंसादिप्रसङ्गोऽधिकारिविशेषादिना

[1] एकव्यूहविभागो वा क्वचिद्द्विव्यूहसंज्ञितः ।
त्रिव्यूहश्चापि संख्यातश्चतुर्व्यूहश्च दृश्यते ॥ ५७ ॥
हरिरेव हि क्षेत्रज्ञो निर्ममोनिष्कलस्तथा ॥ ५८ ॥
यद्येकान्तिभिराकीर्णं जगत्स्यात्कुरुनन्दन ॥ ६२ ॥
अहिंसकैरात्मविद्भिः सर्वभूतहितेरतैः ।
भवेत्कृतयुगप्राप्ति राशीःकर्मविवर्जिता ॥ ६३ ॥
एवं स भगवान्व्यासो गुरुर्ममविशांपते ।
कथयामासधर्मज्ञो धर्मराजे द्विजोत्तमः ॥ ६४ ॥
ऋषीणां सन्निधौ राज ञ्शृण्वतोः कृष्ण भीष्मयोः ॥ ६५ ॥

इत्यनेन गीतायां सङ्ग्रहेणोक्तस्य पञ्चरात्रे विस्तृतस्य चातुरात्म्य वासुदेवाराधनधर्मस्य सात्वतैर्धार्यत्वं । त्रेतादौ पर्वक्रमेण अनुष्ठातृविरलत्वं च—

एवं बहुविधं धर्मं प्रतिबुद्धैर्निषेवितम् ।

---

विषयव्यवस्थापनं इत्यादिमहान्क्लेशः । जपयज्ञे तु तत्प्रसङ्गाभावात् अव्याक्षेपेणार्थप्रतीत्यासहजयोगद्वारा सहसासमाधौ निवेशनाच्च यज्ञान्तरेभ्यो जपयज्ञः प्रशस्ततमः' । इत्यादि तात्पर्यचन्द्रिकासूक्तिरनुसन्धेया ॥

[1] वासुदेव एकोव्यूहः, वासुदेव नारायणौद्वौव्यूहौ, सत्याच्युतपुरुषाः त्रयोव्यूहाः इति पाद्मसंहितायां क्रियापादे (१८ अध्याये ५६, ५७ श्लो). सङ्कर्षण प्रद्युम्नानिरुद्धास्त्रय एवव्यूहा इति अहिर्बुध्न्य संहितादौ च व्यक्तम् । एकः परवासुदेवः वासुदेवसङ्कर्षण प्रद्युम्नानिरुद्धाः चत्वारोव्यूहा इति लक्ष्मीतन्त्रादौ स्फुटम् ! तदनेन गीतायास्सङ्ग्रहत्वमुपपादितं भवति ॥

न कुर्वन्ति कथं विप्रा आद्यं (अन्ये) [1]नानाव्रतेऽस्थिताः ॥ ६७ ॥

इति (ज) प्रश्नस्य (वै) प्रतिवचने—

तिस्रः प्रकृतयो राज न्देहबन्धेषु निर्मिताः ।
सात्त्विकी राजसी चैव तामासी चेति भारत ॥ ६८ ॥
देहबन्धेषु पुरुषः श्रेष्ठः कुरुकुलोद्वह ।
सात्त्विकः पुरुषव्याघ्र भवेन्मोक्षायानिश्चितः ॥ ६९ ॥
एकान्तभक्तस्सततं नारायणपरायणः ॥ ७१ ॥
मनीषिणो हि ये केचिद्यतयोमोक्ष (धर्मिणः) काङ्क्षिणः ।
तेषां विच्छिन्न तृष्णानां योगक्षेम वहो हरिः ॥ ७२ ॥
जायमानं हि पुरुषं यं पश्ये [2]न्मधुसूदनः ।
सात्त्विकस्सतुविज्ञेयस्स वै मोक्षार्थचिन्तकः ॥ ७३ ॥
साङ्ख्ययोगेन [3]तुल्यो हि धर्मएकान्ति सेवितः ।
नारायणात्मके [4]मोक्षे [5]ततो यान्ति पराङ्गतिम् ॥ ७४ ॥

---

[1] नानेति—मोक्षव्यतिरिक्तनानाफलार्थं नानादेवतोद्देशेनानुष्ठीयमानत्वं नानात्वम् ॥

[2] अनन्तरपूर्वाध्याये हयशिरसः मधुसंहर्तृत्वोक्तेरत्र हयशिरा एव मधुसूदनशब्दार्थः ॥

[3] एकान्तिधर्मस्य सांख्ययोगतुल्यत्वकथनेन न पञ्चरात्रस्य वेदाविरोधः किन्तु सांख्ययोगयोरेवेति भ्रमो निरस्तः ॥

[4] 'आनन्दो ब्रह्म' इत्यादिश्रुत्या 'मुक्तिः कैवल्यनिर्वाणे' ति कोशोक्तनिर्वाणरूपमोक्षत्वं नारायणस्येति बोध्यम् ॥

[5] ततः एकान्तिधर्मात् नारायणादिति वा । द्वितीये फलस्योपायत्वप्रतिपादनेन उपायफलयोरैक्यमुक्तं भवति ॥

नारायणेन दृष्टस्तु प्रतिबुद्धो भवेत्पुमान् ।
एवमात्मेच्छयाराज न्प्रतिबुद्धो न जायते ॥ ७५ ॥
राजसी तामसीचैव व्यामिश्रे प्रकृती (जिनितृ) स्मृते ।
तदात्मकं हि पुरुषं जायमानं विशांपते ।
प्रवृत्ति लक्षणैर्युक्तं नावेक्षति हरिः स्वयम् ॥ ७६ ॥
पश्यत्येनं जायमानं ब्रह्मा [1] रुद्रोऽथ वा पुनः ।
रजसा तमसा चैव मानसं समभिप्लुतम् ॥ ७७ ॥
[2] एवमेकं साङ्ख्ययोगं वेदारण्यकमेव च ।
परस्पराङ्गान्येतानि पञ्चरात्रश्च कथ्यते ॥ ८१ ॥
एष एकान्तिनां धर्मो नारायण परात्मकः ॥ ८२ ॥
एषते कथितो धर्मः सात्वतो यदुबान्धव ॥ ८४ ॥

---

[1] 'ब्रह्मा रुद्रोऽथ वा पुनः' इति पाठ एव प्राचीनालिखितकोशेषु तदनुसारि (वा. रा. शा.) मुद्रितकोशे च दृश्यते । आचार्यपादसम्मतः, युक्तश्च— न तु 'ब्रह्मा लोकपितामहः' इति कल्पितः पाठोयुक्तः । सात्त्विकराजसताम-साधिकारित्रयनिरूपणपरेऽस्मिन्प्रकरणे जननकाले सत्त्वाधिष्ठातृविष्णुकटाक्षेण सात्त्विकत्वोक्तिवत् रजस्तमोऽधिष्ठातृब्रह्मरुद्रकटाक्षाभ्यां राजसत्वतामसत्वयोर-भिधानस्यावश्यकत्वात् । ब्रह्मकटाक्षेण तामसत्वस्योपपादनासंभवात् । 'योह खलु वावास्य तामसोंऽशोऽसौ सब्रह्मचारिणो योऽयं रुद्रोऽथ योह खलु वावास्य राजसोंऽशोऽसौ सब्रह्मचारिणो योऽयं ब्रह्माऽथयोह खलु वावास्य सात्त्विकोंऽशोऽसौ सब्रह्मचारिणो योऽयं विष्णुः' (५-२) इति मैत्रायणीयश्रुतौ विष्णुब्रह्मरुद्राणां सत्त्वरजस्तमोधिष्ठातृत्वं स्फुटम् ॥

[2] अस्यार्थः (२—२—८) श्रीभाष्येस्पष्टः ॥

इत्थं हि दुष्करो धर्म एष पार्थिव सत्तम ।
यथैवत्वं तथैवान्ये न भजन्तीह मोहिताः ॥ ८७ ॥
कृष्ण एव हि लोकानां भावनो मोहनस्तथा ।
संहारकारकश्चैव कारणं च विशांपते ॥ ८८ ॥

इत्यनेन जननकाले मधुसूदनकटाक्षविषयस्य सात्विकस्य प्रतिबुद्धस्य एकान्तिधर्मापरनामसात्वतधर्मेऽधिकारः । ब्रह्मरुद्रदृष्टयोः राजसतामसयोस्तत्रानधिकारः । [1]पूर्वं मोक्षधर्मे नारायणपरत्वेन प्रतिपादितयोः साङ्ख्ययोगयोः वेदारण्यकानां च एकतत्त्वप्रतिपादनपरत्वेनैक्यं । पञ्चरात्रस्य तदुक्तार्थविशदीकरणरूपत्वं अतस्सात्वतधर्मस्य सात्त्विकैः अनुष्ठेयत्वम् । मोहितैः तस्याननुष्ठानम् ॥

अष्टादशे—'एवमेकं सङ्ख्ययोगं—पञ्चरात्रन्तु कथ्यते' इति श्लोकार्थनिर्णिनीषया जनमेजयेन कृतस्य—

साङ्ख्यंयोगः पञ्चरात्रं वेदाः पाशुपतं तथा ।
ज्ञानान्येतानि ब्रह्मर्षे लोकेषु प्रचरन्तिहि ॥
किमेतान्ये कनिष्ठानि पृथङ्निष्ठानि वा मुने ॥

इति (ज) प्रश्नस्य (वै) प्रतिवचने—

साङ्ख्यंयोगः पञ्चरात्रं वेदाः पाशुपतं तथा ।
ज्ञानान्येतानिराजर्षे विद्धि[2] नानामतानिवै ॥

---

[1] (३०७–३०८, ३२३–३५७ अ).

[2] 'यानिपुनः साङ्ख्ययोग पाशुपत पञ्चरात्राणि तान्यपि धर्मशास्त्र भेदा एव परिशुद्धात्माचिन्तन रूप ज्ञानयोगप्रदर्शनाधिकृतं शास्त्रं साङ्ख्यम् समाधिपर्यन्तकर्मयोगानिष्ठं शास्त्रं योगः प्रतिबुद्धेतर विषयपशुपतिभजन प्रतिपादकं

इत्युपक्रम्य साङ्ख्यस्य वक्ताकपिलः योगस्य च हिरण्यगर्भः, अपान्तरतमानामवेदाचार्यः, ब्रह्मणस्सुतः उमापतिः पाशुपतस्य, पञ्चरात्रस्य कृत्स्नस्य वक्तानारायणस्स्वयम्[1] इत्यभिधाय—

सर्वेषु च नृपश्रेष्ठ ज्ञानेष्वेतेषु दृश्यते ।
यथागमं[2] यथान्यायं निष्ठानारायणः प्रभुः ॥
नचैन मभिजानन्ति[3] तमोभूताविशांपते ।
तमेव शास्त्रकर्तारः[4] प्रवदन्ति मनीषिणः ॥
निष्ठां नारायणमृषिं नान्योऽस्तीति च वादिनः ।
निस्संशयेषु सर्वेषु नित्यं वसति वैहरिः ।

---

पाशुपतम् । प्रतिबुद्धविषय भगवदनन्य भजनोपदेशप्रवृत्तं तु शास्त्रं पञ्चरात्रम्, इति न्यायपरिशुद्धावाचार्यपादैरुक्तमिहानुसन्धेयम् । अत्र पृथङ्निष्ठानीत्यनुक्त्वानानेत्युक्त्यावस्तुतएकनिष्ठानीत्यङ्गीकृतम् इति प्रतीयते ॥

[1] स्वयमित्यनेन पुत्रचतुर्मुख पौत्र रुद्र कृत शास्त्रतोविशेषः ख्याप्यते । कृत्स्नस्येत्यनेन सर्वांशे प्रामाण्यं व्यज्यते ॥

[2] यथान्यायमिति । पुत्रपौत्राद्युत्कर्षस्य मूलपुरुषोत्कर्ष पर्यवसानवत् ब्रह्मरुद्राद्युत्कर्षस्य तज्जनक नारायणोत्कर्षेपर्यवसानमिति भावः ॥

[3] तमो भूता इति । साङ्ख्ययोगादीनां नारायणपर्यवसायित्वमजानानाम् 'पश्यत्येनम्' इति (१७) इत्युक्तदिशा तामसत्वमेव जननकाले मधुसूदनकटाक्षविरहेण न सात्त्विकत्वमिति भावः ॥

[4] अत्र शास्त्रकर्तारइत्येवप्राचीनकोशेषु पाठो दृश्यते आचार्यसम्मतश्च । शास्त्रकर्तारमिति पाठे शास्त्रपदं पञ्चरात्रमात्रपरम् अनेन साङ्ख्ययोगसूत्रेषु नारायणस्याप्रतिपादनेऽपि सूत्र कृत्तात्पर्य विषयत्वमस्तीति बोधितम् । पूर्वं कपिलेन आसुरिं प्रति जीवात्परस्योपदेशादन्यत्र साङ्ख्ययोगयोर्नारायणपरत्वस्याभिधानाच्च प्रापकप्राप्यनारायणभजनमन्तरा न मुक्तिरिति भावः ॥

[1] ससंशयान् हेतुबलान्नाध्यावसति माधवः ॥
पञ्चरात्रविदोयेतु यथाक्रमपरानृप ।
एकान्तभावोपगतास्ते हरिं प्रविशन्तिवै ॥
साङ्ख्यंच योगंच [2] सनातने द्वे
वेदाश्चसर्वे निखिलेन राजन् ।
सर्वैस्समस्तैः ऋषिभिर्निरुक्तो
नारायणो [3] विश्वमिदं पुराणम् ॥

---

[1] तमोभूताः इत्यादि पूर्वोक्तार्थं विशदयति ससंशयानित्यादिना ॥

[2] सनातनेत्यनेन प्राचीन साङ्ख्ययोगसूत्रद्वयस्यैव वेदैककण्ठ्यम् । न तु नवीनषडध्यायात्मकसाङ्ख्यसूत्राणां साङ्ख्ययोग व्याख्यानानां चेति बोधितम् । एतेन विज्ञानभिक्षु भाष्य मूलसूत्राणि अन्यदर्शनसूत्राण्युदाहृत्य साङ्ख्यदर्शने कारिका एवोदाहरद्भिः प्राचीनैश्शङ्कराचार्यादिभिरनुदाहरणात्प्रामाणिकैरनादरणीयानीति सिद्धम् । 'अविवेकनिमित्तो वा पञ्चशिखः ६-६८, इति सूत्रे पञ्चशिखशब्देनापि तत्सूत्राणां कापिलत्वं नास्तीत्यवसीयते एतत्सूत्राणां प्राचीन भोजराजवृत्तिस्तु न सम्प्रतिपन्ना ॥

[3] पञ्चरात्रवक्तुस्तत्प्रातिपाद्यस्य नारायणस्य सांख्यादिसर्वपर्यवसान भूमित्वं पूर्वमभिधायात्र पाशुपत शब्दं विहाय साङ्ख्ययोगवेदानां पञ्चरात्र प्रतिपाद्यतद्वक्तृ नारायण पर्यवसानोपसंहारोक्त्या पाशुपतोक्ताचारादीनां त्रिवर्गनिष्ठैरेवोपादेयत्वं न मुमुक्षुभिरिति बोधितम् । सप्तदशे—सात्त्विकादिभेदेनाधिकारित्रैविध्यमभिधायात्र साङ्ख्यादीनां नारायणपर्यवसानमजानतान्तमोभूतत्वोक्तेः 'एवमेकं साङ्ख्ययोगम्' 'साङ्ख्यं च योगं च' इति श्लोकद्वयेऽपि पाशुपतपदाप्रयोगा (८०) दुदाहृतवचने (ना. आ. १३-१७) साङ्ख्ययोगयोरेव पञ्चरात्रोक्तमुक्तिकथनान्नारायणपदाभ्यासाच्चेत्थमेवार्थः व्याससम्मत इति निर्धार्यते इत्याचार्यपादानामाशयः ॥

इत्यनेन पञ्चरात्रवक्तुर्नारायणस्यैव वेदवेद्यस्य साङ्ख्यादिष्वपि पर्यवसानभूमित्वं सांख्ययोगप्राचीनसूत्रकर्तृतात्पर्यविषयत्वं एवं ज्ञान-विरहस्य तमोमूलकत्वं अस्मिन्नंशे निस्संशयेषु हरेर्नित्यसान्निध्यं अत्रचांशे सन्दिहानेषु हैतुकेषु माधवसङ्गविरहम् । 'एवमेकं—पञ्चरात्रन्तु कथ्यते' इत्युक्तप्रकारेण पञ्चरात्रं जानताम् एकान्तिनां हरेः प्राप्यत्वं पञ्चरात्रवक्तुः तत्प्रतिपाद्यस्य च नारायणस्यैव सनातन-सांख्ययोगवेदारण्यकतात्पर्यविषयकत्वम् ॥

एकोनविंशे — सांख्ययोगव्याख्यातृभिर्विभुबहुपुरुषाङ्गीकारेण सगुणस्य सर्वान्तर्याम्युपादनभूतस्य एकस्य पुरुषस्यानङ्गीकारेण च जातस्य सांख्ययोगवेदानामैकरस्यांशे संशयस्य परिहारपूर्वकं 'नारायणो विश्वमिदं पुराणम्'[1] इत्युपक्षिप्तस्य 'विश्वमेवेदं पुरुषः' 'पुरुष एवेदं सर्व'मित्यादि श्रुत्यर्थस्य निर्णिनीषया—

[2] बहवः पुरुषा ब्रह्मन् उताहो एक एव तु ।

---

[1] सगुणात्मवादस्य प्राचीनसाङ्ख्ययोगवक्तृसम्मतत्वे गुणवाचिशुक्लादि-शब्दानामिव चेतनाचेतनवाचिशब्दानां परमात्मपर्यन्तत्वसंभवेन अत्र सामा-नाधिकरण्यं निर्वहति । एवं परमपुरुषस्य जीवोपादानत्वस्य तत्सम्मतत्वे 'मृद्घट' इत्यादिवदपि सामानाधिकरण्यमुपपद्यते न त्वन्यथेति भावः । 'नराज्जातानि तत्त्वानि नाराणि, 'नाराणामयनं ख्यातः' इति नारायणशब्द-निर्वचनानुसारेण इत्थमेवाशय इत्युन्नीयते ॥

[2] 'बहवः पुरुषा' इत्यत्र पुरुषशब्दः पुरि शेत इति व्युत्पत्त्या शरीरसंबन्धिनमाचष्टे । अविशेषात्सर्वशरीरसंबन्धिपरः । सर्वशरीरसंबन्धिनः बहव आत्मानः उत एक एव इति प्रथमप्रश्नार्थः ॥

कोह्यत्र पुरुषः [1] श्रेष्ठः का वा [2] योनिरिहोच्यते ॥

इति कृतस्य (ज) प्रश्नस्य (वै) प्रतिवचने—

बहवः पुरुषा लोके सांख्ययोगविचारिणः[3] (रिणाम्) ।

---

[1] अत्र—पुरुषेषु श्रैष्ठ्यं 'गुणाधिक' मिति प्रतिवचनानुसारेण गुणनिबन्धनं विवक्षितम् विभुनिर्गुणात्मपक्षे अवच्छेदकभेदेन भेदव्यवहारोपपत्तौ पुरुष बहुत्वासम्भवेन पुरुषेषु श्रेष्ठो न घटत इति हृदयम् ॥

[2] अत्रेत्यतः पृथक् इहेति प्रयोगाच्चिदचितौ विवक्षितौ योनिशब्दः 'योनिश्च हि गीयते' इति सूत्र (शं) भाष्योक्तदिशा परिणाम्युपादानं प्रतिपादयति विभुनिर्गुणात्मपक्षे चिदचिदुपादानत्वेनैकरूपेण चिदचितोः ब्रह्मणश्चाभेदश्रुतिनिर्वाहो न सम्भवतीति हृदयम् ॥

[3] स्मृत्यधिकरणे 'सांख्ययोगविचारिणाम्' इति पाठः शङ्करभाष्ये दृश्यते । 'सांख्ययोगविचारिण' इति आचार्यपादसम्मतः पाठः । प्रथमपक्षे सर्वशरीरसंबन्धिनः बहव इति साङ्ख्ययोगविचारिणाम्मत मित्यर्थः । द्वितीयपक्षे साङ्ख्ययोगविचारिणो बहवो जना इत्यर्थः । परमतभङ्गे कपिलहिरण्यगर्भयोः वेदविरुद्धांशे तात्पर्यं नास्ति 'साङ्ख्ययोगविचारिण' इत्युक्ताः प्रवर्तकाः वृथा निर्बन्धं कृतवन्त इति कपिलहिरण्यगर्भानन्तरकालिकप्रवर्तक-ग्रन्थाः उपेक्षणीया इति निर्विवादम्, इत्याचार्यपादैरुक्तम् । पूर्वं 'तमेव शास्त्रकर्तारः प्रवदन्ती' ति वचनात् 'साङ्ख्यं च योगं च सनातने द्वे' इत्यत्र सनातनशब्दस्य अत्र 'सांख्ययोगविचारिण' इत्यत्र विचारिन् शब्दस्य च प्रयोगाच्च अयमेवार्थोव्याससम्मतः । शारीरके एतन्निरसनन्तु न कपिलहिरण्यगर्भहृदयमनुसृत्य किन्त्वापातप्रतीतिमात्रमवलम्ब्येति पञ्चरात्राधिकरणे व्यासार्यैरप्युक्तम् अत्र विचारिशब्देन योगभाष्यं न ब्रह्मसूत्रकर्तृव्यासप्रणीतमित्यपि सिध्यतीति बोध्यम् ॥

नैत(दि)इच्छन्ति पुरुषमेकं[1] कुरुकुलोद्वह ॥
बहूनां[2] पुरुषाणां हि यथैका योनिरुच्यते ।
तथा तं पुरुषं विश्वमाख्यास्यामि गुणाधिकम्[3] ॥
इदं पुरुषसूक्तं हि सर्ववेदेषु पठ्यते ।
[4]उत्सर्गेणापवादेन ऋषिभिः कपिलादिभिः ।
अध्यात्मचिन्तामाश्रित्य शास्त्राण्युक्तानि भारत ॥
समासतस्तु यद्व्यासः पुरुषैकात्म्य[5]मुक्तवान् ।
तत्तेऽहं संप्रवक्ष्यामि प्रसादादमितौजसः ॥

---

[1] सर्वशरीरसंबन्धिनमेकं नेच्छन्ति अपि तु बहूनिच्छन्तीत्यर्थः ॥

[2] अत्र प्रतिवचनेऽपि पुरुषशब्दः शरीरसंबन्धिनम्प्रतिपादयति न देहमात्रम् । उत्तरत्र 'बहवः पुरुषा ब्रह्मंस्त्वया सृष्टा, इत्यत्र पुरुषोत्तमविलक्षणपुरुषसृष्टेः 'बहवः पुरुषाः पुत्र---एवमेतत्' 'एवं बहुविधः प्रोक्तः पुरुषः, इत्यत्र शरीरसंबन्धिनां जीवानामेव बहुत्वस्य प्रतिपादनात् । एकैकशरीरसंबन्धिनो जीवा एवात्र विवक्षिताः न तु सर्वशरीरसंबन्धिनस्सर्वे जीवाः । उत्तरत्र एकपुरुषस्य पुरुषोत्तमत्वस्य तदुपपादकस्य सर्वगत्वस्य, सर्वशरीरसंबन्धस्य च प्रतिपादनपूर्वकं महापुरुषशब्दबोध्यत्वमभिधाय पुरुषबहुत्वस्योपसंहारात्' ॥

[3] 'गुणाधिक' मित्येव (स्मृ–अ–शं) भाष्येऽपि पाठः ॥

[4] उत्सर्गेण सामान्यतः आत्मत्वसामान्येनेति यावत् । अपवादेन प्रकृतिप्राकृततत्त्ववैलक्षण्येन । आदिशब्देन हिरण्यगर्भासुरीग्राह्यौ ॥

[5] अत्र पुरुषैकात्म्यमिति प्राचीनलिखितकोशेषु पाठः आचार्यसम्मतश्च। अत्र 'पुरुषाणामैकात्म्यं एकेनात्मना युक्तत्वं अनेन जगच्छरीरकः परमात्मा हि सर्वोपादानमित्युक्तं भवति ॥

इत्यादिना साङ्ख्ययोगविचारिभिर्विभुबहुपुरुषाभ्युपगमेन सर्वान्तर्याम्युपादानसगुणपुरुषानभ्युपगमेऽपि कपिलादिभिः सामान्यतः प्रकृत्यतिरिक्त पुरुषमात्राभ्युपगमेऽपि सगुणैकपुरुषाप्रतिषेधेन बहुपुरुषविभुत्वानभ्युपगमेन च पुरुषसूक्तप्रतिपाद्यस्य व्यासतात्पर्यविषयसगुणसर्वशरीरैकपुरुषस्य कापिलादितात्पर्यविषयत्वं अस्मिन्नर्थे ब्रह्मरुद्रसंवादमुपक्षिप्य तत्र—

बहवः[1] पुरुषाब्रह्मं स्त्वया सृष्टाः स्वयम्भुवा ।
सृज्यन्तेचापरेब्रह्मन्सपरः पुरुषोविराट् ॥ २३ ॥
कोह्यसौचिन्त्यते ब्रह्मंस्त्वयैकः पुरुषोत्तमः ॥ २४ ॥

---

तवान्तरात्मा मम च ये चान्ये देहिसंज्ञिताः ।
सर्वेषां साक्षिभूतोसौ न ग्राह्यः केन चित्कचित् ॥

इति पुरुषैकात्म्यशब्दविवक्षितस्य स्वेनैव व्याख्यातत्वात् । बहूनां पुरुषाणामिति पूर्वमुक्तत्वाच्च, इति व्यासार्योक्तेश्च । युक्तश्चैतत् । 'एकात्मानं तथात्मानमपरेऽध्यात्मचिन्तका' इति व्याससिद्धान्तस्य वर्णनात्, तत्र आत्मानमिति उपक्रमोक्तजीवसामान्यपरम् । एकात्मानमिति बहुव्रीहिः । एकात्मकमित्यर्थः । अन्यथा आत्मशब्दस्य वैयर्थ्यप्रसङ्गात् । अतः उपक्रममध्योपसंहारवाक्यपर्यालोचनायां व्यासार्योक्तमेव युक्तम् । पुरुषैकत्वमिति (शं–भा) पाठेऽपि 'स वा एष सर्वासु पूर्षु' इति बृहदारण्यकश्रुत्यनुसारेण 'शरीरेषु सर्वेषु निवसत्यसौ' इति अत्रत्योत्तरवाक्यानुसारेण च जगच्छरीरकः परमात्मा सर्वोपादानमिति व्याससिद्धान्त इत्येवोक्तं भवति ॥

[1] अत्र 'बहवः पुरुषाः त्वया सृष्टाः सृज्यन्ते च । परः पुरुषः एकः पुरुषोत्तमस्त्वया कश्चिन्त्यत इति प्रश्नवाक्यपर्यालोचनायां सृज्यशरीरसम्बान्धि-

इति रुद्रकृतस्य सृज्यपुरुषविलक्षणः पुरुषोत्तमस्त्वया चिन्तनीयः क इति प्रश्नस्य ब्रह्मणः प्रतिवचने—

बहवः पुरुषाः पुत्र त्वया ये समुदाहृताः ।
एवमेतदतिक्रान्तं [1] द्रष्टव्यं चैव मित्यपि ॥ २५ ॥
[2] आधारत्वं प्रवक्ष्यामि एकस्य पुरुषस्य वै ।

---

जीवविलक्षणः कश्चिन्त्यत इत्येव प्रश्नतात्पर्यं प्रतीयते । अतोऽत्र पुरुषशब्दस्य शरीरसम्बन्धिजीववाचित्वमेव । न तु शरीरपरत्वमिति सिद्धम् ॥

[1] 'द्रष्टव्यं चैवमित्यपि' इत्येवप्राचीनकोशेषु पाठः (वा-रा-शा) मुद्रितकोशेऽपि दृश्यते पूर्वसृष्टावपि शरीरसम्बन्धिनो जीवाः बहवः, एतत्सृष्टावपि शरीरसम्बन्धिनो जीवा बहव एवेत्यर्थः। 'सृष्टाः' 'सृज्यन्ते' इति प्रश्नवाक्ये पदद्वयप्रयोगात्प्रतिवचने सृष्टिद्वयोक्तिरिति बोध्यम् 'नैवमित्यपि' इति पाठस्य प्रामाणिकत्वे अतिक्रान्तमित्यपि न द्रष्टव्यं वर्तमानत्वात् इत्यर्थः एवमेतदित्यत्र वर्तमानत्वमस्मिन् पाठे विवक्षितम् । एतेन 'बहूनां पुरुषाणां हि' इत्युपक्रमे पुरुषशब्दः शरीरसम्बन्धिजविपरः न तु (स्मृ—अ) (आ—गि)(र-प) (ब्र-वि—आ) शरिरपर इति निर्णीतं भवति । एतेन, 'न राज्जातानि तत्वानि नाराणीति ततो विदुः' इति उक्तदिशा नार शब्दार्थ उक्तो भवति ॥

अथ 'नाराणामयनं ख्यातमहमेकस्सनातनः' इत्येतदर्थमाह [2] आधारत्वमित्यादिना । अत्र विवर्ताधिष्ठानबोधकपदस्याभावान्न तद्विवक्षायुक्ता ॥

अयमाशयः—गुणगुणिनोरपृथक्सिद्धिं गुणं प्रति द्रव्यस्योपादानत्वमभ्युपगच्छाद्भिस्ताान्त्रिकैर्गुणवाचिपदस्य गुणाधारद्रव्यबोधकत्वं तेन शुक्लः पट इत्यादिसामानाधिकरण्यनिर्वाहः । गुणगुणिनोरुभयोस्सत्त्वेऽपि आधारैक्यतात्पर्येण एकोऽत्र वर्तत इत्यादिपदप्रयोगश्चेति अङ्गीक्रियते । तथैव परमात्मनः जीवानामुपादानत्वमभ्युपगच्छताम्मतेऽपि जीववाचिपदस्य जीवाधारपरमात्मपर्यन्तत्वं

बहूनां पुरुषाणां स यथैका[1] योनिरुच्यते ॥ २६ ॥
तथातं पुरुषं विश्वमाख्यास्यामिगुणाधिकम् ।

इत्यनेन सृष्टि कर्म भूताबहवः पुरुषा इति सत्यमेव—तेषामाधारभूत एकः पुरुष इति तमेव बहुपुरुषोपादानं गुणाधिकमाख्यास्यामी-त्युपक्रम्यविंशे—

शृणुपुत्र यथा ह्येकः पुरुषश्शाश्वतोऽव्ययः ।
अक्षयश्चाप्रमेयश्च[2] सर्वगश्च निरुच्यते ॥ १ ॥
न स शक्यस्त्वया द्रष्टुं मयाऽन्यैर्वाऽपि सत्तम ।
[3]सगुणो निर्गुणो विश्वो ज्ञानदृश्यो ह्यसौ स्मृतः ॥ २ ॥
[4]अशरीरश्शरीरेषु सर्वेषु निवसत्यसौ ।

---

तेन 'पुरुष एवेदं सर्व'मिति सामानाधिकरण्यनिर्वाहः जीवब्रह्मणोर्भेदेऽपि आधारैक्यविवक्षया ऐक्यव्यपदेशश्च इति नानुपपत्तिरिति । अयं चाशयः 'तथा तं पुरुषं—गुणाधिकम्' इत्युपक्रमे अत्र च वचनव्यक्त्या व्यञ्जितः ॥

[1] एतेन ब्रह्म व्यष्टौ द्वारभूतनिमित्तकारणमेव । ब्रह्मादीनां सर्वेषां परमा-परमात्मैवोपादानकारणमिति सिद्धम् ॥

[2] आकाशवत्सर्वगतश्चनित्यः' इति श्रुतेः प्रामाणिकत्वे सा (१०-अ. १२-श्लो. गी. ता. चं.) परमात्मपरैव तेन अकाशवत्स्वसमानसत्ताकसर्व-संयोगित्वमेव परमात्मन इति सिद्ध्यति ॥

[3] 'सगुणः पराऽस्य शक्ति'रित्यादिश्रुत्युक्तगुणषट्कवान् निर्गुणः सत्त्वादिगुणत्रयशून्यः ॥

[4] अशरीर इत्यादिना ब्रह्मणः सर्वशरीरित्वेन पुरुषोत्तमत्वं जगच्छरी-रित्वेनोपादानत्वं चोपपादितम् ॥

वसन्नपि शरीरेषु[1] न स लिप्यति कर्मभिः ॥ ३ ॥
[2] तवान्तरात्मा मम च ये चान्ये देहि संज्ञिताः ।
सर्वेषां [3] साक्षिभूतोसौ न ग्राह्यः केन चित्क्वचित् ॥ ४ ॥
विश्वमूर्धा विश्वभुजो विश्वपादाक्षिनासिकः ।
एकश्चरति क्षेत्रेषु स्वैरचारी यथासुखम् ॥ ५ ॥
क्षेत्राणि हि शरीराणि बीजं चापि शुभाशुभम् ।
तानि वेत्ति स योगात्मा ततः [4] क्षेत्रज्ञ उच्यते ॥ ६ ॥

---

[1] जगच्छरीरत्वेन जीववत्कर्मसंबन्धप्रसक्तौ तन्निषेधति नेत्यादिना ॥

[2] ब्रह्मणः न सर्वाचेतनमात्रशरीरत्वम् अपि तु सर्वजीवशरीरत्वमपीत्याह तवेत्यादिना । युष्मदस्मच्छब्दयोरचिदमिश्रचिद्वाचकत्वं (सर्वा. भाव. प्र.) उपपादितम् ॥

[3] साक्षिभूतः—साक्षाद्द्रष्टा ॥

[4] गीतायाम् 'इदं शरीरम्' 'एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः' इत्यत्र एकशरीरवेदितृत्वेन क्षेत्रज्ञत्वं जीवस्योक्तम् । स्वापृथक्सिद्ध सर्वशरीर-वेदितृत्वरूपं क्षेत्रज्ञत्वन्तु परमात्मन एव न जीवस्येति 'क्षेत्राणि शरीराणी'ति बहुवचनेन बोधितम् । एवं 'बीजं चापि शुभाशुभम्' इत्यनेन—इदं शरीरमेतत्कर्मारम्भाय एतत्कर्मफलभोगाय च इति सङ्कल्पवत्त्वरूपं क्षेत्रज्ञत्वं परस्यैव न जीवस्येति बोधितम् । 'योऽस्यात्मनः कारयिता तं क्षेत्रज्ञं प्रचक्षते । यः करोति तु कर्माणि (सभूता) (परमात्मो)च्यते बुधैः (१२-१२) इति मनूक्तेश्च (गीता. १३-४ ता. च.) इत्यवसेयम् ॥

मनुवचने 'भूतात्म, पदं मैत्रायणीय श्रुत्यनुसारेण जीवपरमिति (ना-आ-१६. अ. ११ श्लो) विवरणावसरे व्यक्तीभविष्यति। एतेन क्षेत्रज्ञशब्दः जीवे पृथक् न रूढः अपि तु जीवपरमात्मसाधारणः 'प्रोक्षणीष्वर्थसंयोगा'

[1] नागतिर्न गतिस्तस्य ज्ञेया भूतेन केनचित् ।

---

दिति न्यायात्, इति बोधितम् एवमेव पुरुषशब्दोऽपि जीवे परमात्मनि च वर्तते। अत्रैव ब्रह्मरुद्रसंवादे उभयत्र पुरुषशब्दप्रयोगात्। तत्रावयवार्थपौष्कल्यं परमात्मन्येव। सर्वक्षेत्रवेदितृत्व सर्वशरीरसंबन्धित्वादे स्तस्यैव प्रतिपादनात्। एवमात्मशब्दोपि जीवपरोभयसाधारणः 'तत्रयः परमात्मा हि' 'कर्मात्मात्ववरो योऽसौ' इत्युत्तरत्र परजीवयोरुभयत्रात्मशब्दप्रयोगात् । एतेन 'क्षेत्रज्ञ आत्मा पुरुष' इति कोशोपि न जीवे पृथग्रूढिग्राहकः । अपि तु जीवपरोभयपर एवेति निर्णीयते। अत एव मोक्षधर्म एव पूर्वं नारदसनत्कुमारसंवादे (वा.रा.मु.को. १५६ अध्या. १६३–१६४ वा.) 'प्रकृतिं क्षेत्रज्ञं च परः क्षेत्रज्ञष्षड्विंशकोऽनुपश्यति । न तु पञ्चविंशः क्षेत्रज्ञः प्रकृतिर्वा परं क्षेत्रज्ञं पश्यति' इति सनत्कुमारोक्तौ क्षेत्रज्ञ शब्दस्य जीवे परमात्मनि च प्रयोग उपपद्यते । अयमर्थः कपिलस्यापि सम्मतः । अत्रैव पूर्वं कपिलासुरि संवादे (वा.रा.मु. को. ११५ अध्या १४६ वा) ज्ञातानामाऽसुर क्षेत्रज्ञो द्रष्टा शुचिरुपेक्षको ज्ञानात्मको बुध्यमानाऽप्रतिबुद्धयोः परं तं विदित्वा निरवयवमस्माद्दुःखाद्विमुच्यत, इत्युपक्रम्य (२५९ वा) "कूलमन्यो वृक्षोऽन्यः मशकोऽन्योऽन्यदुदुम्बरं, अन्यो मत्स्य अन्यदुदकम्, मुञ्जमन्यदन्येषीका, अन्यदुदकमन्यत्पुष्करपर्णम्, तथा अन्यत्क्षेत्रं क्षेत्रज्ञोऽन्यः पुरुषः पञ्चविंशकः, अन्यश्चास्मात्क्षेत्रज्ञ इति" (२६६ वा) 'द्रष्टा क्षेत्रज्ञः द्रष्टव्यमव्यक्तं, अन्यद्दृष्टव्यं अन्यः पुरुषः, पञ्चविंशतितत्वमन्यत्, अन्योऽस्मात्क्षेत्रज्ञ इति' इति आसुरिं प्रति कपिलोक्तौ जीवपरयोः क्षेत्रज्ञशब्देन निर्देशस्य भेदस्य च स्फुटमवगमादिति बोध्यम् ॥

[1] जीवपरयोरुभयोः क्षेत्रज्ञशब्देन व्यपदेशेपि परस्य विभुत्वेन कर्मसंबन्धानर्हत्वेन च कर्मबद्धाणुजीववद्गत्यागत्योरसंभवेन वैलक्षण्यमाह ।

साङ्ख्येन विधिना चैव योगेन च [1]यथाक्रमम् ॥ ७ ॥
चिन्तयामि गतिं [2]तस्य न [3]गतिं वेद्मि [4]चोत्त राम् ।
यथाज्ञानं तु वक्ष्यामि पुरुषं हि [5]सनातनम् ॥ ८ ॥
[6]तस्यैकत्वं महत्वं हि स चैकः पुरुषस्स्मृतः ।
महापुरुषशब्दं स बिभर्त्यैकस्सनातनः ॥ ९ ॥

---

नागतिरित्यादिना । एतेन 'उत्क्रान्तिगत्यागतीनाम्' (२-३-२० इति सूत्रोक्तगत्यागतियोगेन जीवस्याणुत्वमिति बोधितम् ॥

[1] प्रथमं साङ्ख्योक्तदिशा प्रकृतिविविक्तज्ञात्रात्मस्वरूपज्ञानं अनन्तरं तस्यैवात्मनः अष्टाङ्गयोगः तत आत्मावलोकनं ततः परमात्मध्यानरूपो भक्तियोग इति क्रमेणेत्यर्थः । अयं च क्रमः भगवद्गीतायां स्फुट इति निरूपितं तद्भाष्य तात्पर्यचन्द्रिकयोः । एतदेवाभिप्रेत्य उदाहृतन्यायपरिशुद्धौ 'परिशुद्धात्मचिन्तनरूपज्ञानयोगप्रदर्शनाधिकृतं शास्त्रं साङ्ख्यम् । समाधिपर्यन्तकर्मयोगनिष्ठं शास्त्रं योगः' इत्याचार्यपादोक्तिः । जीवात्मयोगस्य कर्मयोगफलरूपत्वं तात्पर्यचन्द्रिकासारज्ञानां सुगमम् ॥

[2] पुरुषोत्तमक्षेत्रज्ञशब्दार्थस्य वासुदेवस्य ॥

[3] गतिं । प्राप्तिसाधनम् । प्राप्तिं वा ॥

[4] पूर्वोक्तक्रमेण गतिविलक्षणाम् । एतेन साङ्ख्ययोगयोः क्रमेण पञ्चरात्रप्रतिपाद्य पुरुषोत्तमप्राप्तिसाधनप्रतिपादकत्वाद्वेदैककण्ठ्यं द्योतितम् ॥

[5] एतेन सृष्टिकर्म जीववैलक्षण्यं द्योतितम् ॥

वासुदेवस्य सर्वशरीरित्वेन गुणैश्च महत्वादवयवार्थ पौष्कल्येनैव महापुरुषशब्दबोध्यता न तु रूढ्या । अतश्च 'वेदाहमेतं पुरुषं महान्तम्' 'महान्प्रभु वै पुरुषस्सत्वस्यैष प्रवर्तकः' इति पुरुषसूक्तश्वेताश्वतरादौ नारायण एव प्रतिपिपादयिषित इत्याह ॥

[6] तस्यैकत्वमित्यादिना । अस्य नारायणत्वमनुपदमेव वक्ष्यते ॥

इत्यनेन तस्य प्रलयागोचरत्वं सर्वगत्वं सर्वप्रत्यक्षाविषयत्वं सगुणत्वं सत्वादिगुणत्रयशून्यत्वं सर्वशरीरवर्तित्वेऽपि कर्मालेपः क्षेत्रज्ञशब्दाभिधेयत्वं साङ्ख्ययोगविधिना चिन्तनीयत्वं 'वेदाहमेतं पुरुषं महान्तम्' 'महान्प्रभुर्वै पुरुषः' इत्यादौ महापुरुषशब्दार्थत्वम् ॥

एको हुताशो बहुधा समिध्यते
एकस्सूर्यस्तपसो योनिरेका ।
एको वायुर्बहुधा वाति लोके
महोदधिश्चाम्भसां योनिरेकः ।
पुरुषश्चैको निर्गुणो विश्वरूप
स्तं निर्गुणं पुरुषं चाविशन्ति ॥ १० ॥
[1]हित्वा गुणमयं सर्वं कर्म हित्वा शुभाशुभम् ।
उभे सत्यानृते त्यक्त्वा ह्येवं भवति निर्गुणः ॥ ११ ॥

---

एतेन श्वेताश्वतरश्रुतौ महापुरुषस्य सत्वप्रवर्तकत्वोक्त्या 'जायमानं हि पुरुषं यं पश्येन्मधुसूदनः। सात्त्विकस्स तु विज्ञेयः' इति पूर्वोक्तार्थः स्थापितो भवति । एवमनेन—महापुरुषशब्दो विष्णौ रूढः रुद्रे यौगिको मुख्यश्श्वेताश्वतरादौ विवक्षित इति (शि–त–वि) निरस्तम् ॥

नानाविधविषम परिणामशून्यत्वेन एकस्य हुताशसूर्य वाय्वादेर्योनित्वं यथा तथैव नानाविधविषमपरिणामप्रयोजकीभूतसत्वरजस्तमोगुणाधिष्ठानशून्यत्वेन निर्गुणस्यैकस्य परवासुदेवस्य प्राप्यत्वमिति 'एको हुताशः' इत्यादिना 'पुरुषश्चैको निर्गुणो विश्वरूपः तन्निर्गुणं पुरुषं चाविशन्ति' इत्यन्तेनाभिधायास्य निर्गुणत्वं विशदीकरोति ॥

[1]हित्वेत्यादिना । अत्र निर्गुणः पुरुषः ब्रह्मणा पूर्वं चिन्त्यत्वेनोक्तः पुरुषोत्तमः परवासुदेव एव । पूर्वं 'निर्गुणं निर्गुणाभूत्वा प्रविशन्ति सनातन'

मित्यत्र सर्वजीवप्राप्यत्वेनोक्तस्यैव तान्निर्गुणं पुरुषं चाविशन्ती'त्यत्र प्रतिपादनात्। प्रागुदाहृतेषु 'विश्वावासं निर्गुणं वासुदेवं' 'एका मूर्तिर्निर्गुणाख्या' 'आत्मभूतो वासुदेवः' 'ततस्त्रैगुण्यहीनास्ते' 'प्रविशन्ति द्विजश्रेष्ठाः क्षेत्रज्ञं निर्गुणात्मकम्। सर्वावासं वासुदेवं क्षेत्रज्ञं विद्धि तत्वतः' इत्यादिवचनेषु वासुदेवस्य निर्गुणत्वत्रैगुण्यहीनप्राप्यत्वयोः स्फुटमभिधानाच्च। 'ततस्त्रैगुण्यहीनास्ते-प्रविशन्ति-निर्गुणात्मकम्' इति वचनैककण्ठ्यात्; निर्गुणं निर्गुणाः' इत्यत्रापि निर्गुणा इत्यस्य गुणत्रयशून्या इत्यर्थः स्फुट इति निर्गुणं इत्येतदर्थस्यास्फुटत्वात्तन्निरूपणम् एतन्निरूपणेन निर्गुणाः इत्यस्यार्थोऽपि विशदीकृतो भवति। 'निर्गुणाः' 'त्रैगुण्यहीनाः' इत्युभयत्र बहुवचनेन मुक्तिकाले जीवबहुत्वप्रतिपादनात् पारमार्थिकं जीवबहुत्वमिति सिध्यति। अत्र नीलकण्ठः। 'गुणमयं देहेन्द्रियाद्यहंकारान्तं हित्वा तद्धानाच्च शुभाशुभं कर्म त्यक्त्वा ततः सत्यानृते सत्यमक्षरं जीवाख्यं अनृतं प्रधानं भोक्तारं भोग्यं च त्यक्त्वेत्यर्थः'। इति व्याचख्यौ॥

अत्राद्यपादेन साक्षाद्गुणत्रयाधिष्ठानविरहव्यञ्जकगुणत्रयसम्बन्धविरह उक्तः। 'निर्गुणं चेश्वरं नित्यमधिष्ठातारमेव चे'ति अत्रैव पूर्वं (२१० अध्या. ४३ श्लो. सङ्कर्षणप्रद्युम्नानिरुद्धरूपेण) गुणत्रयाधिष्ठानस्योक्तेः। तच्चाधिष्ठानं सङ्कर्षणप्रद्युम्नानिरुद्धरूपेणेति निरूपयिष्यते॥

'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा।
कर्माध्यक्षस्सर्वभूताधिवासस्साक्षी चेता केवलो निर्गुणश्च॥'.

इति (श्वे) श्रुतौ पदत्रयेण भूतसंबन्धोक्त्या गुणत्रयसंबन्धप्रसक्तौ 'निर्गुण' इत्यनेन तन्निषेधः क्रियत इति भावः॥

द्वितीयपादेन श्रुतौ कर्माध्यक्ष इत्यनेन प्रतीतकर्ममूलकगुणसंबन्धप्रसक्तौ परस्य निर्गुण इत्यनेन कर्ममूलकगुणसंबन्धनिषेधः क्रियते॥

तृतीयपादेन 'तत्सृष्ट्वा—सत्यं चानृतं च सत्यमभव'दिति श्रुत्युक्तदिशा सृष्टिकर्मभूतचिदचित्संबन्धस्य प्रतीत्या 'एको देव' इति श्रुतावपि सर्वभूतसंबन्धस्य तादृशत्वेन चिदचित्संबन्धनिबन्धनगुणानां प्रसक्तौ स्वाभाविकगुणवतः परस्य चिदचित्संबन्धनिबन्धनगुणनिषेधः क्रियते ॥

जीवस्य तु प्रकृतिसंबन्धदशायां देहगतसत्त्वादिगुणत्रयप्रयोज्यगुणानां कर्ममूलकानां तेषां स्वस्वरूप अचेतन एतदुभयनिमित्तकानां तेषां च संभवेन मुक्तिकाले कर्मक्षयात्प्रकृतिमण्डलातिक्रमणाच्च तन्निषेधोऽप्यत्र विवक्षितः ॥

यद्वा—'तन्निर्गुणं पुरुषं चाविशन्ती'त्यनन्तरश्लोके 'एवं भवति निर्गुण' इति विन्यासपर्यालोचनायां निर्गुणः एवं भवति प्राप्यो भवति। तत्र 'हित्वा गुणमयं सर्व'मित्यनेन प्रकृतिमण्डलादूर्ध्वमित्यर्थो लभ्यते। द्वितीयपादेन कर्मत्यागानन्तरमेव प्राप्तिः न तु प्रारब्धकर्मसत्तादशायां जीवतो मुक्तिरिति प्रतिपाद्यते। तृतीयपादेन सृष्टिकर्मभूतचिदचित्संबन्धत्यागानन्तरमेव प्राप्तिः न तु सृष्ट्यादिव्यापाराधिकरणदेश इत्यर्थो लभ्यते। तेन चापुनरावृत्तिस्सूच्यते। प्रकृतिमण्डलाद्बहिस्थान एव गतिद्वारा मुक्तिर्भगवत्प्राप्तिरिति कपिलादेर्मतमिति युधिष्ठिरं प्रति भीष्मेण साङ्ख्यस्य निरूपणावसरे (भा. मो. ३०७ अध्या.)—

एवं तत्त्वमिदं (शृणु मे त्वमिदं) कृत्स्नं साङ्ख्यानां विदितात्मनाम्।
यदुक्तं मुनिभिर्मुख्यैः (विहितं यदिदं वृद्धैः) कपिलादिभिरीश्वरैः ॥
यस्मिन्न विभ्रमाः केचिद्दृश्यन्ते मनुजर्षभ ॥ ४ ॥
तीर्त्वातिदुस्तरं राजन् (जन्म) विशन्ति विमलं नभः ॥ ७२ ॥
तत्र तान्सुकृतीन्सर्वान्सूर्यो वहति रश्मिभिः।
पद्मतन्तुवदाविश्य प्रवहन्विषयान्नृप ॥ ७३ ॥
तत्र तान्प्रवहन्वायुः प्रतिगृह्णाति भारत।

वीतरागान्यतीन्सिद्धान्धिया युक्तांस्तपोधनान् ॥ ७४ ॥

सूक्ष्मश्शीतस्सुगन्धिश्च सुखस्पर्शश्च भारत ।
सप्तानां मरुतां श्रेष्ठो लोकान्गच्छति यश्शुभान् ॥ ७५ ॥

सतान्वहति कौन्तेय तमसः परमाङ्गतिम् ।
तमो वहति लोकेश रजसः परमाङ्गतिम् ॥ ७६ ॥

रजो वहति राजेन्द्र सत्त्वस्य परमाङ्गतिम् ।
सत्त्वं वहति शुद्धात्मा परं नारायणं प्रभुम् ॥ ७७ ॥

प्रभुर्वहति शुद्धात्मा परमात्मानमात्मना ।
परमात्मानमासाद्य तद्भूतायतमानसाः ॥ ७८ ॥

अमृतत्वायकल्पन्ते न निवर्तन्ति चाभिभो ।
परमा सा गतिः पार्थ निर्द्वन्द्वानाम्महात्मनाम् ॥ ७९ ॥

आत्माकेवलतांप्राप्तो यत्रगत्वा न शोचति ।
ईदृशं परमं स्थानं निरयास्ते च तादृशाः ॥

प्रकृतिं चाप्यतिक्रम्य गच्छत्यात्मानमव्ययम् ।
परं नारायणं देवं निर्द्वन्द्वं प्रकृतेः परम् ॥ ९६ ॥

विमुक्तस्सर्वपापेभ्यः प्रविष्टस्तमनामयम् ।
परमात्मानमगुणं न निवर्तति भारत ॥ ९७ ॥

इति वचनेषु पूर्वमेव निरूपितम्—एतानि (४-२-५) व्यासार्यैरुदाहृतानि ॥

एतन्मयोक्तं नरदेवतत्त्वं नारायणो विश्वमिदं पुराणम् ।
स सर्गकाले च करोति सर्गं संहार काले च तदत्तिभूयः ॥

(२०७-अ. ११५-श्लो.)

**[2] एकं हि परमात्मानं केचिदिच्छन्ति पण्डिताः ।**
**एकात्मानं तथाऽत्मानं परमध्यात्मचिन्तकाः ॥ १३ ॥**

---

इति तत्रत्याध्यायान्तिमश्लोकसमानार्थकत्वमेतत्प्रघट्टकस्य स्फुटम्—

ये तुदग्धेन्धना लोके पुण्यपापविवर्जिताः ।
विशन्ति विप्रप्रवरास्साङ्ख्यायोगैश्च तैस्सह ॥ १७ ॥

'ततस्त्रैगुण्यहीनास्ते' 'प्रविशन्ति' क्षेत्रज्ञं निर्गुणात्मकम्, इति पूर्वं (८०. पु) उदाहृतवचनेषु साङ्ख्ययोगानां पञ्चरात्रोदितक्रमिकभगवत्प्राप्तिरूपमुक्तिस्स्फुटमुक्ता इति यथोक्त एवार्थः ॥

[2] अत्रोत्तरार्धे 'अपरे' इति क्वचित्पाठः तस्मिन्नपिपाठे 'केचित्' 'अपरे' इति पाठद्वयेन विरुद्धं (व्यास, कपिल) मतद्वयमत्रविवक्षितमितिनशङ्क्यम् । तथासति अनन्तरश्लोकद्वये परमात्मजीवात्मनोरुभयोर्निरूपणमनुचितमेवस्यात् । अतः उत्तरार्धे 'अध्यात्मचिन्तका' इति पदेन उपक्रमे 'अध्यात्मचिन्तामाश्रित्ये'ति पदप्रत्यभिज्ञापनेन तस्य जीवचिन्तका इत्यर्थः । पूर्वार्धे 'पण्डिता' इत्यनेन जीवसाक्षात्कारस्यपि सिद्धतायाः प्रतीत्या परिनिष्पन्न जीवसाक्षात्काराः विवक्षिताः । परिनिष्पन्न जीवसाक्षात्काराः परमात्मानमिच्छन्ति अतथाविधाः जीवात्मचिन्तकास्तु जीवात्मानं तं चैकात्मानमित्युत्तरार्धे विवक्षितमिति प्रतीयते । एकात्मानमित्यस्य एकः आत्मा-यस्येति बहुव्रीहिर्विवक्षितः । 'तवान्तरात्माममचे'ति पूर्ववचनानुसारात् । 'वासुदेवात्मकान्याहुः क्षेत्रं क्षेत्रज्ञमेव चे'त्यानुशासनिकवचनानुसाराच्च ॥

'तन्निर्गुणं पुरुषं चाविशन्ती'ति पूर्वमुक्त्या अत्रेच्छन्तीत्यत्र प्राप्यत्वे नेच्छाविवक्षितेति प्रतीयते । इत्थं च जीवात्मचिन्तकाः परमात्मशरीरभूतं स्वात्मानं प्राप्यमिच्छन्तीत्यर्थः पर्यवस्यति । एतत्तात्पर्येणैव न्यायपरिशुद्धौ

[1] तत्रयः परमात्मा हि स नित्यो निर्गुणस्स्मृतः ।
स हि नारायणो ज्ञेयस्सर्वात्मा पुरुषोहि सः ॥ १४ ॥
[2] न लिप्यते फलैश्चापि पद्मपत्रमिवाम्भसा ।

---

'परिशुद्धात्मचिन्तनरूपज्ञानयोगप्रदर्शनाधिकृतं शास्त्रं साङ्ख्य' मित्याचार्यपादोक्तिरिति बोध्यम् ॥

[1] अन्तर्यामिब्राह्मणं 'एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः' (सु) 'पुरुषं निर्गुणं साङ्ख्यम्, (मं) इत्यादिश्रुती रभिप्रेत्य परमात्मस्वरूपं दर्शयति । तत्रेत्यादिना । अन्तर्यामिब्राह्मणे प्रतिपर्यायं 'एषत आत्माऽन्तर्याम्यमृत' इति अमृतशब्दप्रयोगेण नित्यत्वं तत्तत्स्थानादिसम्बन्धनिबन्धनदोषसम्बन्धशून्यत्वं च विवक्षितमिति 'नित्यो निर्गुण' इति पदद्वयेन बोधितम् ॥

अचित्संबन्धनिबन्धनरजस्तमोगुणशून्यत्वं जीवसंबन्धनिबन्धनकर्ममूलकगुणशून्यत्वं च 'निर्गुण' इत्यत्र विवाक्षितम् ॥

अस्मिन्श्लोके प्रथमं 'हि' द्वयं प्रसिद्धौ । 'सर्वात्मा पुरुषो ही' त्यत्र हिः हेतौ । यतः पुरुषः अतस्सर्वात्मा इत्यर्थः । 'स वा एष सर्वासु पूर्षु' (बृ.४) इति श्रुत्या सर्वशरीरसबन्धिनः पुरुषपदार्थत्वेन 'अन्तः प्रविष्टश्शास्ता जनाना९ सार्वात्मा' इति श्रुत्युक्तरीत्या अन्तः प्रविश्य नियन्तृत्वरूपं सार्वात्म्यं तेन 'नारायणोविश्वमिदम्' इत्यादौ सामानाधिकरण्यं निर्व्यूढमिति भावः ॥

[2] पूर्वं 'वसन्नापि शरीरेषु न स लिप्यति कर्मभिः' इत्युक्तमर्थं विशदयति । 'न' लिप्यत इत्यनेन । एकस्मिन्शरीरे जीवपरमात्मनोस्सत्त्वेऽपि 'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति (श्वे. ४-६) 'एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः' (कठ ५·११) इत्यादिश्रुत्युक्तादिशा कर्मफल-

[1] कर्मात्मात्वव(प)रो योऽसौ[2] मोक्षबन्धैस्स युज्यते ॥ १५ ॥
[3] ससप्तदशकेनापि राशिना युज्यते पुनः[4] ।
एवं बहुविधः प्रोक्तः[5] पुरुषस्ते यथाक्रमम् ॥ १६ ॥

---

संबन्धः न परमात्मन इति भावः ॥

[1] कर्मफलसंबद्धजीवात्मानं दर्शयति । कर्मात्मेत्यादिना । कर्मपरतन्त्र-आत्मा कर्मात्मा शाकपार्थिववत्वात्परतन्त्रपदलोपः । अत्र 'अवर' इति प्राचीनकोशेषु पाठः आचार्यसम्मतश्च । 'प्राणाधिपस्सञ्चरति स्वकर्मभिः' 'आराग्रमात्रो ह्यवरोऽपि दृष्टः' (श्वे) इत्यादिश्रुत्यनुसारात् ॥

अत्र पूर्वं पुरुषोत्तमशब्देन महापुरुषशब्देन 'को ह्यत्र पुरुषश्रेष्ठः' 'आख्यास्यामि गुणाधिकम्' इति प्रश्नप्रतिवचनाभ्यां च 'बहूनां पुरुषाणां' इत्युक्तजीवानामवरत्वस्य प्रतीतेश्चायमेव पाठो युक्तः । अपर इति पाठेऽपि न परः अपर इति विग्रहेण उत्कृष्टभिन्न इत्यर्थः । अपर इत्यस्या-खण्डत्वमङ्गीकृत्य भिन्न इत्यर्थाङ्गीकारेऽपि भावान्तराभावपक्षस्यैव सिद्धान्त-त्वेन भेदो निकर्ष एव पर्यवस्यतीति बोध्यम् । एतेन सर्वैः प्रकारैरप्रकृष्ट-स्योत्कृष्टाभेदो न घटत इति द्योत्यते ॥

[2] 'कर्मात्मा—मोक्षबन्धैस्स युज्यते' इति वाक्यपर्यालोचनायां बन्धः कर्मबन्धः मोक्षश्च कर्ममोक्ष एव इति विवक्षितमिति प्रतीयते । 'युज्यते' इत्यनेन बन्धमोक्षयोस्तात्त्विकत्वं बोधितम् ॥

[3] वनपर्वणि (२१४ अ.) सप्तदशकराशिः प्रतिपादितः ।

[4] अत्र 'पुन' रित्येव शङ्करभाष्यपाठः । एतेन स्थूलदेहवियोगानन्तरं स्थूलदेहान्तरप्राप्तिमध्यकालेऽपि कर्मकृतसूक्ष्मशरीरसंबन्धो वर्तत इत्युक्तं भवति॥

[5] 'बहूनां पुरुषाणां हि' इति प्रतिवचनोपक्रमे सृष्टिकर्मत्वेन पूर्वं प्रस्तुतः पुरुषोत्तमाधारकः पुरुषोत्तमोपादानकः अवरश्च पुरुष उक्तः । सः

[1] यद्वै सूते धातुराद्यं विधानं ।
तद्वै विप्राः प्रवदन्तेऽनिरुद्धम् ॥

---

कर्मपरतन्त्रः कर्ममूलकतत्तद्देहान्तर्मात्रवृत्तिः बन्धमोक्षभागी बहुविधः पुरुषः पुरुषोत्तमनिरूपणानन्तरमुक्त इत्यर्थः । अत्र एकपुरुषस्याधारत्वमुक्त्वा आधेयभूतानां पुरुषाणां बहुत्वं प्रतिपादितम् । यथैकस्मिन्द्रव्ये विद्यमानानां गुणानां बहुत्वं तद्वदित्यर्थस्तु 'गुणाधिक' मित्यनेन सूचितः । भगवद्गीतायामपि सप्तमे चेतनाचेतनयोर्भगवच्छेषत्वमुक्त्वा--

मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ।

इत्यनेन तयोर्भगवदाधारकत्वमप्यभिहितम् । चिदचितोर्भगवदाधारकत्वेन चेतनाचेतनगुणानामपि भगवदाधारकत्वं सिद्ध्यतीति 'रसोऽहमप्सु कौन्तेय' इत्यादिना बोधितम् । तेन च गुणगुणिनोरपृथक्सिद्धिवच्चिदचितोर्भगवतश्चापृथक्सिद्धिरिति द्योतितम् । एतद्द्योतनायैव 'आपोऽह' मित्याद्यनभिधाय 'रसोऽह' मित्याद्युक्तिः । अतश्च यथा एकद्रव्यपरतन्त्राः बहवो गुणास्तद्वदेकपुरुषोत्तमपरतन्त्राः बहवो जीवा इत्यर्थस्सिद्धः । आकृत्यधिकरणे 'अर्थैकत्वमविभागात्, (१-३-३०) इति सूत्रे जैमिनिना गुणगुणिनोर्योऽविभाग उक्तः स एवाविभागो मुक्तिकालेऽपि जीवब्रह्मणोरिति 'अविभागेन दृष्टत्वात्' (४-४-४२) इति सूत्रे व्यासेन सिद्धान्तितम् । अयमर्थश्श्रीभाष्यादिषु सम्यक्प्रतिष्ठापित इति बोध्यम् ॥

एतेन कर्मवश्यत्वाकर्मवश्यत्वाभ्यां जीवपरमात्मनोर्भेदः बन्धमोक्षव्यवस्थया जीवानां परस्परभेदश्च बोधितः ॥

[1] पूर्वं चतुर्मुखस्य यत्स्रष्टृत्वमुक्तं तत्परमात्मनि पर्यवसाययितुं चतुर्मुखोत्पत्त्यादिकं दर्शयति यद्वै इत्यादिना ॥

[1] यद्वै लोके वैदिकं कर्म साधु ।
आशीर्युक्तं तद्धि तस्योपभोग्यम् ॥ १९ ॥
[2] देवास्सर्वे मुनयस्साधु दान्ताः
तं प्राग्वंशे यज्ञभागं भजन्ते ।
[3] अहं ब्रह्मा चाद्य ईशः प्रजानाम्
तस्माज्जातस्त्वं च मत्तः प्रसूतः ॥ २० ॥
मत्तो जग[4]ज्जङ्गमं स्थावरं च ।

---

[1] अत्र 'यद्वै लोक' इति सामान्यनिर्देशेन ब्रह्मादिकृतप्रवृत्तिधर्माराध्यत्वमप्यनिरुद्धस्येति दर्शितम् ॥

[2] ब्रह्मादिदेवव्यतिरिक्तपुरुषकृतप्रवृत्तिधर्माराध्यत्वं ब्रह्मादिदेवानामिति दर्शयति देवा इत्यादिना ॥

[3] अत्र चतुर्मुखाद्रुद्रस्योत्पत्तिकथनेन रुद्रेशत्वं चतुर्मुखस्येति चतुर्मुखस्य प्रजेशत्वप्रतिपादनपूर्वकमनिरुद्धाज्जन्मनः प्रतिपादनेन अनिरुद्धस्यैव सकलप्रजेशत्वं इति चोक्तं भवति । तेनेशादिशब्दानामसङ्कुचितयोगार्थः 'ईशस्त्वं सर्व भूतानामीश्वरोऽसि ततो हरे' (ह–वं) इत्युक्तदिशा नारायण एव नान्यत्रेति सिद्धम् ॥

[4] जङ्गमस्थावरयोरुभयोरपि जीवसम्बन्धः—

यावत्सञ्जायते किञ्चित्सत्वं स्थावरजङ्गमम् ।
क्षेत्रक्षेत्रज्ञसंयोगात्तद्विद्धि भरतर्षभ ॥ (गी. १३, २६)
वाचिकैः पक्षिमृगताम्मानसैरन्त्यजातिताम् ।
शरीरजैः कर्मदोषैर्यातिस्थावरतांनरः ॥ मनु–१०-९.

इति गीतामनुवचनाभ्यां सिद्धयति । एतेन चतुर्मुखस्य व्यष्टिसृष्टिद्वारकर्तृत्वकथनेन 'बहवःपुरुषास्सृष्टा' इति उपक्रमैकरस्यं निर्व्यूढम् ॥

सर्वे वेदा[1] स्सरहस्या हि पुत्र ॥ २१ ॥
चतुर्विभक्तः पुरुषस्स क्रीडति यथेच्छति ।
एवं स भगवान्देवः स्वेन ज्ञानेन बोधयत् ॥ २२ ॥
एतत्ते कथितं पुत्र यथावदनुपृच्छतः ।
सांख्ये योगे पञ्चरात्रेवेदारण्ये च वर्णितम् ॥ २३ ॥

इत्यनेन प्राप्यस्य परमात्मनः निर्गुणत्वप्रकारं साङ्ख्ययोगविधिना चिन्तनीयस्य जीवस्य ब्रह्मात्मकत्वं परमात्मजीवात्मनोर्व्यावर्तक-

---

[1] अत्र 'सरहस्या' इत्यत्र रहस्यपदं पञ्चरात्रमूलभूतरहस्याम्नायपरं । नच 'सर्वेवेदा' इत्यत्र वेदानां पृथग्गणनाद्रहस्याम्नाय एवाप्रामाणिक इति रहस्यपदेन वेदभिन्नप्रमाणमेव विवक्षितमिति वाच्यम् । एकायनापरपर्याय रहस्याम्नायस्य वेदतायाः न्यायपरिशुद्धौ शब्दाध्याये आचार्यपादैः प्रतिष्ठापनात् । तथाच एकायनश्रुतिं प्रस्तुत्य तद्ग्रन्थः "नचात्रवेदत्वे सन्देग्धव्यं 'यंवाकेष्वनुवाकेषु निषत्सूपनिषत्सुच' 'महतो वेदवृक्षस्य मूलभूतो महानयम् । स्कन्धभूताऋगाद्यास्ते शाखाभूतास्तथामुने, इत्यादि वचनात् । तथा 'ऋग्वेदपाठपठितं व्रतमेतत्सुदुश्चरम्, इति संवाददर्शनात् । वेदशाखाव्यासदशायां निरुक्तशाखाया अपि गणितत्वात् । भगवच्छास्त्रसारभूतसात्त्वतपौष्करादिषु रहस्याम्नायविधाने 'एकायनीयशाखोक्तैर्मन्त्रैः परमपावनै'रित्यादिभिः तच्छ्रुतित्वप्रतिपादनात्" इति । पञ्चरात्राधिकरणश्रुतप्रकाशिकायां च व्यासार्यैः एकायनीयशाखायाः वेदत्वसाधनावसरे "ऋग्वेदं भगवोऽध्येमि-यजुर्वेदं सामवेदमाथर्वण'मित्यादि 'एकायनं देवविद्यां ब्रह्मविद्या'मित्यन्त-(छां) श्रुतिसन्दर्भे ऋग्वेदादेः पृथक्पठितस्याप्येकायनस्य ब्रह्मविद्याया इव ब्राह्मणपरिव्राजकन्यायेन श्रैष्ठ्यात्पृथगुपादानोपपत्तेः" इत्याद्युक्तत्वात्तेनैव-न्यायेनात्रापि पृथगुपादानोपपत्त्या रहस्य पदस्य रहस्याम्नायपरत्वे नकाचि-

दनुपपत्तिः । एकायनीयशाखायाः शुक्लयजुर्वेदशाखाभेदरूपत्वं (११ पु.) पूर्वमेव समर्थितम् एतेन (९०) 'साङ्ख्यं च योगं च सनातनाद्ये वेदाश्च' इत्यत्र च शब्देन रहस्यं ग्राह्यमिति बोधितम् ॥

'स रहस्या इत्यत्र रहस्य पदस्य पञ्चरात्रमूलभूतरहस्याम्नायपरत्वेन पूर्वोदाहृत वचनेषु उपरिचरवसुवृत्तान्ते पञ्चरात्रं प्रस्तुत्य ---

एतद्धि सर्वशास्त्राणां शास्त्रमुत्तम संज्ञितम् ।
एतदर्थ्यं च धर्म्यं च रहस्यं चैतदुत्तमम् ॥

इत्यत्र पञ्चरात्रशास्त्रस्य रहस्यत्वकथनपूर्वकमन्तर्धानोक्तिः । चतुर्मुखस्य सप्तसु जन्मसु पाञ्चरात्रिकधर्मस्याविर्भावतिरोभावकथनावसरे—

धर्मं च मत्तोगृह्णीष्वसात्त्वतं नाम नामतः । इत्युपक्रम्य —
धर्म्यं चाग्र्यं च जग्राह स रहस्यं स सङ्ग्रहम् ।

इत्युक्तिः तदनन्तरं गीतोक्तदिशा सात्त्वतधर्मस्यापि साम्प्रदायिकत्वमभिधाय—

कथितो हरिगीतासु समासविधि कल्पितः ।
नारदेन तु सम्प्राप्त स्सरहस्यस्ससङ्ग्रहः ॥
दुर्विज्ञेयो दुष्करश्च सात्त्वतैर्धार्यते सदा ।

इत्युक्तिश्च सङ्गच्छते ॥

अत्र 'यद्वैसूते धातुराद्यं विधान'मित्युपक्रम्य 'सर्वेवेदास्सरहस्या' इत्यभिधानेन—

'यो ब्रह्मणं विदधाति पूर्वं योवैवेदांश्च प्रहिणोति तस्मै' (श्वे.) ।

इति श्रुतिरत्रविवक्षितेति प्रतीयते । तत्र श्रुतौ च शब्देन रहस्याम्नाय-मूलकं पञ्चरात्रं विवक्षितमिति प्रतीयते । चतुर्मुखायवेददानवत्पञ्चरात्र-दानमपि तत्रतत्र संहितासु प्रतिपादितम् । इत्थं च 'सर्वेवेदास्सरहस्या' इत्यत्र हयशिरोरूपधारिणोऽनिरुद्धस्यानुग्रहेण चतुर्मुखेन लब्धयोर्वेदपञ्च-रात्रयोस्तेनैव प्रवर्त्यत्वमभिहितं भवति ॥

**धर्मो जीवानां बहुविधत्वं ब्रह्मादिदेवप्रवृत्तिधर्माराध्यस्यानिरुद्धस्यैव रुद्रजनकब्रह्मजनकत्वं हयशिरोरूपधार्यनिरुद्धानुग्रहेण चतुर्मुखेन लब्धयोर्वेदपञ्चरात्रयोस्तेनैव प्रवर्त्यत्वं चतुरात्म वासुदेवस्यैव प्राप्यभूतस्य जगत्कारणत्वं साङ्ख्ययोगतात्पर्यविषयत्वं एवमेव भगवदनुग्रहेण चतुर्मुखस्य ज्ञानंचेत्यादिकं प्राचीकशत् ॥**

---

रुद्रजनकचतुर्मुखजनकस्यैव पुरुषस्य पूर्वं परत्वमभिधायात्र पञ्चरात्रोक्तदिशा चतुर्विधत्वाभिधानेन तस्यैव प्राप्यत्वं पूर्वं प्रक्रान्तमुपसंहृतम् । साङ्ख्ययोगतात्पर्यविषयत्वं पञ्चरात्रप्रतिपाद्यपुरुषस्य यत्पूर्वमुक्तं तत् सनातनसाङ्ख्ययोगयोः वेदाविरोधं तदनन्तरकालिकग्रन्थानामेव वेदविरुद्धत्वं प्राचीनसाङ्ख्ययोगयोः पञ्चरात्रोक्तमुक्त्यनुगुणत्वं चोपपाद्य अन्ते—प्राच्यलिखितकोशपाठे—

साङ्ख्यज्ञाने तथा योगे यथावदनुवाणतम् । (मुद्रितकोशे)

इति पाठे वा तयोर्वेदैकरस्यस्योपसंहारेणस्थिरीकृतम्—एतेन—

एवमेकं साङ्ख्ययोगं वेदारण्यकमेव च ।
परस्पराङ्गान्येतानि पञ्चरात्रन्तु कथ्यते ॥

इति वचनार्थः 'तत्कारणं साङ्ख्ययोगाधिगम्यम्' 'योवैवेदांश्च '(श्वे) 'पुरुषं निर्गुणं साङ्ख्यम्' (मं) इति श्रुत्यर्थश्च प्रतिष्ठापितः ॥

कपिलासुरिसंवादवसिष्ठकराळजनकसंवादादौ कपिलदेवहूतिसंवादे (भाग ३ स्कं) च जीवब्रह्मणोर्भेदस्साङ्ख्यतात्पर्यविषय इति स्पष्टम् अयमर्थः उत्तरत्र निरूपयिष्यते । चतुरात्मनो वासुदेवस्य महाभारते पूर्वं तत्र तत्र निरूपणपूर्वक मोक्षधर्मेऽपि परत्वप्राप्यत्वयोः नारायणाख्याने तदाराधनभूतैकान्तिधर्मस्य भगवद्गीतायां सङ्ग्रहेण प्रतिपाद्यतायाः पञ्चरात्रप्रामाण्यप्रतिपादनपूर्वकं तत्र विस्तृतस्यास्य सात्त्विकैरनुष्ठेयतायाश्च प्रतिष्ठापनेन गीतानां मोक्षधर्माणां चैकार्थ्यं निर्व्यूढम् ॥

तदेवं नारायणाख्याने विंशतिभिरध्यायैः पञ्चरात्रप्रामाण्य-कथनपूर्वकं भगवद्गीतायां सङ्गृहीतस्य पञ्चरात्रे विस्तृतस्य सर्व-धर्मश्रेष्ठस्य भगवत्प्राप्तिफलकस्यैकान्तिधर्मस्य प्रतिबुद्धैरनुष्ठेयत्वं अप्र-तिबुद्धैरननुष्ठेयता अनुष्ठातृदौर्लभ्यं चोक्तं भवति ॥

तत्र सप्तदशे हयशिरउपाख्यानानन्तराध्याये एकान्तिधर्मा-नुष्ठातृदौर्लभ्य प्रतिपादनावसरे, प्रतिबुद्धाः सात्त्विकाः अप्रतिबुद्धाः राजसास्तामसाश्चेतिपूर्वापरपर्यालोचने व्यक्तं विदुषाम् । तत्रैव—

जायमानं हि पुरुषं यं पश्येन्मधुसूदनः ।
सात्त्विकस्सतुविज्ञेयस्सवैमोक्षार्थचिन्तकः ॥

इत्यत्र सात्त्विकत्वे निदानंजननकाले मधुसूदनकटाक्षः इति—

पश्यत्येनं जायमानं ब्रह्मारुद्रोऽथ वा पुनः ।
रजसा तमसाचास्य मानसं समभिप्लुतम् ॥

इत्यत्र जननकालें चतुर्मुखकटाक्षः राजसत्वे निदानं तामसत्वेच रुद्रकटाक्ष इति चाभिहितम् । तत्र कस्य पुरुषस्य कृपया रजस्तमो निबर्हणेन सत्वमवर्धत । येन जननकाले मधुसूदनकटाक्षस्सात्त्विक-

---

भगवद्गीतायां च भक्तेः ज्ञानदर्शनप्राप्तिसाधनत्वं स्थिरीकृतम् । तेन—

यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥

इति श्रुतौ अर्थप्रकाशः ज्ञानरूपः 'सर्वं हपश्यः पश्यति सर्वमाप्नोति सर्वशः (छां. ७–२६–२)' इत्युक्तरीत्या दर्शनरूपः प्राप्तिरूपश्च विवक्षितः 'आत्म-बुद्धिप्रसादं (काशं) मुमुक्षुः' इति पूर्वमुक्तेः 'नायमात्मा प्रवचनेन लभ्यः– 'यमेवैष वृणुते तेन लभ्यः' इत्यादावपि भक्तिसाध्यत्वेनोक्तप्राप्तेर्मुक्तधीविकास-रूपत्वादिति बोध्यम् । तदनेन प्रघट्टकेन साङ्ख्ययोगपञ्चरात्रपाशुपतानाम्

**ताज्ञापकस्स्यात् इति जिज्ञासानिवृत्तये मधुसूदनपदमुपात्तम् । तदर्थश्च हयशिरोवृत्तान्तज्ञानमन्तरानज्ञातुं पार्यत इति तत्पूर्वं षोडशः हयशिरोवृत्तान्त निरूपणपरः हयशिर उपाख्यानाध्यायः प्रववृते (इत्यवतरणम्)॥**

---

धर्मशास्त्रत्वं तत्र पञ्चरात्रपाशुपतयोः प्रतिबुद्ध (सात्त्विक) तदन्य (तामस) रूपविभिन्नाधिकारिकत्वं च निर्णीतम् । एतेन वेदमूलास्स्मृतयस्त्रिविधाः धर्मशास्त्रेतिहासपुराणभेदात् । तत्राद्ययोरदूरविप्रकर्षादेकविद्यास्थाननिवेशः । यानिपुनस्सांख्ययोगपाशुपतपञ्चरात्राणि तान्यपि धर्मशास्त्रभेदा एवेति (न्या. प. श. अ.) इत्याद्याचार्यपादसूक्तिर्निर्व्यूढा । शम्भुभट्टोऽपि भाट्टदीपिका व्याख्यायां—

पुराणन्यायमीमांसा धर्मशास्त्राङ्गमिश्रिताः ।
वेदाः स्थाननि विद्यानां धर्मस्य च चतुर्दश ॥

इति याज्ञवल्क्यवचनमुदाहृत्य महाभारतरामायणसांख्यपातञ्जलपाशुपतवैष्णवानां च धर्मशास्त्रएवान्तर्भावः । पञ्चरात्रस्यात्रैववैष्णवमन्त्रशास्त्रेऽन्तर्भाव-इत्याचार्यपादोक्तरीतिमनुससार ॥

प्रमाणत्वेनासंप्रतिपन्नकाशीखण्डविवरणस्य कल्पितत्वेन प्रक्षिप्तवचनमूलकत्वादप्पयदीक्षिताद्युक्तेस्तामवलम्ब्य शम्भुभट्टस्य पञ्चरात्रस्याधिकारिनिकर्षकथनं तद्गुरोः खण्डदेवस्य कौस्तुभे शिष्टत्रैवर्णिकापरिगृहीतत्व, वामागमप्रचुरत्वाभ्यां असिद्धहेतुभ्यां पञ्चरात्रागमस्य सर्वस्याप्रामाण्यभिधानं च नारायणाख्यानस्य सम्यगपरामर्शनिबन्धनत्वादनुपादेयमिति बोध्यम् । (८१-पु.) कृष्णभीष्मयोश्शृण्वतो ऋषीणां सन्निधौ गीतासङ्गृहीतं सात्त्वतधर्मं धर्मराजायोपदेष्टुः (आ. प. ६४. अध्या) उपरिचरवसुदौहित्रस्य व्यासस्य स्वमातामहस्य भ्रष्टत्वं, श्रीभीष्मेणोपदिष्टस्य द्वापरयुगान्ते कलियुगादौ पाञ्चरात्रिकधर्मानुष्ठानस्य अधमविषयकत्वं च तात्पर्यविषय इत्युत्प्रेक्षणस्यानुचितत्वात् ॥

'यस्यदेवे' इत्यादिश्रुतौ गीतायां च भक्तेः मुक्तिसाधनत्वमपि विवक्षितमिति साधनेन प्रेममात्रस्य निरुपाधिकप्रेममात्रस्य वा लोके भक्तिशब्देन व्यवहारविरहात् महनीयविषयकप्रीतिरूपाया भक्तेर्गुणाधिक एव संभवेन ब्रह्मणो गुणाधिकत्वं जीवब्रह्मणोर्भेदं चान्तरा निर्गुणे तदसम्भवेन ब्रह्मजीवयोः परावरभावादेः ब्रह्मणो गुणाधिकत्वस्य च नारायणाख्यने स्थापनेन च, यत् नीलकण्ठस्य पञ्चरात्रस्य भक्तिमात्रे उपसंहारः साङ्ख्ययोगयोर्ज्ञान इति विभागः भक्त्यङ्गकं ज्ञानमत्रविवक्षितमिति तस्यैव ज्ञानस्य नारायणाख्यानान्ते उपसंहार इत्युक्त्वा निर्गुणात्मवादे स्वाभिमतजीवब्रह्माभेदज्ञानं मुक्तिसाधनमित्यर्थस्यात्रविवक्षोत्प्रेक्षणम्—तदप्यनवकाशम् ॥ अत्र—

'साङ्ख्येयोगे पञ्चरात्रे वेदारण्ये च वर्णितम् ।

इति प्राचीनपाठ एव साधुः—

एवमेकं साङ्ख्ययोगं वेदारण्यकमेव च ।
परस्पराङ्गान्येतानि पञ्चरात्रं तु कथ्यते ॥

इत्युदाहृत वचनानुसारात्—

साङ्ख्यज्ञाने तथा योगे यथावदनु वर्णितम् । इति ।

(नी. क.) पाठाभ्युपगमेऽपि 'यथावत्' इत्यनेन प्राच्य साङ्ख्ययोगसूत्रतात्पर्यानुसारेण सगुणात्मतत्त्वमेव तत्र विवक्षितमिति उदाहृतवचनोक्तरीत्या तदेवात्रापि वर्णितमित्यर्थः प्रदर्शितो भवति—तेन त्रयाणामैकरस्यं सिद्ध्यति ॥

एवं च साङ्ख्ययोगवेदपञ्चरात्राणां प्रतिबुद्धविषयकत्वं भक्तेरेवसाक्षान्मुक्तिहेतुत्वं च सुप्रतिष्ठितम् ॥

ननु अधुनापरिदृश्यमानानां साङ्ख्यसूत्राणां शङ्कराचार्यादिभिरनुदाहृतत्वेनाश्रद्धेयत्वेऽपि योगसूत्राणां प्राचीनैस्सर्वैरप्युदाहृतत्वेन प्रामाण्यमेष्टव्यम् । तत्र च 'द्रष्टादृशिमात्र' इति सूत्रे दृशिमात्र इत्यत्रमात्रपदेन आत्मनिधर्मसामान्यविरहोबोध्यत इति व्याख्यातृभिरुक्तत्वेन योगसूत्राणां

निर्गुणात्मपरत्वमेवेति कथं भक्ते स्साक्षान्मुक्तिसाधनत्वमिति चेत्–उच्यते। 'द्रष्टाद्दशिमात्र' इत्यत्रमात्रपदेन न धर्मसामान्यं व्यवच्छिद्यते। किन्तु दृश्यस्वरूपतैव। 'द्रष्टृदृश्ययोस्संयोगोहेयहेतुः' (२–१८) इत्यनेन द्रष्टृदृश्य-संयोगस्यैवदुःखहेतुत्वं नत्वध्यासस्यपरसम्मतस्ये त्यभिधाय 'प्रकाशक्रिया-स्थिति शीलं भूतेन्द्रियात्मकं भोगापवर्गार्थं दृश्यम्' इत्यत्रसत्त्वरजस्तमोगुणा-त्मकवस्तुसामान्यस्यापि दृश्यत्वमभिधाय 'द्रष्टाद्दशिमात्र' इत्युक्त्या मात्रपदेन दृश्यस्वरूपताव्यवच्छेदस्य स्फुटं प्रतीतेः। द्रष्टाइत्यनेन अहं पश्यामीति प्रतीतिसिद्धदर्शनाश्रयत्वेनाहमर्थः विवक्षित इति प्रतीयते। अत्र च स्थूलोऽहं कृशोऽहमित्यादिप्रतीतिभिः शरीरादिमनोन्तस्यापि अहमर्थता-प्रसक्तौ तन्निषेधार्थं मात्रपदं। तेन च स्थूलोऽहमित्यादेः भ्रमत्वेन दृश्यस्य नाहमर्थता—एवं च अहमर्थकोटौ न दृश्यान्तर्भावसिद्धिरिति बोध्यते। एतेन अहंकारस्य चिदचिद्ग्रन्थित्वमपि व्युदस्तं भवति—दृशिशब्देन अहमिति ज्ञानस्यापि प्रत्यक्षरूमत्वमुक्तम्॥

नन्वेवं सति दृशेस्स्वरूपपरिणामशून्यत्वेन दर्शनरूप विकारासंभवात्कथं द्रष्टृत्वमित्याशङ्कायां 'शुद्धोऽपी' त्यादिसूत्रखण्डः प्रववृते शुद्धोऽपि स्वयंप्रकाशोऽपीत्यर्थः स्वरूपपरिणामशून्योऽपीति वा प्रत्ययपश्य इत्यनुक्त्वा-प्रत्ययानुपश्य इत्युक्त्या प्रत्ययं स्वधर्मभूतज्ञानमनुसृत्य पश्यः द्रष्टा इति तदर्थो विवक्षित इति प्रतीयते। अहमर्थस्य स्वरूपपरिणामशून्यत्वेऽपि प्रभास्थानीयस्य तद्धर्मभूतज्ञानस्य विषयसम्बन्ध सम्भवेन विषयसम्बद्ध धर्मभूतज्ञानाश्रयत्वेन द्रष्टृत्वमुपपद्यत इति भावः॥

तदुत्तरं 'तदर्थएवदृश्यस्यात्मा' इत्यत्र दृश्यस्य परार्थत्यरूपपराक्त्व-बोधनेन द्रष्टुः स्वार्थप्रकाशमानत्वरूपं प्रत्यक्त्वं अहन्त्वापरपर्यायं दर्शितं भवति॥

'ईश्वरप्रणिधानाद्वा' 'तत्र निरतिशयं सर्वज्ञ बीजं,' सपूर्वेषामपि गुरुः कालेनानवच्छेदात्' इत्यादिसूत्रस्वारस्य पर्यालोचनायां ईश्वरस्यापि सगु-

**शौनकउवाच—**

**श्रुतं भगवतस्तस्य माहात्म्यं परमात्मनः ।**
**जन्मधर्मगृहेचैव नरनारायणात्मकम् ॥ १ ॥**

**श्रुतमित्यादि भगवत इति—**

**ज्ञानशक्तिबलैश्वर्य वीर्यतेजांस्यशेषतः ।**
**भगवच्छब्दवाच्यानि विनाहेयैर्गुणादिभिः ॥ वि. पु. ६.)**

**इति भगवच्छब्दार्थनिष्कर्षः पराशरेणोक्तः । 'सर्वव्यापी स भगवान् तस्मात्सर्वगतश्शिवः" (श्वे. ३-११.) 'एवगं सदेवोभगवान्वरेण्यः' (श्वे. ५-४.) इति पूर्वाध्यायद्वयगतभगवच्छब्दस्य "परास्य शक्तिर्विविधैवश्रूयतेस्वाभाविकीज्ञानवलक्रिया च" (श्वे. ६-८.) इति [1]श्रुत्यैवार्थो निर्णीतः । अत्र क्रिया–ऐश्वर्यम् । च शब्दः वीर्यतेजस्सङ्ग्रहार्थः यद्वा क्रियाशब्द एवत्रयसङ्ग्राहकः च शब्दः वितति रूपगुणसमुच्चायकः उक्तसमुच्चायक एव वा । परा, विविधा स्वाभाविकी, इति पदैः शक्त्यादीनां अवरत्वं सङ्ख्यावत्त्वं औपाधिकत्वं च व्यवच्छिद्यते (श्वे. ६-११.) निर्गुणश्रुतेः (६-२.) पूर्वं (६-१६.) परत्र च 'ज्ञः कालकालोगुणी सर्वविद्यः. इति श्रुतौ 'गुणी' इत्यत्र 'भूमनिन्दाप्रशंसासु–भवन्तिमतुबादयः' इति वार्तिं-**

---

णत्वं तद्भक्त्यैवसमाधिसिद्धिरिति स्पष्टं प्रतीयते । असंप्रज्ञातसमाधेः यथा सगुणविषयकत्वं योगसूत्रतात्पर्यविषयः तथा 'भक्तिर्मुक्तेरुपायः (त-मु-क-जी-स-२९ श्लो.)' इत्येतद्भावप्रकाशे विशदीकृतम् ॥

अतश्च योगसूत्रे क्वापि निर्गुणात्मसाधकानन्यथासिद्धयुक्त्यादिविरहस्य द्रष्टृपदादिरूपस्य सगुणात्मसाधकस्य सद्भावाच्च तेषामपि सूत्राणां सगुणपरत्वमेवेति बोध्यम् । **इत्यवतरणम् ॥**

इति [1]श्रुत्यैवेति । 'न तस्य कार्यं करणं च विद्यते न

तत्समश्चाभ्यधिकश्च दृश्यते' इत्येतत्पूर्वार्धं। तत्पूर्वं 'देवस्यैषमहिमातुलोके येनेदं भ्राम्यते ब्रह्मचक्रम्' इत्यादिना 'तमीश्वराणां परमंमहेश्वरं तंदैवतानां परमं च दैवतम्', 'पतिंपतीनां परमं परस्ताद्विदामदेवं भुवनेशमीड्यम्' इत्यन्तेनवासुदेवस्य तत्तद्धर्मान्वयमुखेन माहात्म्यं निरूपितम् ॥

'न तत्समश्चाभ्याधिकश्च दृश्यत' इति मन्त्रखण्डेन पूर्वोक्तधर्मैस्सदृशस्य येन केनाप्याकारेणाधिकस्य च वस्तुनः प्रतिषेध उक्तः। अत्र समनिषेधेनैवाधिकनिषेधस्यार्थसिद्धौ पृथगभ्यधिकश्च न दृश्यत इत्युक्त्या ईश्वरादधिकं निर्धर्मकमपि वस्तु अप्रामाणिकमिति बोधितम् ॥

'न तत्समश्चाभ्यधिकश्च दृश्यत' इत्युक्तार्थः 'परास्य शक्ति' रित्येतदुत्तरम् 'न तस्य कश्चित्पतिरस्तिलोके न चेशितानैव च तस्य लिङ्गम्। स कारणं करणाधिपाधिपः न चास्य कश्चिज्जनितानचाधिप' इति मन्त्रेण दृढीकृतः ॥

एवमनेनमन्त्रेण 'नान्योतोऽस्ति द्रष्टा, इति (बृ) श्रुतावपि नियन्तुर्नियन्त्रन्तरमेव निषेध्यतयाविवक्षितमिति वृत्तिकारमतं स्थापितम्। ईक्षत्यधिकरणे चैते मन्त्राः ईश्वरपरतया उदाहृताः शङ्कराचार्यैः ॥।

अत्रानन्दगिरिः—"समः, समानजातीयः, अभ्यधिकः विजातीयः दृश्यत इति नञाअन्वितम्। द्वयं मानाभावपरम्" इति 'न तत्समश्चेति श्रुतिखण्डं व्याचख्यौ। एतत्पर्यालोचनायां सजातीयविजातीयभेदशून्यपरत्वमेतत्खण्डस्य तदभिप्रेतमिति प्रतीयते। ईश्वरं प्रस्तुत्य एतच्छ्रुतिखण्डप्रवृत्त्या 'न तस्य कश्चित्पतिरस्ती'ति तदुत्तरमन्त्रे विशेष निषेधमध्ये 'स कारणं करणाधिपाधिपः' इत्युक्तार्थस्य निर्गुणश्रुत्युत्तरं 'प्रधानक्षेत्रज्ञपतिर्गुणेशः; इति पुनरुक्त्या समाभ्यधिकशब्दयोः प्रसिद्धार्थत्यागस्यानुचितत्वेन च एवमर्थविवक्षा न युक्तेति स्पष्टं विदुषाम् ॥

तथा सति तदन्यन्नदृश्यत इत्येतावन्मात्रेणैव तदभीष्टसिद्धौ मन्त्रभागस्य सर्वस्यापि वैफल्यं कथं परिह्रियते। अतो निर्धर्मकमप्रामाणिकमित्येवैतच्छ्रुतितात्पर्यं पराशराद्यभिमतं युक्तम्।

'परास्य शक्ति' रिति मन्त्रस्य 'सत्वाऽसत्वादिनाऽनवगाह्यत्वं परत्वं' शक्तिर्मूलकारणं माया तस्य विविधत्वं आकाशाद्यशेषाकारत्वं' ऐतिह्यमात्रसिद्धासा न प्रामाणिकीति वक्तुं श्रूयत इत्युक्तम्। उक्तमायानुसारित्वं स्वाभाविकत्वं। ज्ञानमेव बलं तेन क्रियासाचस्वाभाविकी'ति आनन्दगिरिविवरणम्।

'शक्तिर्माया स्वकार्यपेक्षया परा। ज्ञानस्य चैतन्यस्यबलं। मायावृत्तिप्रतिबिम्बितत्वे न स्फुटत्वं। तस्य क्रियानाम-बिम्बत्वेन ब्रह्मणो जनकता। ज्ञातृताऽपि स्वाभाविकीऽतिवाऽर्थः।' इति रामानन्दविवरणम्।

तत्राद्ये 'परं ब्रह्मे' त्यादौपरशब्दसमानार्थकस्य परशब्दस्य सदसद्विलक्षणार्थकत्वं प्रत्यक्षाद्यविषयत्वेन श्रुतितात्पर्यविषयार्थकस्य श्रूयत इत्यस्याप्रामाणिकार्थकत्वं 'देवाऽऽत्मशक्तिं स्वगुणैर्निरूढाम्' इत्यत्र 'स्वगुणै' रित्येतदनुसारेण शक्ति शब्दस्य प्रकृत्यर्थकत्वेऽप्यत्रगुणवाचिपदान्तरसमभिव्याहारेण ईश्वरप्रकरणेन शक्तिशब्दस्वारस्येन च ईश्वरगुणार्थकस्यापि शक्तिशब्दस्य मायार्थकत्वं च श्रुतिपीडनमेव।

द्वितीये 'ज्ञानबलक्रियाचे' त्यर्थवर्णनमपि तथैव। ज्ञानमेवबलमिति विवरणे—ज्ञानबलक्रियेत्यस्य ज्ञातृतेति विवरणे च बलशब्दस्य क्रिया च शब्दयोश्च वैय्यर्थ्यं स्पष्टमेव। अतो ज्ञानबलक्रियाणां परमात्मसम्बन्धित्वं वाक्यस्वरससिद्धं नापह्नवमर्हति।

एतदेवाभिप्रेत्य ज्ञानबलाभ्यां सहिता क्रियेति व्याचख्यौ ब्रह्मविद्याभरणकारः।

एवं च 'स च भगवान्' ज्ञानैश्वर्यशक्तिबलवीर्यतेजोभिस्सदासंपन्न' इति गीतावतरण (शं) भाष्येऽपि इयमेव श्रुतिरभिप्रेतेति प्रतिभाति। श्रुतौ चास्यां स्वाभाविकीज्ञानबलक्रियाचे' त्यत्र च शब्देन शक्तिवदविशेषेण ज्ञान-

कानुसारेण प्रशंसायामिनिः, एवं च सगुणश्रुतिसन्दष्टश्रुतौ 'निर्गुणः' इत्यनेन [1] अप्रशस्तगुणानामेवनिषेधः [2] अन्ते 'निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्। (१९) इत्यत्रापि 'निरवद्य'मित्यनेन ब्रह्मण्य [3] विद्यासम्बन्धनिषेधेन आविद्यकहेयगुणसम्बन्धनिषेधस्यैवसिद्धेः अतो निर्गुणः, इति न गुणसामान्यनिषेधकं किन्तु हेयगुणनिषेधकमेवेति ज्ञानादिषट्कवान्भगवच्छब्दार्थः इति पराशरस्याशयः 'प्रकृतैतावत्त्वं हिप्रतिषेधति ततो ब्रवीति च भूयः, इति सूत्रकृन्न्यासोऽ-

---

बलक्रियाणां परमात्मसम्बन्धप्रतीतावपि उक्तमायानुसारित्वं स्वाभाविकत्वं इत्युक्तिः स्वाभाविकी इत्यस्य औपाधिकीतिविवरणरीति मनुसरति। निर्गुणवाक्यानुरोधेन स्वाभाविकी इत्यस्य भूतपरिणामोपाधिशून्येति सङ्कुचितार्थकत्वमङ्गीकरणीयमिति (अ—सि) उक्तिस्तु 'न तत्समश्चाभ्यधिकश्च दृश्यत' इति श्रुत्या निर्विशेषस्याप्रामाणिकत्वसिद्ध्या निर्गुणश्रुतेस्संकोचकत्वासंभवे नानादरणीया॥

[1] अप्रशस्तगुणानामेवेति। निर्गुणश्रुत्यभावे 'गुणी' इत्यत्र संसर्गविवक्षायामिनिप्रत्ययसम्भवेन अघटितघटनासामर्थ्येन अप्रशस्तानामपि गुणानां संसर्गः प्रतिपाद्यतया विवक्षितस्स्यादिति तद्व्युदासाय निर्गुणश्रुतिरितिभावः॥

[2] अन्त इति। 'विनाहेयैर्गुणादिभि' रित्यत्रहेयपदं 'निरवद्यं निरञ्जनं' इति श्रुतिघटक अवद्यपदमभिप्रेत्य प्रयुक्तम्। आदिशब्दार्थः अवद्यकार्यम्। तन्निषेधश्च 'निरञ्जन' मितिश्रुतिसिद्धः। निरवद्यश्रुत्याहेयगुणनिषेधसिद्धावपि सातिशयसंख्यावद्गुणनिषेधार्थं निर्गुणश्रुतिः॥

[3] अविद्यासम्बन्धनिषेधेनेति। निर्गुणश्रुत्यागुणानां द्रव्यपरिणामतापक्षे ब्रह्मणः स्वरूपपरिणामानिषेधलाभेऽपि अविद्यासम्बन्धनिषेधः न ततो लभ्यत इति भावः॥

प्येवमेवाभिप्रैति (३-२-२१) इममे[1]वनयं (वे. अ. सं.) प्रदर्शयन्तः भगवच्छ्रीभाष्यकाराः (आ. सि.) भगवद्यामुनमुनिसूक्तिक्रमेण स्वाभाविकानवधिकातिशयासङ्ख्येयकल्याणगुणगणः, इति बहुत्रव्यवहरन्त-इत्थं श्रुतिस्मृत्योस्सौहार्दमाविश्चक्रुरित्यवसेयम् ॥

ज्ञानदिगुणषट्कवांश्चवासुदेवएवनान्यः विष्णुपुराणे—'सर्वत्रासौ-वासुदेवेतिविद्वद्भिः परिपठ्यते' (१-२-१४) इति वासुदेवस्य परत्वमुपक्रम्य 'अद्यापि न निवर्तन्ते द्वादशाक्षरचिन्तकाः' (६-३९) इत्यत्र द्वादशाक्षरचिन्तकानामपुनरावृत्तिमभिधाय 'ओंनमोवासुदेवायतस्मै भगवते सदा, (१९-७८) 'ओं नमो विष्णवे तस्मै, (८४) इत्यत्र द्वादशाक्षरमन्त्रं पदव्यत्यासेन विष्णुषडक्षरमन्त्रं यथावच्च प्रदर्श्य तेन त्रिष्णोर्नादार्थवासुदेवरूपतां प्रकाश्य षष्ठेंशे 'ज्ञानशक्ति' इत्यादिना 'विनाहेयैर्गुणादि'रित्यनेन (६-५-७९) भगवच्छब्दार्थमभिधाय—

सर्वाणि तत्र भूतानि वसन्ति परमात्मनि ।
भूतेषु च स सर्वात्मा वासुदेवस्ततः स्मृतः ॥ (६-५-८)

[2]इत्युपसंहारात्—

भगवानिति शब्दोऽयं तथा पुरुष इत्यपि ।
निरुपाधी च वर्तेते वासुदेवे सनातने ॥

---

[1] इममेवनयमिति । अन्ते 'निरवद्यं निरञ्जन' मित्यनन्तरमपि 'अमृतस्य परं सेतुं' इत्यादिनामुक्तिहेतुत्वादीनां प्रतिपादनात् । पूर्वं 'केवलो निर्गुणश्च' इत्यनन्तरमपि 'एकोवशी' 'प्रधानक्षेत्रज्ञपतिर्गुणेशः संसार मोक्षस्थितिबम्घहेतु'रित्यादिना अनन्तगुणविशेषाणां प्रतिपादनाच्चेति भावः ।

[2] इत्युपसंहारादिति । एतेन 'सर्वव्यापी भगवान्' इति श्रुतौ सर्वव्यापि पदे वासुदेवशब्दयोगार्थो विवाक्षित इति बोधितम् ॥

इति पुराणान्तराच्च । एतेन 'एको देवः --निर्गुणश्च' (श्वे.६) इति [1]श्रुतौ देवः वासुदेव इति सिद्धम् ॥

'इतिहासपुराणाभ्यां' (आ. प. १-२९३) इतीतिहासश्रेष्ठस्य महाभारतस्य वेदोपबृंहणत्वमभिधाय 'कार्ष्णं वेदमिमं विद्वान्श्रावयित्वार्थमश्नुते (१९४), इत्युपक्रमे 'वेदानध्यापयामास महाभारतपञ्चमान्' इति बहुत्र मध्ये 'कार्ष्णं वेदम्' इति पूर्ववत् (स्व. आ. प.) उपसंहारे च वेदत्वेन व्यवहृते पञ्चमवेदे—

लोकानां च हितार्थाय कारुण्यान्मुनिसत्तमः ।
अत्रोपनिषदं पुण्यां कृष्णद्वैपायनोऽब्रवीत् ॥ (आ. प. २७९)

इति पञ्चमवेदोपनिषत्त्वेन व्यवहृतायां भगवद्गीतायां च श्रुतिप्रसिद्धस्यैव माहात्म्यमभिधीयते नान्यस्येत्यभिप्रेत्य तस्येत्युक्तम् । तस्य-श्रुतिप्रसिद्धस्य । परमात्मन इति ॥

यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह ।
यच्चास्य सन्ततो भावस्तस्मादात्मेति कथ्यते ॥

इति स्मार्तनिर्वचनसिद्धात्मशब्दार्थस्य जीवसाधारण्येन तद्व्युदासाय परमत्वविशेषणम् । तच्च निरूपाधिकत्वम् । इत्थञ्च 'सातिभ्यां मनिन्मनिणौ' इत्युणादिसूत्रानुसारिणः 'यच्चास्य सन्ततो भाव' इति निर्वचनसिद्धस्य 'अथ योवेदेदं जिघ्राणीति स आत्मा' (छां) इत्युपनिषदभिप्रेतस्य धर्मभूतज्ञानघटितव्यापकत्वार्थस्य अन्यस्यौपाधिकस्य

---

इति [1]श्रुताविति । 'एवं स देवो भगवान्वरेण्यः' इति श्रुत्यनुसारादिति भावः ।

सर्वव्यापी स भगवान्तस्मात्सर्वगतश्शिवः ।

(परेच्छाप्रयुक्तस्य) अर्थस्य जीवसाधारण्येऽपि निरुपाधिकस्य कस्यापि ब्रह्मादिजीवेषु नैव सम्भवः। अत एव भागवद्गीतायां—

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः॥

इत्यादि—विष्णुपुराणे—

परमात्मा च सर्वेषामाधारः परमेश्वरः।
विष्णुनामा स वेदेषु वेदान्तेषु च गीयते॥

इति च संगच्छते॥

माहात्म्यं—महात्मनो भावः माहात्म्यं 'अज आत्मा महान् ध्रुवः (बृ. ६-४-२०), 'स वा एष महानज आत्मा—सर्वस्य वशी सर्वस्येशानस्सर्वस्याधिपतिस्सनसाधुना कर्मणा भूयान्नो एवा साधुना कनीयान्। एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसंभेदाय' (२२) 'स वा एष महानज आत्माऽन्नादो-वसुदानः' (२४) 'स वा एष महानज आत्माऽजरोऽमरोऽमृतोऽभयं ब्रह्म' (२५) इत्यादि श्रुतौ 'कतम आत्मायोऽयं विज्ञानमयः' (३-१०) इति पूर्वोक्तजीवात्मव्यावर्तकाः महात्मधर्माः प्रतिपादिताः। एवं 'अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति' (क. २-१२) 'महान्तं विभुमात्मानं मत्वा धीरो न शोचति' (२२)

---

इत्यत्र शिवशब्दः—

अप्रमेयमनाद्यन्तं ज्ञात्वा च परमं शिवम्।

सर्वानुग्राहकत्वेन तदस्म्यहं वासुदेवः। इति ब्रह्मबिन्दूपनिषदि उपक्रमोपसंहारपर्यालोचनया शुभत्वप्रवृत्तिनिमित्तेन वासुदेवपरः इदंच 'सर्वगुह्यमयश्शिवः वासुदेव, इति वचनविवरणावसरे (१७. पु.)प्रतिपादितम्॥

इत्यत्र 'महान्तं विभुमात्मानं मत्वा धीरो न शोचति' (क. ४-४) 'य इमं मध्वदं वेद आत्मानं जीवमन्तिकात् । ईशानं भूतभव्यस्य न ततो विजुगुप्सते' (५) इत्यत्र च जीवात्मनस्स्वव्यावर्तकधर्मवत्त्वेन महात्मनो ज्ञानस्य फलमप्युक्तम् । उक्तश्रुतीरनुसन्धाय प्रवृत्तं 'पश्य देवस्य माहात्म्यं महिमानं च नारद' 'महान्महात्मा' इत्यादिकमितः [1]प्राग्वचनजालमभिप्रेत्य माहात्म्यमित्युक्तम् एतेन शोकात्यन्तनिवर्तकधर्मादिना परस्य जीवाद्भेदस्सिद्धः ॥

श्रुतमिति । तत्र तत्र श्रुतमित्यर्थः । तत्तत्प्रकरणस्थकतिपयवचनोदाहरणेन भगवन्माहात्म्यं पूर्वं निरूपितम् ॥

एवं आदिपर्वोपक्रमवचनेष्वपि नारायणस्य परत्वं स्थापितम् । यथा तत्र—

आद्यं पुरुषमीशानं पुरुहूतं पुरुष्टुतम् ।
ऋतमेकाक्षरं ब्रह्म व्यक्ताव्यक्तं सनातनम् ॥ २८ ॥
असच्च सच्चैव च यद्विश्वं सदसतः परम् ।
परावराणां स्रष्टारं पुराणं परमव्ययम् ॥ २९ ॥
मङ्गल्यं मङ्गलं विष्णुं वरेण्यमनघं शुचिम् ।
नमस्कृत्य हृषीकेशं चराचरगुरुं हरिम् ॥ ३० ॥ इति ॥
नास्ति नारायणसमं न भूतं न भविष्यति ॥ इति—
भगवान्वासुदेवश्च कीर्त्यतेऽत्र सनातनः ।

---

[1]प्राग्वचनजालमिति । अत्र श्रुतौ महात्मनः अकर्मवश्यत्वं (सर्वनियन्तृत्वं) सर्वेश्वरत्वं (सर्वस्वामित्वं) सर्वभूताधिपतित्वं सर्वधारकत्वंसेतुत्वं च प्रतिपादितं तने जीवमहतोः भेदस्स्थापितः उदाहृतवचनेषु नारायणस्यैव महात्मत्वनिर्धारणपूर्वकं तस्यैवाकर्मवश्यत्वस्थापनेन विष्णोः कर्मवश्यत्वोत्प्रेक्षणं शाक्तानां व्यासेन व्युदस्तं भवति । श्रुतौ 'सर्वस्य वशी' 'सर्वेश्वर, इत्यत्र 'निरुपाधिकमैश्वर्यं वासुदेवे प्रतिष्ठित' मित्युक्तदिशा वासुदेव एवविवक्षित इति भावः ॥

स हि सत्यमृतं चैव पवित्रं पुण्यमेव च ॥
शाश्वतं ब्रह्मपरमं ध्रुवं ज्योतिस्सनातनम् । इति चोक्तम् ।

अत्र--'ऋतमेकाक्षरं ब्रह्म व्यक्ताव्यक्तं सनातनम्, इत्यनेन 'चतुष्पादिदमक्षरं परं ब्रह्म' इत्यथर्वशिखार्थ उक्तः ॥

आनुशासनिके रुद्रं प्रति सनत्कुमारोक्तौ—
ओमित्येकाक्षरं ब्रह्म यत्तत्सदसतः परम् ।
[1]अनादिमध्यपर्यन्तं कूटस्थमचलं ध्रुवम् ॥
योगेश्वरं पद्मनाभं विष्णुं जिष्णुं जगत्पतिम् ।
अप्रमेयमविज्ञेयं हरिं नारायणं प्रभुम् ॥
कृताञ्जलिश्शुचिर्भूत्वा प्रणम्य प्रयतोऽर्चयेत् ॥ (१६६-३१)

इत्यत्र नारायणस्य प्रणवप्रतिपाद्यत्वं स्फुटम् ॥

एवं हरिवंशे कैलासयात्रायां कृष्णस्य रुद्रसमागमानन्तरं ऋषीन् प्रति रुद्रोक्तौ (१३२)--
एतदेव परं वस्तु नैतस्मात्परमस्ति नः ।
एष नो मोक्षदाता च . . . . . ॥

इत्यादौ--
[2]हरिरेकस्सदा ध्येयो भवद्भिस्सत्त्वसंस्थितैः ।

---

[1] अनादीत्यादि । एभिर्विशेषणैः प्रळयासंस्पर्शित्वं नादार्थस्य बोधितम् । हरिशब्देनापि सर्वसंहर्तृवाचिना स एवार्थो दृढीकृतो भवति । विष्णुं, हरिमिति सामानाधिकरण्येन उकारार्थविष्ण्वभेदः नादार्थस्योक्तः ॥

[2] हरिरेक इति । अयं 'ओमित्येवम्' इति च (शं) सहस्रनामभाष्ये उदाहारि । रसगङ्गाधरे उल्लेखप्रकरणे 'महाविष्णुरिति वैष्णवाः शिव इति शैवाः, इत्युपक्रम्य 'ब्रह्मेत्यौपनिषदावदन्ति सोऽयमादिपुरुषोहरि' रित्यत्र एतद्वचनमभिप्रेतमिति प्रतीयते । सर्वसंहर्ता वासुदेव एव नादार्थः हरिशब्दार्थोऽत्र विवक्षितः ।

[1] नान्यो जगति देवोऽस्ति विष्णोर्नारायणात्परः ॥
ओमित्येवं सदा विप्रा पठत ध्यातकेशवम् ।
ततो नश्श्रेयसः प्राप्तिर्भविष्यति न संशयः ॥
एवं ध्यातो हरिस्साक्षात्प्रसन्नो नो भविष्यति ।
भवनाशमयं देवः करिष्यति दृढं हरिः ॥ १३२ ॥

---

वाराहे—

नारायणः परोदेवस्सर्वरूपो जनार्दनः ।
त्रिधात्मानं स भगवान्ससर्जपरमेश्वरः ॥
यस्सत्त्वं स हरिर्देवः यो हरिस्तत्परं पदम् ।

इत्युपक्रम्य ब्रह्मरुद्रयोः रजस्तमोधिष्ठातृत्वमुक्त्वा ।

सत्त्वं रजस्तमश्चेति त्रितयंचैतदुच्यते ।
सत्त्वेन मुच्यते जन्तुस्सत्त्वं नारायणात्मकम् ॥

इत्यादिषु अगस्त्यं प्रति रुद्रवचनेषु सत्त्वाधिष्ठातुरेव प्रळयकाले सत्त्वं । तदनुग्रहेणैव सत्त्वाभिवृध्या चेतनानां मुक्तिः । तस्यैव मुक्तप्राप्यत्वं । पाशुपताद्युक्तकर्मणां रौद्रत्वं मुक्तीतरफलहेतुत्वं चाभिधाय नारायणस्यैव द्वापरे पञ्चरात्रेणोपास्यत्वं । कलौ तामसैः रुद्रकृतमार्गेण द्वेषबुध्या जनार्दनस्य इज्यत्वं चाभिहितम् ।

एतत्प्रघट्टक पर्यालोचनायामपि सत्त्वाधिष्ठातुरेव नादार्थत्वं प्रतीयते । सङ्कर्षणादीनामपि प्रलयस्याहिर्बुध्न्यसंहितायां 'नासदासी' दिति श्रुत्यर्थकथनावसरे प्रतिपादनेन परवासुदेवस्यैव नादार्थस्योपास्यत्वं प्राप्यत्वं चेति सिद्धम् ॥

[1] नान्य इति । अत्र परशब्दान्यशब्दयोः प्रयोगात् नारायणादुत्कृष्टस्यैव तदन्यदेवस्य निषेधः नत्वपकृष्टस्य तदन्यदेवस्येति स्फुटम् । एवं 'एतदेव परं वस्तु नैतस्मात्परमस्तिनः' इत्युपक्रमवाक्येऽपि बोध्यम् ॥

[1]ध्यात्वा मां सर्वयत्नेन ततो जानीत केशवम् ।
उपास्योऽयं सदा विप्रा उपायोऽस्मिहरेस्स्मृतौ ॥

इत्यन्तेऽपि बोध्यम्—एतत्पूर्वाध्याये—

इत्युक्त्वा पुनराहेदं याथात्म्यं दर्शयन्निव[3] ।
मुनीनां श्रोतुकामानां याथात्म्यं तत्र सत्तमः ।

---

[1]ध्यात्वामामिति । अत्र शिवेन स्वज्ञानस्य केशवज्ञानहेतुत्वस्य स्वस्मृतेः हरिस्मृतिहेतुत्वस्य च प्रतिपादनेन शतरुद्रीयादि ज्ञानस्य केशवज्ञानसंपादकत्वमात्र एव उपयोगः । न तु मुक्तौ साक्षादिति बोधनेन 'एषनो मोक्षदाता च' 'भवनाशमयं देवः करिष्यति' इत्यत्रोक्तं स्वस्यापि मुक्तिहेतुत्वं नारायणस्यैवेत्ययमर्थः दृढीकृतः । एतेनपूर्वाध्याये—

आदिस्त्वं सर्वभूतानां मध्यमन्तस्तथा भवान् ।
त्वत्तस्समभवद्विश्वं त्वयि सर्वं प्रलीयते ॥
अहं त्वं सर्वगो देव त्वमेवाहं जनार्दन ।
आवयोरन्तरं नास्ति शब्दैरर्थैर्जगत्पते ॥
नामानि तव गोविन्द यानि लोके महान्ति च ।
तान्येव मम नामानि नात्रकार्याविचारणा ॥
त्वदुपासा जगन्नाथ सैवास्तु मम गोपते ।
यश्च त्वां द्वेष्टि देवेश समां द्वेष्टि न संशयः ॥
त्वाद्विस्तारे यतो देवा अहं भूतपतिस्ततः ।
न तदस्ति विना देव यत्ते विरहितं हरे ॥
यदासीद्वर्ततेयच्च यच्चभावि जगत्पते ।
सर्वं त्वमेव देवेश विना किंचित्त्वया न हि ॥

इति वचनान्यपि निर्व्यूढानि । अत्र पूर्वं 'क इति ब्रह्मणो नाम'त्यत्र ब्रह्मरुद्रयोः भगवतो जन्मप्रतिपाद्य 'आदिस्त्व'मित्यत्र सर्ववस्तूनामपि तत एव

अञ्जलिं सम्पुटं कृत्वा विष्णुमुद्दिश्य शङ्करः ।
उमया सार्धमीशानो [1]याथात्म्यं वक्तुमैहत ॥

इत्यनन्तरं कृष्णंप्रति रुद्रोक्तौ—

क इति ब्रह्मणो नाम ईशोऽहं सर्वदेहिनाम् ।
आवांतवाङ्गे संभूतौ तस्मात्केशवनामवान् ॥
हरसि प्राणिनोदेव ततोहरिरिति स्मृतः ।

---

जन्मादिकमुक्त्वा अहं त्वमित्याद्यभेदनिर्देशेन अन्ते 'सर्वं त्वमेव देवेशे' त्युक्त्या च सर्वाभेदव्यपदेशतुल्य एव ब्रह्मरुद्राभेदव्यपदेश इति स्फुटम् । तत्र च उत्पत्तिलयकारणत्वकथनेन उपादानोपादेयभावनिबन्धन एवैक्योपदेश इति प्रतीयते । एवं 'अहं त्वं सर्वग' इत्यत्र सर्वव्याप्तेः प्रतिपादनेन 'विना किंचित्त्वया न हि' इति तस्यैवार्थस्य व्यतिरेकमुखेन दृढीकरणेन च अपृथक्सिद्धिनिबन्धन ऐक्य (अविभाग) व्यपदेश इति प्रतीयते । आवयोरन्तरं नास्ति शब्दैरर्थैर्जगत्पते, इति तु अपृथक्सिद्धप्रकारवाचिनां शब्दानां विशिष्टबोधकत्वतात्पर्यकं । 'नामानि तव गोविन्दे'ति तु पूर्वार्धे 'महान्ति' इत्यस्य सत्त्वेन उत्तरार्धे तदसत्त्वेन च रुद्रवाचकाश्शब्दाः नारायणे असंकुचितयोगार्थाः रुद्रेतु संकुचितयोगार्था इति तात्पर्यकमपीति बोध्यम् ॥

[1]याथात्म्यमिति । अत्र 'याथात्म्यं श्रोतुकामानां याथात्म्यं वक्तुमैहत, इति वाक्यद्वयपर्यालोचनायां देवेन वक्ष्यमाणोऽर्थस्सर्वोऽपि परमार्थभूत इति प्रतीयते । तेन 'याथात्म्यं दर्शयन्निवे'त्यत्र इव शब्दः दर्शनस्यैव संभावनाविषयत्वं बोधयति । न तु याथात्म्यस्य । वाक्येन बोधनं विशदबोधनरूपमपि न मुख्यं दर्शनमिति तात्पर्येण इवशब्दः । अत एव 'छिन्नो नस्संशयस्सर्व, इत्याद्युपसंहारे ऋषीणां संशयपरिहारार्थमत्रागमनं, रुद्रवाक्यश्रवणसमनन्तरं केशवहरिशब्दवाच्यस्य नारायणस्य परमात्मत्वनिष्कर्षणं संशयपरिहरणं च प्रतिपादितं संगच्छते ॥

इति केशवहरिशब्दयोरर्थउक्तः। अत्र रुद्रेण नारायणस्य ब्रह्मरुद्रजनकतायाः प्राणिसामान्यसंहर्तृत्वस्य नारायणात्परतत्त्वस्य निषेधस्य स्वोपासनस्य केशवज्ञानध्यानोपायतायाः केशवस्यैव मुक्तिदातृत्वस्य च प्रतिपादनेन ॥

छिन्नोनस्संशयस्सर्वो गृहीतोऽर्थस्सतादृशः।
एतदर्थं समायाता वयमद्यतवालयम् ॥
यथाह भगवान् रुद्रो यतामस्सततं हरौ।
इति ते मुनयः प्रीताः प्रणेमुः केशवं हरिम् ॥ १३३ ॥
तमेव परमात्मानं मत्वा नारायणं हरिम्।
विस्मयं परमं गत्वा मेनिरे सुकृतार्थताम् ॥

इति ऋषीणामुक्तावपि (१३२)--केशवहरिशब्दवाच्यस्यैव परत्वकथनेन च प्रणवघटकार्धमात्रार्थोऽपि नारायण एवेति निर्णीतं भवति। यथोक्तं बृहन्नारदीये—

नारायणं परानन्दं स्मरेत्प्रणवसंस्थितम्।
नादरूपमनौपम्य मर्धमात्रापरिस्थितम् ॥३१-१५८॥

इति—आदिपर्ववचनेषु व्यक्ताव्यक्तमित्यत्र वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धात्मकत्वेन चातुरात्म्यं विवक्षितम्। तदुक्तं विष्णुपुराणे 'ओंकारो भगवान्विष्णुः' (२-८-५५) इति--

ध्रुवमेकाक्षरंब्रह्म ओमित्येव व्यवस्थितम् ॥ ३-३-५१ ॥

इत्यादि

यद्रूपं वासुदेवस्य परमात्मस्वरूपिणः।
एतद्ब्रह्मत्रिधाभेदम् . . . . . . . . ॥

इत्यन्तम्। आह च योगयाज्ञवल्क्यः--

त्रिरात्मा त्रिस्वभावश्च तथात्रिव्यूह एव च।

पञ्चरात्रे तथाह्येष भगवद्वाचकस्स्मृतः ॥
बलं वीर्यं तथातेज स्त्रिरात्मेति च संज्ञितः ।
ज्ञानैश्वर्ये तथाशक्ति स्त्रिस्वभाव इति स्मृतः ॥
सङ्कर्षणोऽथ प्रद्युम्नो ह्यनिरुद्ध स्तथैव च ।
त्रिव्यूह इति निष्कृष्ट ओङ्कारो विष्णुरव्ययः ॥
भगवद्वाचकः प्रोक्तः प्रकृतेर्वाचकस्तथा ।
व्यक्ताव्यक्तो वासुदेवः प्रभवः प्रलयस्तथा ॥ (ता. चं.) इति ।

श्रीभागवते च—(१२-स्कं.)

वासुदेवस्सङ्कर्षणः प्रद्युम्नः पुरुषस्स्वयम् ।
अनिरुद्ध इति ब्रह्मन्मूर्तिव्यूहोऽभिधीयते ॥
स विश्वस्तैजसः प्राज्ञस्तुरीय इति वृत्तिभिः ।
अर्थेन्द्रियाशयज्ञानैर्भगवान् परिभाष्यते ॥

इति प्रणवघटकाकारोकारमकारनादार्था उक्ताः ।

उक्तं चाहिर्बुध्न्येन—

सङ्कर्षणादिभूम्यन्तमञ्जनं विगतं यतः ।
तदव्यक्तमिति ज्ञेयम् . . . . . . ॥ ४-२७ ।
भगवान्वासुदेवश्च व्यूहाश्चैव त्रयो मुने ।
चातुरात्म्यमिदं विद्धि व्यक्ताव्यक्तस्वलक्षणम् ॥ इति (५-२) ।

अतश्च—

ऋतमेकाक्षरं ब्रह्म व्यक्ताव्यक्तं सनातनम् । (आ. प.)

इत्यस्य यथोक्त एवार्थः । एवम्—'आद्यं पुरुषमीशानम्' 'परावराणां स्रष्टारम्' 'मङ्गल्यं मङ्गलं विष्णुमि'त्यादिना—"प्रथमा रक्तपीता महद्ब्रह्मदैवत्या द्वितीया विद्युमती कृष्णा विष्णुदैवत्या तृतीया शुभा शुक्ला रुद्रदैवत्या याऽवसानेऽस्य चतुर्थ्यर्धमात्रा सा

विद्युमती सर्ववर्णा पुरुषदैवत्या" "प्राणम्मनसि करणैर्नादान्ते परमात्मनि सम्प्रतिष्ठाप्य ध्यायेतेशानं प्रध्यायितव्यं सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रास्ते सर्वे सम्प्रसूयन्ते सर्वाणि चेन्द्रियाणि सहभूतैः कारणन्तु ध्येयस्सर्वैश्वर्यसम्पन्नस्सर्वेश्वरश्शम्भुः" "शिव एको ध्येयश्शङ्करस्सर्वं परित्यज्य" इति अथर्वशिखातात्पर्यनिर्णयः कृतः। श्रुतौ उपक्रमगतविष्णुपुरुषशब्दयोर्मध्यगतेशानविष्णुशब्दयोश्च पुरुषमीशानं विष्णुमितिपदैः श्रौतकारणपदस्य आद्यं परावराणां स्रष्टारमित्यनेन मङ्गल्यं मङ्गलमित्यनेन श्रुतावुपसंहारस्थ[1]शङ्करशिवशब्दयोश्च विवरणात्। शम्भुशब्दश्च [2]कोशे नारायणनामसुपठितः। विष्णुवासुदेवशब्दद्वयप्रयोगेण उकारनादयोरर्थ एक एवेति ख्यापितम्। श्रुतौ विष्णुदैवत्या पुरुषदैवत्येत्युभयत्र [3]विद्युमतीति शब्दप्रयोगेण विष्णुपुरुषशब्दयोरैकार्थ्यं लक्ष्मीविशिष्टस्यैव [4]नादार्थत्वं परत्वं नान्यस्येति च व्यञ्जितम्॥

---

[1] शङ्करशब्दो (ह. वं. १३१ अ) यौगिकः। मङ्गल्यमिति 'तत्र साधु'रिति यत्प्रत्ययान्तम्। तेन शङ्करशब्दविवरणरूपताऽस्य। शिवशब्दश्च मङ्गलार्थकः॥

[2] वेदान्तकौस्तुभादौ कोश उदाहृतः॥

[3] विशेषेण द्योतत इति विद्युत्, विद्युत् अस्या अस्तीति विद्युमती तलोपश्छान्दसः—

'अप्रमेयं हि तत्तेजो यस्य सा जनकात्मजा।
अनन्या राघवेणाहं भास्करेण प्रभा यथा॥' (रामा.)

'चन्द्रां प्रभासां' (श्रीसू.) इत्यादौ श्रियः विद्योतमानत्वं स्पष्टम्॥

[4] 'अर्धमात्रात्मकः कृष्णो यस्मिन्विश्वं प्रतिष्ठितम्।
कृष्णाऽत्मिका जगत्कर्त्री मूलप्रकृतिरुक्मिणी॥

अथर्वशिखायामीशानशब्दो[1] यौगिक इति 'कारणन्तु ध्येयस्स-वैश्वर्यसंपन्नस्सर्वेश्वर' इति तत्रैवाभ्यासतात्पर्यलिङ्गाद्व्यक्तम् । 'सर्वमिदं ब्रह्म विष्णुरुद्रेन्द्रास्ते सर्वे सम्प्रसूयन्ते' इति श्रुतिः 'असच्च सच्चैव च यद्विश्वम्' 'परावराणां स्रष्टारं' इत्यादिवाक्यैरुपबृंहिता । एवम्—

मङ्गल्यं मङ्गलार्हं च मङ्गलं मङ्गलप्रदम् ॥ २३ ॥
प्रकृतेः परमीशानं निर्गुणं नित्यविग्रहम् ।
आद्यं पुरुषमव्यक्तं पुरुहूतं पुरुष्टुतम् ॥ २५ ॥
सत्यं स्वतन्त्रमेकं च परमात्मस्वरूपकम् ।
ध्यायन्ते वैष्णवाश्शान्ताश्शान्तं तत्परमायणम् ॥ २६ ॥
आविर्बभूवुस्सर्गादौ पुंसो दक्षिणपार्श्वतः ।
भवकारणरूपाश्च मूर्तिमन्तस्त्रयो गुणाः ॥ ३, ४ ॥
आविर्बभूव तत्पश्चात्स्वयं नारायणः प्रभुः ।
शुद्धस्फटिकसङ्काशः पञ्चवक्त्रो दिगम्बरः ॥ ३, १८ ॥
आविर्बभूव तत्पश्चात्कृष्णस्य नाभिपङ्कजात् ।
महातपस्वी . . . . . . . . . . . . . . . ॥

इति ब्रह्मवैवर्तब्रह्मखण्डोपक्रमवचनान्युपबृंहणान्यनुसन्धेयानि । एवं

---

अर्धमात्रात्मको रामो ब्रह्मानन्दैकविग्रहः ।
श्रीरामसान्निध्यवशाज्जगदानन्ददायिनी ॥
उत्पत्तिस्थितिसंहारकारिणी सर्वदेहिनाम् ।
सा सीता भवति ज्ञेया मूलप्रकृतिसंज्ञिता ॥
प्रणवत्वात्प्रकृतिरिति वदन्ति ब्रह्मवादिनः । इति ॥

परव्याख्यातृभिरादृतयोः गोपालरामतापनीयोपनिषदोश्श्रीविशिष्टस्य नादार्थत्वं व्यक्तम् ॥

[1] 'सर्वस्येशानः' 'विश्वस्येशानम्' इत्यादौ ईशानेश्वरादिशब्दानां 'प्रोक्षणीष्वर्थसंयोगात्' इति न्यायेन यौगिकत्वमेवेति साधितं पाराशर्यविजयादौ ॥

विष्णुपुराणबृहन्नारदीयविष्णुधर्मोत्तरमात्स्यकूर्मोत्तररामायणलैङ्गहरि-वंशवाराहादिवचनान्युपबृंहणानि यथार्हमुदाहरिष्यामः । 'मङ्गल्यं मङ्गलं विष्णुम्' 'भगवान्वासुदेवश्चे'ति वाक्यद्वयेन 'शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते' इत्यादिश्रुतयो व्याख्याताः । (१३ पु.) 'सृष्ट्वा सङ्कर्षण'मित्याद्युदाहृतभीष्मपर्ववचनान्यप्येतत्तात्पर्यकानि । आदिपर्वणि 'आद्यं, पुरुषं, विष्णुं, नास्ति नारायणसमं, भगवान्वासुदेवः' इति वाक्यैः 'तत्पुरुषाय विद्महे' इत्यारभ्य 'नारायणाय विद्महे । वासुदेवाय धीमहि । तन्नो विष्णुः प्रचोदयात्' इत्यन्तश्रुतिसन्दर्भे उपक्रमस्थपुरुषशब्दस्य उपसंहारगतानां नारायणादिशब्दानाञ्चैकार्थ्यं बोधितम् । 'नास्ति नारायणसमम्' इत्यत्र 'एको ह वै नारायण असीन्न ब्रह्मा नेशानः' [1]'नतत्समश्चाभ्यधिकश्च दृश्यते' इत्यादिश्रुतयो विवक्षिताः । पुरुषनारायणपदप्रयोगेण 'अथ पुरुषो ह वै नारायणोऽकामयत' इत्याद्युपनिषदर्थोऽप्युक्तः ॥

अरण्यपर्वणि — १९२ अ. 'आपो नारा' इत्यादिवचनैः मार्कण्डेयं प्रति भगवता एतदुपनिषदर्थो विस्पष्ट मुपदिष्टः । इति बोध्यम् ।

'जन्मधर्मगृहे' इति । आदिपर्वणि—

स्तनन्तु दक्षिणं भित्वा ब्रह्मणो नरविग्रहः ।
निस्सृतो भगवान् धर्मस्सर्वभूतसुखावहः ॥

इत्यत्र धर्मस्यावतार उक्तः । अयमेव विष्वक्सेनसंहितादिषु नासतो निर्दिष्टेषु 'षट्त्रिंशांश्च चतुरः कल्पयन्तः' इति धर्मसूक्तोक्तषट्त्रिंशद्विभवावतारेषु अन्यतम इति [2]प्रतिभाति । 'नरनारायणात्मकम्' इति । सभापर्वणि भीष्मेण —

---

[1] एतेन श्वेताश्वतरषष्ठाध्यायस्य नारायणपरत्वं दर्शितम् ॥

[2] एतच्च धर्मसूक्तविवरणे निरूपितम् ॥

तमिमं सर्वसम्पन्नमाचार्यं [1] पितरं गुरुं ।
अर्च्यमर्चितुमिच्छामस्सर्वे सम्मन्तुमर्हथ ॥ ४१-२१ ॥
कृष्ण एव हि लोकानामुत्पत्तिरपि चाप्ययः ।
कृष्णस्य हि [2] कृते विश्वमिदं भूतं चराचरम् ॥ २३ ॥

इति कृष्णमाहात्म्यमुपक्रम्य प्रादुर्भावकथनोपक्रमे—

अव्यक्तो व्यक्तलिङ्गस्थो य एष भगवान्प्रभुः ।
नरनारायणौ भूत्वा हरिरासीद्युधिष्ठिर ॥ ४४ अ. ॥

इत्यत्र नरनारायणावतार उक्तः । स च कृतयुग इति नारायणाख्याने स्फुटम् ॥

अरण्यपर्वणि च कैरातयुद्धानन्तरं भाविजयद्रथवधार्थं पाशुपतास्त्रं प्रार्थितवतेऽर्जुनाय पाशुपतास्त्रदानावसरे—

नरस्त्वं पूर्वदेहे वै नारायणसहायवान् ।
बदर्यां तप्तवानुग्रं तपो वर्षायुतान्बहून् ॥ ४० ॥

---

[1] ' आचिनोति हि शास्त्रार्थानाचारे स्थापयत्यपि ।
स्वयमाचरते यस्मात्तस्मादाचार्य उच्यते ॥
गुशब्दस्त्वन्धकारस्स्याद्रुशब्दस्तन्निरोधकः ।
अन्धकारनिरोधित्वाद्गुरुरित्यभिधीयते ॥ '

इत्याचार्यगुरुशब्दौ निरुक्तौ ॥

सृष्टिकाले दयया करणकळेबरप्रदानेन या अज्ञाननिवृत्तिः या च ब्रह्मविद्याप्रदानेन अज्ञानसामान्यनिवृत्तिः एतदुभयं ' आचार्यं पितरं गुरुम् ' इत्यनेन दर्शितं भवति । एतच्च (तत्व. सर्वा.) भावप्रकाशे (जीव. २५ श्लो.) विशदीकृतम् ॥

[2] कृष्णस्य शेषभूतमित्यर्थः (गी. भा) ॥

इति रुद्रोक्तौ अनयोरेव द्वापरयुगेऽर्जुनवासुदेवात्मनाऽवतार इति व्यक्तम् । एवं तत्रैव—

ऋतेऽर्जुनं महाबाहुं नरं नाम सुरेश्वरम् ।
बदर्यां तप्ततपसं नारायणसहायकम् ॥ २७३ ॥

इति जयद्रथं प्रति रुद्रोक्तावपि । अनन्तरं जयद्रथं प्रति रुद्रेणैव नारायणस्य परत्वं सम्यगुपदिष्टम् । एतेन अर्जुनस्य गौणप्रादुर्भावता बोधिता ॥

उद्योगपर्वणि च दुर्योधनं प्रति भीष्मेण नरनारायणविरोधे कुरूणां विनाशकथनावसरे, भीष्मपर्वणि—विष्णुधर्मोत्तरे च नरनारायणवृत्तान्तोऽवसेयः ॥

महावराहसृष्टा च पिण्डोत्पत्तिस्सनातनी ।
प्रवृत्तौ च निवृत्तौ च यो यथा परिकल्पितः ॥ २ ॥
तथा स नश्श्रुतो ब्रह्मन् कथ्यमानस्त्वयानघ ।
हव्यकव्यभुजो विष्णुरुदक्पूर्वे महोदधौ ॥ ३ ॥

महावराहसृष्टेत्यादि । उक्तसमुच्चायकात् च शब्दात् श्रुतेति विपरिणम्यानुषञ्जनीयम् । अयं (ना. आ) चतुर्दशार्थः ॥

प्रवृत्तौ चेत्यादि । अत्र सोऽपि श्रुत इति वाक्यपूरणेनार्थो वर्णनीयः । अयं च यज्ञाग्रहराध्यायाऽर्थः ।

तथेत्यादि । तथा त्वया नः कथ्यमानः उदक्पूर्वे महोदधौ हव्यकव्यभुजो विष्णुश्श्रुत इति योजना । व्यवहिताव्यवहितपूर्वाध्याययोरपि विष्णोस्सर्वान्तर्यामित्वोक्त्या 'विष्णोश्शिरः प्राचिच्छिदतुः' इति श्रुतौ तामसमोहनिरासपूर्वकम् 'हव्यकव्यभुजो विष्णुः' इत्यस्यार्थः विशदीकृतः श्रुतितत्त्वं निरूपयिष्यते ॥

अहं हयशिरा भूत्वा समुद्रे पश्चिमोत्तरे ।
पिबामि सुहुतं हव्यं कव्यं च श्रद्धयाऽन्वितम् ॥

इति नारदं प्रति वासुदेवोक्तौ विष्णोः पश्चिमोत्तरोदधिसंबन्धोक्तेः तदुपलक्षणम् 'उदक्पूर्व' इत्यादिकम् ॥

यच्च तत्कथितं पूर्वं त्वया हयशिरो महत् ।
तच्च दृष्टं भगवता ब्रह्मणा परमेष्ठिना ॥ ४ ॥

किं कृष्णवन्मुख्यः हयशिरः प्रादुर्भावः आहोस्वित् अर्जुनवत् गौणः इति सन्दिहानः प्रश्नबीजं सूचयन्नाह—यच्चतत् इति—'यत्तद्धयशिरः' इत्यत्रोक्तैक्यनिर्णयार्थं प्रश्न इति भावः । कथितमिति । 'यत्तद्धयशिरः पार्थ' 'अहं हयशिरा भूत्वा' इत्यत्र यज्ञाग्रहराध्यायान्ते च कथितमित्यर्थः । तत्र श्लोकद्वयोक्तं रूपमेकम् अन्यच्च सन्यासिरूपमिति बोध्यम् ॥

गतेषु त्रिदिवौकस्सु ब्रह्मैकः पर्यवस्थितः ।

इत्यादीनि वचनानि (६६) पूर्वमेवोदाहृतानि । तत्र 'कमण्डलुत्रिदण्डधृगि'त्यनेन हयशिरसः परमहंसत्वमुक्तम् । एवंच पञ्चरात्रे श्रीहयग्रीव' सहस्रनामान्ते—

परमो हंस एवादौ प्रणवं ब्रह्मणेऽदिशत् ।
उपादिशत्ततो वेदान्[2] श्रीमान् हयशिरा हरिः ॥

---

[1] अत्र पूर्वं हयशिरोरूपद्वयस्योक्तया संन्यासिरूपस्य ब्रह्मदृष्टत्वोक्तावपि हयशिरोरूपमात्र एव प्रश्नः । न तु संन्यासिरूपे । उत्तरत्र वक्ष्यमाणरूपस्य तादृशत्वाभावात् । अन्यत्र क्वाऽपि वेदापहारापन्निवारणार्थं संन्यासिहयशिरोरूपस्याप्रतिपादनाच्चेति बोध्यम् ॥

[2] अत्र पूर्वार्धोक्तरूपाऽतिरिक्तमेव हयशिरोरूपं विवक्षितम् । 'अङ्केनोद्धृत्य वाग्देवीमाचार्यकमुपागतः' इति तत्पूर्ववचनानुसारात् ॥

तेनासौ स्तवराजो हि हंसाख्यहयगोचरः ।

इत्यत्र रूपद्वयविवक्षणेऽप्य दोषः ।

शाट्यायनिनामुपनिषदि च परमहंसानां त्रिदण्डधारणं विहितम् । यथा—

त्रिदण्डमुपवीतं च वासः कौपीनवेष्टनम् ।

शिक्यं पवित्रमित्येतद्बिभृयाद्यावदायुषम् ।। इत्यादि ।।

'परमोहंस इति व्यस्तनिर्देशेन श्वेताश्वतरषष्ठाध्याये '[1] एकोहग्ँसो भुवनस्य मध्ये' इत्यारभ्य 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै । तँह देवमात्मबुद्धिप्रसादं मुमुक्षुर्वै शरणमहं प्रपद्ये' 'तपःप्रभावाद्देवप्रसादाच्च ब्रह्मह[2]श्वेताश्वतरोऽथ विद्वान् । अत्याश्रमिभ्यः परमं पवित्रं प्रोवाच सम्यगृषिसंघजुष्टम्' । इत्यन्तश्रुतिसन्दर्भे हंसश्वेताश्वशब्दवाच्यो हयशिरा वेदप्रदाता विवक्षित इत्यपि ज्ञापितम् ।।

तच्च दृष्टमित्यादि । अत्र तच्च यद्दृष्टं किं तदुत्पादितमित्युक्तैकवाक्यत्वाय यत्, इत्यनुषञ्जनीयम् । परमेष्ठिनेत्यनेन ब्रह्मणः उत्कृष्टस्थानस्थितिकथनम् तद्दृष्टस्य हयशिरस उत्कर्षबोधनाय । इदमेव दर्शनम् 'आरण्यकश्च वेदेभ्यः' इति प्रशस्तारण्यकान्तर्गते 'हृदयं यजूँषि पत्न्यश्च' इति दशहोत्रादितात्पर्यसङ्ग्राहकतया दशहोत्रादिहृदयतया प्रसिद्धे—

---

[1] अत्र पूर्वोक्तपञ्चरात्रवचनानुसारेण हयशिरोरूपमेव विवक्षितम् । व्यक्तंभविष्यति चेदमुपरिष्टात् ।।

[2] 'तग्ँहदेवम्' इत्युक्त एव 'देवप्रसादात्' इत्यत्र देवः 'श्वेताश्वतर' इत्यत्र तरतिः प्राप्तिवचनः श्वेताश्वेन संसारं तरतीति वा शब्दश्चायं योगरूढ इति भावः ।।

स्वर्णघर्मानुवाकेन तथा पुरुषविद्यया ।
पौरुषेण च सूक्तेन सामभीराजनादिभिः ॥

इति श्रीभागवते(११-१७ अ.) श्रीवासुदेवाराधनाङ्गतया विनियुक्ते सुवर्णं घर्मम्' (तै. आ. ३-११) इत्याद्यनुवाके 'अन्तस्समुद्रे मनसा चरन्तं ब्रह्मान्वविन्दद्दशहोतारमर्णे' इत्यत्र विवक्षितम्। एवं 'प्रजापतिरकामयत प्रजास्सृजेयेति' 'स एकं दशहोतारमपश्यत्' इति ब्राह्मणेऽपि— 'एकस्सुपर्णस्स, समुद्रमाविवेश स इदं विश्वं भुवनं विचष्टे तं पाकेन मनसा पश्यमन्तितः' इति ऋग्वेदमन्त्रेऽपि चतुर्मुखकृतं हयशिरोदर्शनं विवक्षितमिति घर्मसूक्तविवरणे निरूपितम् ॥

किन्तदुत्पादितं पूर्वं हरिणा लोकधारिणा ।
रूपं प्रभावं महतामपूर्वं धीमतां वर ॥ ५ ॥

किन्तदुत्पादितमिति । किमिति कारणप्रश्नः, फलप्रश्नो वा । कर्म स्वेच्छा वा कारणम् । यद्वा कर्मफलभोगः शिष्यापन्निवारणं वा फलमिति भावः ॥

[1]हरिणा लोकधारिणेति । 'स हरिर्वसुवित्तमः' (तै. आ. ३-११-५) 'शत ँशता अस्य युक्ताहरीणाम्' (७) 'हरि ँ हरन्ति मनुयन्ति देवाः। विश्वस्येशानमृषभं मतीनाम्' (१५-१) 'युक्ताह्यस्य हरयश्शता दश' (बृ. आ. ४-५-१९) इत्यारण्यकप्रसिद्धिख्यापनाय

---

[1] 'हरिणा लोकधारिणा' इत्यनेन (तै. आ.) पुरुषसूक्तपूर्वानुवाकस्य तदुत्तरानुवाकयोश्च ऐकार्थ्यबोधनमुखेन पुरुसूषक्तसमानार्थकत्वमपि सूचितम् । एतच्च 'पश्यन्ति नित्यपुरुषं गुणाधिकम्' इत्युपाख्यानान्तिमवचनेन बोधितमिति निरूपयिष्यते ॥

हरिशब्दप्रयोगः एतेन 'स हरिर्वसुवित्तमः' (तै. आ. ३-११-५) इत्यते-द्धटितस्य 'सुवर्णं घर्मम्' इत्याद्यनुवाकस्य 'युक्ता ह्यस्य हरयः' इत्येत-द्धटितमधुब्राह्मणस्य च हयशिरःपरत्वं व्यञ्जितम्। लोकधारिणेत्यनेन 'भर्ता सन् भ्रियमाणो बिभर्ति एको देवो बहुधा निविष्टः' इति श्रुत्यर्थ उक्तः। रूपं। वपुः। प्रभावम्। प्रकृष्टोभावस्सत्ता स्वभावो जन्म वा यस्य तदिति बहुव्रीहिः। अपूर्वम्। पूर्वमविद्यमानम् अननुभूतं वा। धीमतां वर। इत्यनेन 'इति शुश्रुमधीराणां येनस्तद्व्या-चक्षिरे' (ई. उ. १०) इति श्रुतिप्रसिद्धं उपदेष्टृताप्रयोजकं रूपं त्वयि पूर्णमिति व्यञ्जितम्॥

दृष्ट्वा हि विबुधश्रेष्ठमपूर्वममितौजसम्।
त (म) दश्वशिरसं पुण्यं ब्रह्मा किमकरोन्मुने॥
एतन्नस्संशयं ब्रह्मन् पुराणं ब्रह्मसम्भवम्।
कथयस्वोत्तममते महापुरुषसंश्रितम्॥ ७॥
पाविताःस्म त्वया ब्रह्मन् पुण्याः कथयता(ः) कथाः।

दृष्ट्वा हीत्यादि। [1]अपूर्वम्। न विद्यते पूर्वोजनको यस्य तम्। विबुधश्रेष्ठम्। अपूर्वम्। अमितौजसम्। इति पदैः 'तं दैवतानां परमञ्च दैवतम्' 'न चास्य कश्चिज्जनिता' 'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' (६ अ.) इति श्वेताश्वतरश्रुत्यर्थ उक्तः।

---

[1] अत्रापूर्वमिति पदेन 'तदेतद्ब्रह्माऽपूर्वं, सर्वानुभूः' (बृ. आ. ४-५-१२) इति श्रुतिप्रत्यभिज्ञापनेन 'स वा अयं पुरुषः सर्वासु पूर्षु पुरि शयः' इति तत्पूर्वश्रुत्युक्तस्य सर्वशरीरकस्यैव विबुधश्रेष्ठत्वमिति बोधनमुखेन हयशिरसो मधुब्राह्मण (बृ. आ. ४-५-१२) प्रतिपाद्यत्वेन परत्वं दर्शितम्॥

तदश्वशिरसमिति पाठे सचासावश्वशिराश्चेति कर्मधारयः । [1]पुण्यम् । अभिमतफलविशेषसाधनम् । (गी. १३ ता. चं.) 'पुण्यानामपि पुण्योऽसौ' इति (अ. प. ८६-२६) भारतवचनस्थपुण्यशब्दस्येत्थमेवाचार्यपादैर्विवरणात् ॥

---

[1] न च 'पुण्यः पुण्येन कर्मणे' ति श्रुत्युक्तरीत्यैवात्रार्थो विवक्षितः । एवं च 'विष्णोश्शिरः प्रचिच्छिदतुः' इति शुक्लयजुःप्रवर्ग्यार्थवादवचनमपि सङ्गच्छत इति वाच्यम् । विष्णोः पुरातनश्रेष्ठशिरोविगमसमनन्तरहयशिरःप्राप्तेः पापमूलकत्वौचित्येन पुण्यत्वोत्प्रेक्षणस्यापि पापहेतुकतमोविवृद्धिनिदानत्वात् ॥

पुण्या द्वारवती तत्र यत्रास्ते मधुसूदनः ।
साक्षाद्देवः पुराणोऽसौ स हि धर्मस्सनातनः ॥ (अ. प. ८६-२६)

इत्यत्र 'यत्र नारायणो देवः' (८८-२७) इत्यारभ्य 'तत्पुण्यं तत्परम्ब्रह्म' 'पुण्यानामपि तत्पुण्यम्' इत्यत्र च मधुसूदनसम्बन्धिदेशवासस्य पुण्यरूपत्वेन तद्देशे पुण्यशब्दप्रयोगवत् अश्वशिरस्सेवाया अपि पुण्यरूपत्वेनाश्वशिरसि पुण्यशब्दप्रयोगोपपत्तेश्च । 'न तस्य कार्यं करणं च विद्यते' 'न चेशिता नैव च तस्य लिङ्गम्' 'न चास्य कश्चिज्जनिता' इत्युक्तविभवशालिन एव "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" (श्वे. उ. ६) इति हिरण्यगर्भजनकत्ववेदप्रदत्वकथनेन तदुपबृंहणैतद्वचनगतपुण्यशब्दस्य कर्मबद्धपरत्वशङ्काया एवानवताराच्च । एतेन "स हि सत्यमृतं चैव पवित्रं पुण्यमेव च । शाश्वतं ब्रह्म परमम् (आ. प. १-२८२) इत्यत्रापि पुण्यशब्दो निर्व्यूढः ॥

वस्तुतस्तु पुण्यशब्दस्य सुकृततदवच्छेदकदेशादिसाधारणं शास्त्रीयाभिमतफलविशेषसाधनत्वं प्रवृत्तिनिमित्तम् । धर्मशब्दवत् । तच्चाश्वशिरस्यपि निर्बाधम् । इदञ्चानुगतं प्रवृत्तिनिमित्तं "ते वदन्ति महात्मानं कृष्णं धर्मं

मनातनम् " 'पण्यानामपि पण्योऽसौ' इति 'पुण्या द्वारवती, स हि धर्मस्सनातनः' इति चोपक्रमोपसंहारयोः पण्यधर्मशब्दप्रयोगेण व्यासेनैव व्यञ्जितम् । एतदेवाभिसन्धाय 'पण्यशब्दोऽभिमतफलविशेषसाधनपरः' इति तात्पर्यचन्द्रिकासूक्तिरपि । अत एव स्मृतिमात्रेण कल्मषाणि क्षपयतीति पुण्यः इति (स. ना. भा.) शङ्कराचार्योक्तिरपि सङ्गच्छते । न च 'अन्यत्र धर्मादन्त्राधर्मात्' इति श्रुत्या ब्रह्मणो धर्मभिन्नत्वबोधनेन न धर्मशब्दार्थत्वसम्भवः । अत एव भाट्टरहस्ये खण्डदेवेन धर्मशब्दप्रवृत्तनिमित्तशरीरे ब्रह्मभिन्नत्वं निवेशितम् । साधितश्चायमर्थः अप्पय्यदीक्षितैः (वा. न. मा.) इति वाच्यम् । 'नासदासीन्नोसदासीत्तदानीम्' 'न सन्नचासच्छिव एव केवलः' इत्यादिश्रुतिभिः ब्रह्मणस्सच्छब्दार्थत्वाभावप्रसङ्गात् । असच्छब्दसमभिव्याहृतसच्छब्दस्सद्विशेषपर इति चेत् । अधर्मशब्दसमभिव्याहृतधर्मशब्दोऽपि पुण्यकर्मपर इति गृहाण । अत एव 'धर्मो वा इदमग्र आसीन्न पृथिवी न वायुर्नाकाशो न ब्रह्मा न रुद्रो न ऋषयः सोऽध्यायत्' इति सामवेदशाखोक्तिः (९-३) (गी. भा. आ. ती.) सङ्गच्छते ॥

तैत्तिरीया धर्मशब्दं 'धर्मो विश्वस्य जगतः प्रतिष्ठा' इति निराहुः । तच्च कर्मब्रह्मसाधारणम् । तदुक्तं शङ्कराचार्यैः (स. ना. भा.) सर्वभूतानां धारणात् धर्मः 'अणुरेष धर्मः' इति श्रुतेः इति एवं वेदैकप्रतिपाद्यश्रेयस्साधनताकत्वं मीमांसकसंमतम् ऐतरेयिणः 'एष पन्था एतत्कर्मैतद्ब्रह्मैतत्सत्यम्' इति कर्मब्रह्मसाधारणमामनन्ति । तदेतदभिप्रेत्य मनुः उपक्रमे धर्मान्नो वक्तुमर्हसी'ति प्रश्नस्य 'आसीदिदं तमोभूतं—तेन नारायणस्स्मृतः' इति प्रतिवचनमुपाक्रमत् । सिद्धसाध्यभेदभिन्नयोर्धर्मयोस्साध्यधर्मरूपकर्मणस्सिद्धधर्मात्मकभगवदाराधनत्वव्यतिरेकेण फलहेतुत्वासम्भवेन सिद्धधर्मस्य प्राधान्यात्तस्यैव प्रथममभिधानम् । सप्तश्लोकी (२-१-१) व्यासार्यैः (श्रु. प्र.)

व्याख्याता । आत्मज्ञानस्य धर्मत्वाविवक्षया 'आसीदिदम्' इत्याद्युक्तिरिति कुल्लूकभट्टः । वस्तुतस्तु प्रलये धारकत्वं 'आसीत्' इत्यत्र सृष्टौ व्याप्तया-धारकत्वं नारायणशब्दे विवक्षितम् । अन्ते च स एव—

'नैश्रेयसमिदं कर्म यथोदितमशेषतः ।
मानवस्यास्य शास्त्रस्य रहस्यमुपदिश्यते ॥ १२-१७ ॥
एवं स भगवान्देवो लोकानां हितकाम्यया ।
धर्मस्य परमं गुह्यं ममेदं सर्वमुक्तवान् ॥ ११७ ॥
सर्वमात्मनि सम्पश्येत्सच्चासच्च समाहितः ।
सर्वं ह्यात्मनि सम्पश्यन्नाधर्मे कुरुते मनः ॥ ११८ ॥
आत्मैव देवतास्सर्वास्सर्वमात्मन्यवस्थितम् ।
आत्मा हि जनयत्येषां कर्मयोगं शरीरिणाम् ॥ ११९ ॥
प्रशासितारं सर्वेषामणीयांसमणीयसाम् ।
रुक्माभं स्वप्नधीगम्यं विद्यात्तु पुरुषं परम् ॥ १२२ ॥
एवं यस्सर्वभूतेषु पश्यन्नात्मानमात्मना ।
स सर्वसमतामेत्य ब्रह्माप्येति परं पदम् ॥ १२५ ॥

इति सिद्धधर्मप्राधान्यं प्रकाशयन् सिद्धसाध्यधर्मद्वयमुपसञ्जहार । अत्र आत्मनस्सर्वदेवताधारकत्वं कर्मयोगसम्पादकत्वं कर्मफलप्रदत्वरूपमुक्तम् पुरुषशब्दश्च 'यदि वा बहुदानाद्वै पुरुषः' (पा. पु.) इति निरुक्तः—श्रौतं निर्वचनं पूर्वमेव (३४-९४) प्रदर्शितम् । तेन पुरुषशब्देन मुक्तिहेतुसङ्कल्पोक्त्याऽपि धर्मत्वं बोधितम् ॥

विद्वद्भिस्सेवितस्सद्भिर्नित्यमद्वेषरागिभिः ।
हृदयेनाभ्यनुज्ञातो यो धर्मस्तं निबोधत ॥ २-१ ॥

इत्युपक्रमेधर्मत्वं परमात्मसाधारणमवादीत् । 'वेदोऽखिलो धर्ममूलमित्यादिकञ्च परमात्मनोऽपि धर्मतां द्रढयतीति अतो यथोक्त एवार्थः ॥

ब्रह्मा । चतुर्मुखः । किमकरोत् । तदनुग्रहलब्धवेदः सृष्टिमकरोत् । उतान्यदिति । मुने! स्वलक्षणज्ञानसम्पन्न यथोक्तं सनत्सुजातीये—

मौनान्न स मुनिर्भवति नारण्यवसनान्मुनिः ।
स्वलक्षणन्तु यो वेद स मुनिश्श्रेष्ठ उच्यते ॥ ४३ ॥ ६१ ॥ इति

एतदित्यादि । ब्रह्मन्! । ब्राह्मण । पुराणम् । पुरातनम् । ब्रह्मसम्भवम् । अत्र सम्भवशब्दः करणे घञन्तः ब्रह्मसम्भूतिनिदानम् । महापुरुषसंश्रितम् । वासुदेवसम्बन्धि । संशयम् । संशयविषयीभूतम् । एतत् । हयशिरोरूपम् । पूर्वं 'किन्तदुत्पादितं पूर्वं हरिणा लोकधारिणा । रूप'मिति । पश्चाच्च—

यत्तद्दर्शितवान्ब्रह्मा देवं हयशिरोधरम् ।
किमर्थं तत्समभवद्वपुर्देवोपकल्पितम् ॥

इत्युक्त्या इत्थमेवार्थः । नः कथयस्व । अत्र इतरबहुऋष्यभिप्रायेण न इति बहुवचनप्रयोगः । उत्तममते । जननकालिकहयवदनकटाक्षनिदानसत्त्वाभिवृद्धिमूलहयशिरस्तत्त्वज्ञानवच्छ्रेष्ठ । स्वस्य रहस्यार्थोपदेशायोग्यतां निराचष्टे । पाविितास्स्मेत्यादिना । पुण्याः । रहस्यार्थोपदेशयोग्यताविरोधितमोमूलदुर्वासनानिवृत्तिपूर्वकतत्त्वज्ञानोत्पत्तिसाधनीभूताः । कथाः कथयता त्वया पाविितास्स्म ।

विद्याहीनस्तमो ध्वस्तो नाभिजानासि केशवम् ।
मायान्न सेवे भद्रन्ते न वृथा धर्ममाचरे ।
शुद्धभावङ्गतो भक्त्या शास्त्राद्वेद्मि जनार्दनम् ॥ (उ. प.)

इति धृतराष्ट्रम्प्रति सञ्जयेनोक्ता तत्त्वज्ञानोत्पत्तिप्रयोजकसामग्री त्वयैव मयि पुष्कला निष्पादितेति भावः । अतश्च जननकालिकयदीयकटाक्ष-

परमफलं सत्त्वाभिवृद्धिमूलतत्त्वज्ञानादिपौष्कल्यं तादृशस्य हयशिरसस्तत्त्वमुपदेष्टुमहमर्ह एवेति भावः। कथय ताः इति पाठादयं पाठश्श्रेयान्॥

सौतिरुवाच—

कथयिष्यामि ते सर्वं पुराणं वेदसम्मितम्।
जगौ यद्भगवान्व्यासो[1] राज्ञः पारीक्षितस्य वै॥ ८॥

---

[1] यद्यप्यनन्तरं वैशम्पायन उवाचेत्येव सर्वकोशेषु पाठात् 'जगौ यद्भगवान्व्यास' इत्यनुपपन्नम्। तथाऽपि यज्ञाग्रहाराध्याये जनमेजयप्रश्नं प्रति ब्रुवन्वैशम्पायनः—

अहो गूढतमः प्रश्नस्त्वया पृष्टो जनेश्वर।
नातप्ततपसा ह्येष नावेदविदुषा तथा॥
नापुराणविदा चैव शक्यो व्याहर्तुमञ्जसा।
हन्त ते कथयिष्यामि यन्मे पृष्टः पुरा गुरुः॥
कृष्णद्वैपायनो व्यासो वेदव्यासो महानृषिः।
पराशरसुतश्श्रीमान् व्यासो वाक्यमथाब्रवीत्॥

इत्यादिना स्वबुद्धिमात्रेणोत्तरदानं दुश्शकमित्यभिधाय गुरूक्तमेवोत्तरयन् अन्ते 'गतेषु त्रिदिवौकस्सु' इत्यादिना 'तेनानुशिष्टो ब्रह्माऽपि स्वं लोकमचिराद्गतः' इत्यन्तेन 'इति शुश्रुमधीराणां येनस्तद्व्याचचक्षिरे' (ई. उ १०) इति श्रुत्यर्थं शिक्षयन् व्यासोपदिष्टं हयग्रीवमहिमानमुपादिशत् इति व्यक्तम्। अतोऽत्रापि वैशम्पायनस्य तादृशानुसन्धानतात्पर्येण 'जगौ यद्भगवान्व्यास' इत्युक्तिः। स्वयं कृतमपि सत्कर्म आचार्या एवमकार्षुः इत्यनुसन्धानेन व्यवहरणं भरतोऽप्यशिक्षयत्। चित्रकूटे तदात्वे स्वयं राज्यपरिपालनमनभ्युपगच्छन्तं श्रीरामं पादुके स्वयमेव प्रार्थयतापि भरतेन भरद्वाजं प्रत्युक्त-

कथयिष्यामीत्यादि । ते । तत्त्वार्थोपदेशयोग्याय । सर्वं । हयशिरस्सम्बन्धि सकलम् । पुराणम् । पुरातनम् । वेदसम्मितम् । वेदतुल्यम् । वेदमूलत्वश्चैतद्वृत्तान्तस्य मात्स्यहीरवंशयोस्स्पष्टम् एतच्चोत्तरत्र निरूपयिष्यते । आख्यानमिति शेषः ।

एतद्धयशिरो राजन्नाख्यानं तव कीर्तितम् ।
. . . . . . . . . . . . . पुराणं वेदसम्मितम् ॥

इत्युपसंहारात् । एतदनुसारे तु 'कथयस्वोत्तममते' इति पूर्वत्र आख्यानमेव कर्म विवक्षितम् । 'एतन्नस्संशय' मित्यत्र निरसितुमित्यध्याहार्यम् । जगावित्यादि । भगवान् —

उत्पत्तिं प्रलयं चैव भूतानामागतिङ्गतिम् ।
वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति ॥ ६ ॥ ५ ॥ ७७ ॥

इति विष्णुपुराणोक्तोत्पत्त्यादिविषयकज्ञानवान् । अयश्च भगवच्छब्द औपचारिक इति एतत्पूर्वश्लोकद्वये (७५–७६) व्यक्तम् । भगवान् वासुदेवावतार इति वा । यथाह पराशरः—

कृष्णद्वैपायनं व्यासं विद्धि नारायणम्प्रभुम् ।
को ह्यन्यो भुवि मैत्रेय महाभारतकृद्भवेत् ॥ इति ॥

पारीक्षितस्य । परीक्षितः अपत्यम्पारीक्षितः जनमेजयः 'तस्यापत्यम्' (४-१-९२) इति अण् ।

---

वृत्तान्तकथनावसरे वसिष्ठः राज्यार्थं पादुके अभ्यर्थयत्, इत्युक्तेः । यद्वा विष्णुपुराणभागवतादिषु वैशम्पायनस्य कृष्णद्वैपायनव्यस्तचतुर्वेदघटकयजुर्वेदशाखा व्यासकरणस्य प्रसिद्धतया व्यासपदेन वैशम्पायनस्य विवक्षायामपि नानुपपत्तिः ॥

श्रुत्वाऽश्वशिरसो मूर्तिं देवस्य हरिमेधसः ।
उत्पन्नसंशयो राजा एवमेतदचोदयत् ॥ ९ ॥

श्रुत्वेत्यादि । हरिमेधसः । हरिणा अनिरुद्धेन सङ्गतस्य 'मेधृ-सङ्गमे' इत्यस्माद्धातोः 'सर्वधातुभ्य असुन्' इति औणादिक असुन् प्रत्ययः । देवस्य । क्रीडमानस्य विजिगीषोः द्योतमानस्य वा । अश्वशिरसो मूर्तिं श्रुत्वा यज्ञाग्रहाराध्यायाद्युक्तरीत्येतिभावः। उत्पन्नसंशय इति । संशयश्च अनन्तरश्लोके स्पष्टः । राजा । जनमेजयः । एतत् । हयशिरोवपुः। एवं । वक्ष्यमाणप्रकारेण । अचोदयत् । अपृच्छदिति यावत् । प्रश्नो हि उत्तरदाने प्रेरणरूप इति अचोदयादित्युक्तिः । एतं देवमचोदयदित्यपि क्वचित्पाठः तत्पाठे एतं वैशम्पायनम् । देवं हयशिरोरूपं अथवा, एतं देवं वैशम्पायनम् ॥

जनमेजय उवाच—

यत्तद्दर्शितवान् (दृशिवान्) ब्रह्मा देवं हयशिरोधरम् ।
किमर्थं तत्समभवद्वपुर्देवोपकल्पितम् ॥ १० ॥

यत्तादित्यादि । ब्रह्मा देवं हयशिरोधरं तत् यद्दर्शितवानित्यन्वयः ॥ दार्शितवानित्यत्र णिजर्थोऽविवक्षितः । दृष्टवानित्यर्थः । अथवा "बहुलमेतन्निदर्शनमिति चुरादिसूत्रविवरणावसरे । अपरे तु नवगणी-पाठो बहुलमित्याहुः । तेनापठितेभ्योऽपि क्वचित्स्वार्थे णिच् । रामो राज्यमचीकरदिति यथेत्याहुः" इति वैयाकरणोक्त्या 'दृशिर् प्रेक्षणे' इत्यस्माद्भौवादिकाद्धातोश्चौरादिकस्स्वार्थे णिच् । ददृशिवा-निति पाठे दृशिधातोः 'क्वसुश्च (३-२-१०७)'ति क्वसुः 'दृशेश्चेती' (वा.) डागमः 'तं तस्थिवांसम्' इत्यादि प्रयोगाल्लोकेऽपि

क्षसोस्साधुता । किमर्थमित्यादि । तद्वपुः किमर्थं देवोपकल्पितं समभवत् । किमर्थमनिरुद्धेन परिकल्पितम् । अत्र वपुषो देवोपकल्पितत्वकथनेन 'विष्णोश्शिरः प्रचिच्छिदतुः' इत्यापातप्रतीतिमवलम्बमानानां केषाञ्चित् शक्त्यनुग्रहेण विष्णोर्हयशिरःप्राप्तिरित्यंशस्य प्रवर्ग्यार्थवादे लेशतोऽप्यप्रतीतस्योत्प्रेक्षणं जननकालिकहयवदनकटाक्षविरहेण तमोऽभिवृद्धिमूलमिति बोधितम् । 'तत्त्वमाचक्ष्व सत्तम' इति बहुषु कोशेषु पाठः । 'तत्त्वं जिज्ञासमानानाम्' इत्याद्युपसंहारैकरस्यादयमेव पाठो हृदयङ्गमः । सत्तम । ब्रह्मज्ञश्रेष्ठ । तथा च श्रुतिः । 'असन्नेव स भवति । असद्ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेति चेद्वेद । सन्तमेनं ततो विदुरिति" इति । यस्सकलश्रुतितात्पर्यविषयीभूतं विष्णुनारायणादिशब्दवाच्यं परम्ब्रह्म यथावज्जानाति स एव भगवान् हयशिरस्तत्त्वं यथावदवगम्योपदेष्टुं शक्नोति न तु विष्णुं कर्मवश्यमुत्प्रेक्षयन् श्रुतितात्पर्यानभिज्ञः पण्डितमानीति भावः ॥

वैशम्पायन उवाच—

यत्किञ्चिदिहलोकेवै देहबद्धं विशाम्पते ।
सर्वं पञ्चभिराविष्टं भूतैरीश्वरबुद्धिजैः ॥ ११ ॥

अथ वैशम्पायनः नादार्थभूतो वासुदेवः नारायण एव परं तत्त्वं तदवतारभूतो हयशिरा इत्याद्युपदिदिक्षुः 'उपादानन्तु भगवान्निमित्तन्तु महेश्वरः' इति कल्पनाऽप्रामाणकीति बोधयितुं श्रुतिषु परतत्त्वप्रकरणेषु ईश्वरशब्दार्थो नारायण एवेति कथनमुखेन निमित्तोपादानयोरभेदमभिधास्यन् प्रथमं 'तदैक्षत बहुस्यां प्रजायेय' 'सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि तासां त्रिवृतमेकैकां करवाणि' इति सङ्कल्पा-

श्रयत्वमपि तस्यैवेत्याह यत्किञ्चिदित्यादिना । इहलोके । प्राकृते लोके । वै शब्दः प्रसिद्धौ । देहबद्धमिति । देहसत्त्वमिति क्वचित्पाठः । तत्पाठे सत्वशब्दो द्रव्यवचनः देहात्मकं द्रव्यमित्यर्थः । विशाम्पते । नरपते । 'विट् पुंसि मनुजेवैश्ये' इति मेदिनी । सर्वमित्यादि । ईश्वर-सङ्कल्पजनितैः 'आकाशाद्वायुः । वायोरग्निः । अग्नेरापः । अद्भ्यः पृथिवी' इति श्रुतिप्रसिद्धैः पञ्चभिर्भूतैस्सर्वमाविष्टमित्यर्थः । पञ्च-भूतासम्बद्धं वपुः किमपि नास्तीति यावत् । अत्र—

यावत्सञ्जायते किञ्चित्सत्वं स्थावरजङ्गमम् ।
क्षेत्रक्षेत्रज्ञसंयोगात्तद्विद्धि भरतर्षभ ॥ (गी.) १३-२६ ॥

इत्यादिवचनबलाच्चेतनाचेतनयोरुभयोरपि भगवन्नियाम्यत्वे तात्पर्यम् । ईश्वरबुद्धिजैः पञ्चभिरित्यनेन छान्दोग्ये 'तत्तेजो सृजत' इत्यत्रैव 'तदपो सृजत' 'ता अन्नमसृजन्त' इत्यत्रापि तच्छब्दः तैत्तिरीये 'आत्मन आकाशस्सम्भूतः' इत्यनन्तरम् 'आकाशाद्वायुः' इत्या-दावाकाशादिशब्दश्च परमात्मपर्यन्त इति बोधितम् । एवं छान्दोग्यतैत्तिरीययोरैककण्ठ्यबोधनेन छान्दोग्योक्तं त्रिवृत्करणं उप-लक्षणतया पञ्चानां भूतानां सम्बन्धितया—त्रिषु भूतेषु द्विधा विभक्त-भागयोर्मध्ये एकभागमात्रस्य चतुर्धाकरणेन वा पञ्चीकरणमेवेति न तयोर्विरोध इति बोधितम् । पञ्चानां भूतानां पञ्चीकरणप्रकारश्च 'द्वेधा-भूतानि भित्वा' इत्यादि तत्त्वमुक्ताकलापसूक्तौ तत्रत्यभावप्रकाशे चानुसन्धेयः । देहबद्धमिति बहुषु कोशेषु पाठः । देहबद्धमित्यस्य प्रकृतिपरिणामभूतेन देहेन बद्धमित्येवार्थः । यत्किञ्चिच्चिदात्मकं वस्तु तत्सर्वं चेतनसामान्यमीश्वरबुद्धिजैः पञ्चभिर्भूतैराविष्टम् । प्राकृतदेह-बद्धजीवसामान्यस्य ईश्वरसङ्कल्पजन्यपञ्चभूतसम्बन्धकथनेन चेतनाचेत-

नयोरुभयोरपि भगवन्नियाम्यत्वं तेन बद्धजीवस्यात्यन्तपारतन्त्र्यं च सिध्यति । [1]मैत्रायणीयोपनिषदि चायमर्थो व्यक्तः ॥ ११ ॥

---

1 "भगवन्नाह मात्मवित्त्वं तत्वविच्छुश्रुमो वयं सत्वं नो ब्रूही" त्युपक्रम्य "उद्धर्तुमर्हस्यन्धोदपानस्थो भेक इवाहमस्मिन्त्संसारे भगवन् त्वं नो गतिस्त्वं नो गतिः" इत्यन्तेन बृहद्रथनाम्ना राज्ञा शाकायन्यऋषिं प्रति कृतस्य प्रश्नस्य 'अथ भगवाञ्छाकायन्यस्सुप्रीतस्त्वब्रवीद्राजानम्' इत्यादिना प्रतिवचनक्रमे "अयं वावखल्वात्मा ते यः कतमो भगवन् देहे इति तगं ँहोवाचेति । अथ य एष उच्छ्वासाविष्कम्भनेनोर्ध्वमुत्क्रान्तो व्ययमानोऽव्ययमानस्तमः प्रणुदत्येष आत्मा इत्याह भगवान्मैत्रिः । अथ य एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परञ्ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत" इति जीवात्मस्वरूपमभिधाय 'अथ खल्वियं ब्रह्मविद्या, सर्वोपनिषद्विद्या वा, राजन्नस्माकं भगवता मैत्रिणाऽऽख्याता अहन्ते कथयिष्यामीति' इत्युपक्रम्य "यो हवाव उपरिस्थश्श्रूयते यस्स्वतन्त्रः स्वे महिम्नि तिष्ठति, अजेनेदं शरीरं चेतनवत्प्रतिष्ठापितं प्रचोदयिता वैषोऽप्यस्येतीति ते होचुर्भगवन् कथमनेनेदृशेनानिष्ठेनैताद्विधमिदं चेतनवत्प्रतिष्ठापितं प्रचोदयिता वैषोऽस्य कथमिति तान् होवाचेत्यारभ्य 'प्रजापतिर्वा एकोऽग्रेऽतिष्ठत्सनारमतैकस्सोऽत्मानमभिध्यात्वा बह्वीः प्रजा असृजत स नारमत सोऽमन्यतैतासां प्रतिबोधनाया भ्यन्तरं विविशामीति" "स वा एष आत्मेहोशन्ति कवयस्सितासितैः कर्मफलैरनभिभूत इव प्रतिशरीरेषु चरती" त्यादिना परमात्मस्वरूपमुक्त्वा "अस्ति खल्वन्योऽपरो भूतात्माख्यो योऽयं सितासितैः कर्मफलैरभिभूयमानस्सदसद्योनिमापद्यता इत्यवाञ्च्योर्ध्वावागतिर्द्वन्द्वैरभिभूयमानः परिभ्रमतीत्यस्योपव्याख्यानं पञ्चतन्मात्रा भूतशब्देनोच्यन्ते । अथ पञ्चमहाभूतानि भूतशब्देनोच्यन्ते । अथ तेषां यत्समवायः समुदयं तच्छरीरमित्युक्तम्, अथ यो ह खलु वावशरीरे इत्युक्तं स भूतात्मेत्युक्त इति' "आत्मस्थं प्रभुं भगवन्तं

कारयितारं नापश्यत् गुणौघैरूह्यमानः कलुषीकृतश्चास्थिरश्चञ्चुलोलुप्यमानस्सस्पृहोऽव्यग्रश्चाभिमानित्वं प्रयाता इत्यहं सोममेदमित्येवं मन्यमानो निबध्नात्यात्मनाऽऽत्मानं" इति 'अथान्यत्राप्युक्तं यः कर्ता सोऽयं वै भूतात्मा करणैः कारयिता अन्तः पुरुष इति' इत्यन्तेन 'सम्मोहो भयं विषाद' इत्युपक्रम्य इति तामसानि अन्तस्तृष्णा स्नेहो राग इत्युपक्रम्य इति राजसान्यैः परिपूर्ण एतैरभिभूत इत्ययम्भूतात्मा तस्मान्नानारूपाण्याप्नोतीत्याप्नोतीति" इत्यन्तेन च जीवात्मस्वरूपमपि सम्यगुपवर्णितम्। पूर्वं मोक्षधर्म एव जनकवसिष्ठसंवादादौ एतच्छ्रुत्यर्थः विस्तरेणोक्तः। यथा—

एषा तत्त्वचतुर्विंशत्सर्वाकृतिषु वर्तते।
यां ज्ञात्वा नाभिशोचन्ति ब्राह्मणास्तत्त्वदर्शिनः।
एतद्देहं समाख्यातं त्रैलोक्ये सर्वदेहिषु॥
कृत्स्नमेतावतस्तात क्षरते व्यक्तसंज्ञितम्।
अहन्यहनि भूतात्मा ततः क्षर इति स्मृतः॥ २०७॥ ३६॥
कथितं ते महराजन्यस्मान्नावर्तते पुनः।
पञ्चविंशतिमो विष्णुर्निस्तत्त्वस्तत्त्वसंज्ञितः॥ ३७॥
(निस्तत्त्वः आधारतत्त्वशून्यः)
तत्त्वसंश्रयणादेतत्तत्त्वमाहुर्मनीषिणः।
यां तु मूर्तिं सृजत्येष तां मूर्तिम(यं मर्त्यमनृव्यक्तं तत्तन्मूर्त्य)धितिष्ठति
चतुर्विंशतिमो व्यक्तो ह्यमूर्तः पञ्चविंशकः। चतुर्विंशतितत्त्वात्मकदेहवद्धत्वाच्चतुर्विंशतिमत्त्वं॥
स एव हृदि सर्वासु मूर्तिष्वात्मावतिष्ठते। (स एव—पञ्चविंशक एव)
चेतयंश्चेतनान्नित्यं सर्वमूर्तिरमूर्तिमान्॥ ४०॥
एवमेष महानात्मा सर्गप्रलयकोविदः।
विकुर्वाणः प्रकृतिमानभिमन्यत्यबुद्धिमान्॥ ४२॥ (प्रकृतिमान् देहात्मकप्रकृतिबद्धः॥

तमस्सत्वरजोयुक्तस्तासु तास्विह योनिषु ।
लीयतेऽप्रतिबुद्धत्वादबुद्धजनसेवनात् ॥ ४३ ॥
सहवासनिवासात्मा नान्योऽहमिति मन्यते ।
योऽहं सोऽहमिति ह्युक्त्वा गुणानेवानुवर्तते ॥ ४४ ॥
तमसा तामसान्भावान्विविधान्प्रतिपद्यते ।
रजसा राजसांश्चैव सात्त्विकान् सत्वसंश्रयात् ॥ ४५ ॥
शुक्ललोहितकृष्णानि रूपाण्येतानि त्रीणि तु ।
सर्वाण्येतानि रूपाणि यानीह प्राकृतानि वै ॥
सात्विकस्योत्तमं स्थानं राजसस्येह मध्यमम् ।
तामसस्याधमं स्थानं प्राहुरध्यात्मचिन्तकाः ॥ २१९ ॥
केवलेनेहपुण्येन गतिमूर्ध्वामवाप्नुयात् ।
पुण्यपापेन मानुष्यमधर्मेणाप्यधोगतिम् ॥ इति ।

वचनार्थश्च 'तत्त्वमेकः' इति मूलविवरणावसरे वक्ष्यते—सात्विकानि मैत्रायणीये "अस्य को विधिर्भूतात्मनो येनेदं तत्वाऽऽत्मन्नेव सायुज्यमुपैति" इति प्रश्नप्रतिवचने "अयं वावखल्वस्य प्रतिविधिर्भूतात्मनो यद्वेदविद्यावगमस्स्वधर्मस्यानुचरणम्"—

तपसा प्राप्यते सत्वं सत्वात्सम्प्राप्यते मनः ।
मनसः प्राप्यते ह्यात्मा यमाप्त्वा न निवर्तते ॥ इति ॥

उत्तरप्रकरणे विवक्षितानि इति त्रयाणामुपबृंहणवचनेषूपादानमितिबोध्यम् ॥

एतेन पारतन्त्र्यज्ञानाज्ञानाभ्यां बन्धमोक्षावुक्तौ हयशिर उपाख्यानानन्तराध्यायस्थानां (८६) पूर्वोदाहृतानां 'तिस्रः प्रकृतय इत्यादिवचनानामेतच्छ्रुतितदुपबृंहणवचनानाञ्चैकार्थ्यमवसेयम् । उदाहृतश्रुत्युक्ततामसराजससात्विकसम्पत्तिनिदानभूता रुद्रब्रह्मविष्णव इति मैत्रायणीये पञ्चमप्रपाठके । तदधिष्ठातारः सङ्कर्षणप्रद्युम्नाऽनिरुद्धा इति च पूर्वोदाहृतवचनेषु व्यक्तम् । 'तदव्यक्तमिति ज्ञेयं त्रिगुणम्' इत्येतद्विवरणावसरेऽपि निरूपयिष्यते ॥११॥

ननु तापनीयादिषु प्रणवार्धमात्राविवरणावसरे ईश्वरसर्वेश्वरादिशब्दाः प्रयुक्ताः। ते च रूढ्या परमशिवमभिदधतीति न नारायणस्य परत्वसम्भवः ॥

एवञ्च नारायणस्यैव परत्वाभावेन कर्मवश्यतया च तदवतारभूतस्य हयशिरसः कर्मपरतन्त्रता सुदृढा इति शङ्कामपाकुर्वन् तापनीयादिघटकेश्वरशब्दार्थमपि 'ईश्वरबुद्धिजै' रित्यत्रत्येश्वरशब्दार्थनिर्णयव्याजेन निश्चिनोति। ईश्वरो हीत्यादिना—

ईश्वरा हि जगत्स्रष्टा प्रभुर्नारायणो विराट्।

---

[1]न च सर्वेश्वरशब्दे योगार्थप्रतिसंबन्धिवाचकसर्वपदसत्वेन रूढेरविवक्षेति वाच्यम्। सर्वपदेन योगविवक्षाबोधनेऽपि रूढेरविवक्षाया बोधयितुमशक्यत्वात्। प्रत्युत ईश्वरशब्दरूढ्यर्थमात्रविश्रान्तं सर्वनियन्तृत्वं बोधयन्तीश्वरादिपदानि योगमुखेनापि श्रुतिविधयैव परमशिवस्य परत्वनिर्णायकानि स्युः। एवञ्च 'शान्तं शिवमद्वैतमि' त्यादिमुण्डकादिवाक्यान्यपि निर्व्यूढानि। न च—

स एष शाश्वतो देवस्सर्वगुह्यमयश्शिवः।
वासुदेव इति ज्ञेयः .. . . . ॥

इनि भीष्मपर्ववचनेन शिवशब्दार्थो निर्णीत एवेति वाच्यम्। एवमपीश्वरशब्दस्य परमाशिवे रूढिनिर्णयेन तदनुरोधेन शिवशब्दार्थस्यापि निर्णेयत्वात् ॥

न च श्रुत्यादिषु रुद्रस्योत्पत्तिप्रतिपादनविरोधः। तदंशभूतस्य संहारकरुद्रस्य नीललोहितरुद्रस्य वा उत्पत्तिप्रतिपादनेऽपि परमशिवस्य परत्वे विरोधानवकाशात्। अन्यथा भवन्मतेऽपि विष्णोरुत्पत्तिश्रुतिविरोधेन नारायणस्य परत्वं न स्यादिति भावः ॥

भूतान्तरात्मा वरदस्सगुणो निर्गुणोऽपि च ॥ २ ॥

[1]हीति श्रुत्यादिप्रसिद्धौ। हीति यत इत्यर्थकं वा। अत्रेश्वरशब्दार्थस्य नारायणत्वकथने वाक्यतात्पर्यम्। जगत्स्रष्टेत्यादिपदानि तदुपपादकानि यतो जगत्स्रष्टृत्वादिविशिष्ट ईश्वरः। अतो नारायण इत्यर्थः। ईश्वरशब्दः 'स्थेशभासपिसकसो वरच्' (३-२-१७५) इति सूत्रेण वरजन्तो यौगिकः। 'स्वामी त्वीश्वरः पतिरीशिता। अधिभूर्नायको नेता' इति कोशान्नियन्तृत्वविशिष्टस्वामिवाची। अत एव नृसिंहोत्तरतापनीये प्रथमखण्डे तुरीयत्वेनोक्त ईश्वरः द्वितीयखण्डे 'तस्मादेवमेवेममात्मानं परम्ब्रह्मानुसन्धध्यादेष वीरो नृसिंह एव' इत्यर्धमात्रार्थो नारायणावतारो नृसिंह एवेत्युक्तम्। नृसिंहस्य नारा-

[1] तथा चाहुश्श्वेताश्वतराः—

किङ्कारणं ब्रह्म कुतस्स्म जाता जीवाम केन क्व च सम्प्रतिष्ठा।
अधिष्ठिताः केन सुखेतरेषु वर्तामहे ब्रह्मविदो व्यवस्थाम् ॥

इति प्रश्नस्य प्रतिवचने "ज्ञाज्ञौ द्वावजावीशनीशावजा ह्येका भोक्तृभोगार्थयुक्ता। अनन्तश्चात्मा विश्वरूपो ह्यकर्ता त्रयं यदा विन्दते ब्रह्म मैतत्। क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः" इत्यादि। अत्रानन्तशब्दः 'अनन्तः केशवे शेषे' इत्यादिकोशेन—

अनन्तो भगवान् ब्रह्मा आनन्देत्यादिभिः पदैः।
प्रोच्यते विष्णुरेवैकः परेषामुपचारतः ॥

इति ब्राह्मवचनेन च नारायण एव योगरूढः। 'विष्वक्सेनो विश्वरूपो मुरारि' रिति कोशाद्विश्वरूपशब्दोऽपि तथा। 'क्षरं प्रधानममृताक्षरं हर' इत्यत्रैव वाक्यपूर्तिः। हरशब्दो यौगिकः ईश्वरशब्दोऽपि यौगिकः (पा. वि.) प्रतिसम्बन्धिपदान्तरसत्त्वे सर्वथारूढिभङ्गः (वे. कौ) इत्यादिकं तु प्राचां ग्रन्थे विस्तृतम् अत ईश्वरशब्दासङ्कुचितयोगार्थस्सर्वनियन्ता नारायण एवेति सिद्धम् ॥

यणावतारत्वं महाभारत एव बहुषु स्थलेषु स्पष्टम्। अर्धमात्रार्थो नारायण इति पूर्वमेव उपपादितम्। नारायणशब्दश्च तत्र तत्र निरुक्तः। हरिवंशे च रुद्रेण कृष्णं प्रति जगत्कारणं प्रक्रम्य—

नारा आपस्समाख्यातास्तासामयनमादितः।
यतस्त्वं भूतभव्येश[1] तन्नारायणशब्दितः।
ईशस्त्वं सर्वजगतामीश्वरोऽसि ततस्स्मृतः॥

---

[1] 'भूतभव्येशेति' संबोधनेन 'ईशानो भूतभव्यस्येति' (कठ ४ व. १२-१३) श्रुतिः। तत्रैव 'विष्णु' (३ व. ९) 'वामन' (५ व. ३) शब्दार्थनारायणपरेति। तत्रत्यईशानशब्दश्च यौगिक इति च रुद्रेण निर्णीतं भवति। अत एव 'शब्दादेव प्रमित' (१ अ. ३ पा. २४ सू.) इति सूत्रे (शं. भा.) 'शब्दात् ईशानो भूतभव्यस्येति' न ह्यन्यः परमेश्वराद्भूतभव्यस्य निरङ्कुशमीशिता, इत्यत्र ईशानशब्दो यौगिक इति स्फुटप्रतीतिरपि नापलपनीया। ईशानशब्दस्य ब्रह्मशब्दवद्रूढत्वाभावेऽपि श्रुतित्वं संभवतीत्यभिप्रेत्य शब्दादेवेत्यभिधानश्रुतेरेव ईशान इति तदुत्तरशङ्करभाष्यं सङ्गच्छते॥

एवं 'गीतानां मोक्षधर्माणां चैकार्थ्यात्' (ई. भा.) इति वदन्तश्शङ्कराचार्याः 'स्मृतेश्च' (१ अ. २ पा. ६ सू) इति सूत्रोदाहृते 'ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति' इत्यत्र 'ईश्वरः ईशनशीलः नारायणः' (शं गी. भा.) इति। 'यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वर' इत्यत्र 'ईश्वरस्सर्वज्ञः नारायणाख्यः ईशनशीलः' (शं. गी. भा. १५ अ.) इति 'भारभृत्कथितो योगी' (स. ना. भा) त्यत्र कथितशब्दस्य वेदादिभिरयमेव परत्वेन कथितः। सर्वैर्वेदैः कथित इति वा कथितः। 'सर्वे वेदा यत्पदमामनन्ति' 'वेदैश्च सर्वैरहमेव वेद्यः'—

'वेदे रामायणे पुण्ये भारते भरतर्षभ।
आदौ मध्ये तथा चान्ते विष्णुस्सर्वत्र गीयते॥'

इति श्रुतिस्मृत्यादिवचनेभ्यः 'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्' इत्याद्युक्तमित्युपक्रम्य 'पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः' इत्यन्तेन यः कथितः स कथितः इति च प्रतिपादयन्ति ॥

'यः पृथिव्यां तिष्ठन्—स त आत्माऽन्तर्याम्यमृतः' (बृ. ५-७-३) इति श्रुतिविवरणावसरे 'य ईदृगीश्वरो नारायणाख्यः' इत्यनेन अन्तर्यामिब्राह्मणं नारायणपरमिति व्यक्तीकुर्वन्ति । तच्छिष्यैस्सुरेश्वराचार्यैः—

चतुर्धा प्रविभज्यैनं सात्त्वताः पर्युपासते ।
तथा हैरण्यगर्भीयाः तथा पाशुपतादयः ॥ (श्वे. ५. ७. ३८)
कृष्णद्वैपायनो व्यासः वेदात्मा ध्वान्तहानिकृत् ।
प्राहेममेव बहुशः प्राणिनां हितकाम्यया ॥ ३९ ॥
नारायणः परोऽव्यक्ता दण्डमव्यक्तसम्भवम् ।
अण्डस्यान्तस्त्विमे लोकास्ससप्तद्वीपा च मेदिनी ॥ ४० ॥
तस्मै नमोऽस्तु देवाय निर्गुणाय गुणात्मने ।
नारायणाय विश्वाय देवानां परमात्मने ॥ ४१ ॥
एतमेव समुद्दिश्य मन्त्रो नारायणस्तथा ।
वेदविद्भिर्महाप्राज्ञैः पुरुषैर्विनियुज्यते ॥ ४२ ॥

इत्युक्तम् । अत्र 'नारायणः परोऽव्यक्ता' दिति व्यासश्लोक एव गीता (शं.) भाष्ये मङ्गळश्लोकतया आदृतः । अतश्च सर्वान्तर्यामी नारायण इति श्रौतो व्याससिद्धान्त इति शङ्कराचार्यैस्तच्छिष्यैश्च निर्णीतं भवति ॥

अत्र 'न केवलं पुराणागमाभ्यामेव सोऽधिगम्यते । किन्तु श्रुत्यक्षरैरेवेत्याह । एतमेवेति । 'सहस्रशीर्षं देवं विश्वाक्षं विश्वशंभवम् । विश्वं नारायणं देवमक्षरं परमं पदम्, इत्यादिर्मन्त्रः वेदार्थविद्भिरन्तर्यामिणमुद्दिश्य विनियुक्तः । अतस्स वैदिक इत्यर्थ इत्यानन्दगिरिः । एतेन उक्तश्रुतीनां गीतायाश्चान्यथानयनमप्पय्यदीक्षितानां (शि. त. वि.) (शि. म. दी.) 'हेतुदर्शनाच्चेति' सूत्रोक्तरीत्यैवेति बोध्यम् ॥

अतएव 'योगिनामपि सर्वेषां' (गी. ६-४७) इति श्लोके शङ्कराचार्यैः रुद्रादित्यभक्तापेक्षया वासुदेवभक्तस्यातिशयितत्वं प्रतिपादितं (शं. भा.) सङ्गच्छते ॥

एवं माण्डूक्यगौडपादकारिकाव्याख्याने अलातशान्तिप्रकरणे 'अयमेवेश्वरो नारायणाख्यस्तं वन्दे' इति शङ्कराचार्योक्तिः । आचार्यो हि पुरा बदरिकाश्रमे नरनारायणाधिष्ठिते नारायणं भगवन्तमभिप्रेत्य तपो महदतप्यत । ततो भगवानतिप्रसन्नस्तस्मै विद्यां प्रादादिति आनन्दगिरिणा गौडपादानां नारायणोपासकत्वस्योक्तिश्च सङ्गच्छते ॥

मधुसूदनसरस्वतीभिरपि 'योगिनां वसुरुद्रादित्यादिक्षुद्रदेवताभक्तानां सर्वेषामपि मध्ये' इत्यारभ्य 'श्रद्धावान्भजते यो मां, नारायणमीश्वरेश्वरं सगुणं निर्गुणं वा भजते स एव मद्भक्तो योगी युक्ततमः' इति 'योगिनामपि सर्वेषा' मित्यत्र—'पुरुषोत्तम' इति स उत्तमः पुरुष इति वेद उदाहृत एव । लोके च कविकाव्यादौ 'हरिर्यथैकः पुरुषोत्तमो मतः' इत्यादि प्रसिद्धम् ॥

कारुण्यतो नरवदाचरतः परार्था-
न्पार्थाय बोधितवतो निजमीश्वरत्वम् ।
सच्चित्सुखैकवपुषः पुरुषोत्तमस्य
नारायणस्य महिमा न हि मानमेति ॥

केचिन्निगृह्य करणानि विसृज्य भोग-
मास्थाय योगममलात्मधियो यतन्ते ॥
नारायणस्य महिमानमनन्तपार-
मास्वादयन्नमृतपारमहन्तु मुक्तः ॥ इति ॥

'अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः' इत्यत्र—'ईश्वरः ईशनशीलो नारायणस्सर्वान्तर्यामी' 'यः पृथिव्यां तिष्ठन्—यः पृथिवीमन्तरोयमयति'

इत्युक्त्या ऋषीन्प्रति 'नान्यो जगति देवोऽस्ति' इत्युक्त्या चायमर्थो दृढीकृतः। एवञ्च ईश्वरशब्दस्यैव यौगिकत्वे सर्वेश्वरादिशब्दानां [1] का कथेति ॥

जगत्स्रष्टेति । चिदचिदात्मकस्य जगतस्सर्गकर्ता। यथोक्तं पूर्वमेव नारदं प्रति वासुदेवेन—

मत्तस्सर्वं सम्भवति जगत्स्थावरजङ्गमम्।
अक्षरश्च क्षरश्चैव सच्चासच्चैव नारद ॥ इति ॥

एवम्—

प्रधानादिविशेषान्तं चेतनाचेतनात्मकम् । इति । (६-७-५८)
प्रधानपुंसो रजयोः कारणं कार्यभूतयोः॥ (१-९-३७)

इति विष्णुपुराणे 'नारायणोऽस्य जगतः कारणम्' इत्यारभ्य—

तस्माद्भवति चाव्यक्तस्तस्मादात्माऽपि जायते।

इति विष्णुधर्मोत्तरोपक्रमे याज्ञवल्क्यस्मृत्यादिषु (प्रा. का. ६६) च सृज्यत्वं जीवस्य स्पष्टम्। 'एवमेतस्मादात्मनः सर्व एत आत्मानो-व्युच्चरन्ति' (बृ. ४-१-२०) 'किङ्कारणं ब्रह्म'॥

---

'यच्च किञ्चिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा । अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणस्स्थितः' इत्यादिश्रुतिसिद्ध इति 'ईश्वरस्सर्वभूताना' मित्यत्र च व्याख्यातम् ॥

एतेन 'सर्वस्य वशी सर्वस्येशानः' 'एष सर्वेश्वर एष भूताधिपतिः' (बृ.) 'यः परस्समहेश्वरः' (छां.) 'विद्युमती सर्ववर्णा पुरुषदैवत्या' 'ईशानं प्रध्यायितव्यम्' (अ. शि.) 'क्षरात्मानावीशते देव एकः' (श्वे.) इत्यादिकं ब्रह्मोपनिषदादिषु ईश्वरादिशब्दघटितअर्थमात्राप्रतिपादनवाक्यं च नारायण-परमिति सिद्धम् ॥

[1]पाराशर्यविजये वेदान्तकौस्तुभे च अप्पय्यदीक्षितोक्तिपर्यालोचनपूर्वकं ईश्वरादिशब्दानां यौगिकत्वमेवेति व्यवस्थापितम् ॥

क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः। (श्वे.१-१०) 'तोयेन जीवान्व्यससर्ज भूम्याम्' (तै. ना. १ अनु.) इत्यादि-श्रुतयोऽत्र मूलभूताः। अतो जगत्स्रष्टेत्यस्य चिदचित्सृष्टि-कर्तेत्येवार्थः। यश्च जगत्स्रष्टा तस्यैव सर्वनियन्तृत्वरूपं सर्वेश्वरत्वं न तदन्यस्येति भावः। अत्र नियन्तैव ईश्वरशब्दार्थः विवक्षितः॥

प्रभुरिति स्वामिवाचकपदोपादानात् 'नियन्तृत्वसंवलितस्वा-मित्वमीश्वरशब्दप्रवृत्तिनिमित्तम्' इति (गी. १५ अ.) तात्पर्यचन्द्रि-कायां स्पष्टम्। प्रभ्वादिशब्दैः 'आत्मस्थं प्रभुं कारयितारम्' (मै. ३) इति श्रुतिः 'एष आत्मा—शास्ताच्युतो विष्णुर्नारायण' इति (७-७) श्रुतावुपसंहारोक्त नारायणपरेति बोधितम्॥

विराट् अकर्मवश्यतया राजमानः। यथा चाहुश्श्वेताश्वतराः। 'द्वासुपर्णेत्यादि' 'अनश्नन्नन्योऽभिचाकशीति' इति। तदुक्तं नारदं प्रति वासुदेवेन 'शुभाशुभैः कर्मभिर्यो न लिप्यति कदाचन' इति॥

यद्वा विराट्। विशेषेण राजमानः। यथोक्तं श्रीरामायणे—

अप्रमेयं हि तत्तेजो यस्य सा जनकात्मजा। इति।

एतेन श्रीवैशिष्ट्यं व्यञ्जितम्। एतच्च मोक्षधर्म एव पूर्वं वृत्रं प्रति सनत्कुमारोक्तौ—

अनादिनिधनश्श्रीमान् हरिर्नारायणः प्रभुः।
देवस्सृजति भूतानि स्थावराणि चराणि च॥ शान्ति. २८६-१९.

इत्यारभ्य—

तं विश्वभूतं विश्वादिं परमं विद्धि चेश्वरम्। २८५-२३.

इत्यन्तग्रन्थसन्दर्भे स्फुटम्। 'विद्यासहायवान्देव' इत्येतद्विवरणावसरे चैतद्विवेचयिष्यते॥

भूतान्तरात्मा। जगत्स्रष्टेति सृज्यतयोक्तस्य चेतनस्याचेतनस्य चान्तःप्रविश्य नियन्ता।एतावता सुबालोपनिषदि नैवेह किञ्चनाग्र आसीत्। अमूलमनाधारम् इमाः प्रजा जायन्ते दिव्यो देव एको नारायणः' इत्युपक्रम्य 'एष सर्वभूतान्तरात्मा अपहतपाप्मा दिव्यो देव एको नारायणः' इत्यन्तषष्ठसप्तमखण्डार्थः। महोपनिषदि च 'एको ह वै नारायण आसीन्न ब्रह्मा नेशानः' इत्युपक्रम्य 'तस्याश्शिखायामध्ये परमात्मा व्यवस्थितः' इत्यन्तश्रुत्यर्थश्च सङ्गृहीतः। 'भूतान्तरात्मे' त्यनेन अन्तर्याम्यधिकरणार्थ उक्तः। वरदः। ब्रह्मरुद्रयोरपि स्वप्रादुर्भावदशायां स्वेनाराधनस्तुतिनमस्कारादिकरणमपि वरं ददातीति तथोक्तः। (५८–पु.) उदाहृतवचनान्यत्रानुसन्धेयानि। सगुण इत्यादि। निर्गुणोऽपि च सगुणः। अत एव 'पश्यन्ति नित्यं पुरुषं गुणाधिकम्' इत्युपसंहारस्सङ्गच्छते। निर्गुणत्वं च सर्वभूतसम्बन्धेन प्रसक्तास्सत्वरजस्तमोगुणाः ये च कर्माधीनजीववृत्तिदुःखादिगुणास्तच्छून्यत्वम्। एतच्च 'एको देवः—निर्गुणश्च' इति श्रुत्यानुपूर्व्यैव बोधितम्। वक्ष्यति च 'व्याख्यास्यामि गुणाधिकम्' (३६०–३.) इति। 'एको देव' इत्यादिश्रुतौ निर्गुणत्वं न गुणसामान्यशून्यत्वं पूर्वं परतश्च तत्रैव 'ज्ञः कालकालो गुणी सर्वविद्य' इति सामान्यतः 'पराऽस्य शक्तिः' 'एको वशी' इत्यादौ विशेषतश्च गुणानामप्युक्तेः[1]॥

---

[1] ननूपसंहारे 'निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्' इति निषेधकथनान्निर्गुणत्वं गुणसामान्यशून्यत्वमेवेति चेत् तादृशश्रुतौ गुणनिषेधबोधकं पदं किमिति विचारणीयम्। न तावन्निष्कलमिति पदम्॥

कला स्यान्मूलरैवृद्धौ शिल्पादावंशमात्रके।
षोडशांशेऽपि चन्द्रस्य कलना कालमानयोः॥

इति मेदिनीकोशेन कलाशब्दस्यांशबोधकतया निष्कलशब्देन निरंशत्वस्यैव प्रतीतेः । निष्क्रियमित्यनेन पूर्वापराविरुद्धस्यचलनात्मकक्रियाशून्यत्वस्य प्रतीतेः । निरवद्यमित्यनेन अविद्याकर्मादिदोषशून्यत्वस्य । निरञ्जनमित्यनेन दोषसंबन्धशून्यत्वस्य अवद्यफलसंबन्धशून्यत्वस्य वा प्रतीतेः । पदचतुष्टयस्यापि भावान्तराभावन्यायेन गुणविशेषेषु तात्पर्यात् । तदुत्तरं 'अमृतस्य परं सेतुं दग्धेन्धनमिवानलम्; इत्यत्र 'सेतुम्' इत्यन्तेन मोक्षकारणत्वस्य प्रतिपादनात् । 'दग्धेन्दनमिवानल' मित्युक्तार्थस्य च चेतनदोषानिवर्तकत्वरूपगुणाविशेष एव पर्यवसानात् । एव पदद्वयार्थस्वकिारे—

दैवी ह्येषा गुणमयी मम माया दुरत्यया ।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥

इति गीतोपबृंहितेन सर्वजनक–सृष्टिक्रीडावदर्थक नारायणदेवशब्दघटितेन—

यदि योन्यां प्रमुञ्चामि तं प्रपद्ये नारायणं देवम् ।
अशुभक्षयकर्तारं फलमुक्तिप्रदायिनम् ।
यन्मया परिजनस्यार्थे कृतं कर्मशुभाशुभम् ॥

एकाकी तेन दह्यामि गतास्ते फलभोगिनः ।

इति गर्भोपनिषत्सन्दर्भेणैकाथर्यमपि सङ्गच्छते । श्वेताश्वतरोपनिषदि 'अमृतस्य परं सेतु' मित्यनेनोक्तार्थस्य—

यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः ।
तदा देवमविज्ञाय दुःखस्यान्तो भविष्यति ॥

इति तदुत्तरवाक्येन विशदीकरणेन अन्ते निर्गुणत्वकथाया एवाभावात् । ततश्च "प्रकृतैतावत्वं हि प्रतिषेधति ततो ब्रवीति च भूयः" इति सूत्रोक्तन्यायोऽत्र निर्णायक इति । 'एको देव' इत्याद्युदाहृतश्रुतावेकवाक्यताऽस्त्येवेति नोपक्रमाधिकरणन्यायप्रवृत्तौ बाधकलेशोपि । एवमुपसंहारकवाक्यसद्भावेन उत्सर्गापवादनयाङ्गीकारेऽपि नातिप्रसङ्गः निर्गुणविद्यात्वेन पराभिमतायां

एतावता 'एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः' इति सुबालोपनिषत्सप्तमखण्डार्थ उक्तः। अथ पृथिव्यप्सु प्रलीयते' इत्यादि सुबालोपनिषद्द्वितीयखण्डसन्दर्भस्य सप्तमखण्डैकार्थ्यं स्थिरीकर्तुं 'एको ह वै नारायण आसीन्न ब्रह्मा नेशान' इत्यादि महोपनिषदैकार्थ्यमपि व्यञ्जयन् नारायणव्यतिरिक्तस्य सर्वस्य प्रलयगोचरतया नारायणस्यैव परत्वं स्थापयन् प्राकृतप्रलयप्रकारं दर्शयति। भूतप्रलयमित्यादिना न प्राज्ञायत किञ्चनेत्यन्तेन॥

---

विद्यायां गुणकथनस्य स्तुत्यर्थत्वं न घटते इत्यादिकमपि प्राचांग्रन्थेषु हरिगुणदर्पणे गुणमीमांसायां च स्फुटम्। निषेधप्रकरणपठितानां गुणानां निषेधार्थमनुवादविषयता उपासनप्रकरणपठितानाञ्चोपासनार्थतेति परमार्थतो निर्गुणमेव वस्त्विति मतेऽपि ब्रह्मणि आरोपितानां स्वरूपाभिन्नानां चानन्तानां गुणानामङ्गीकारेण स्वसमानसत्ताकस्वभिन्नगुणशून्यत्वस्यैव निर्गुणत्वस्य वाच्यतया ब्रह्मणि गुणसामान्याभावस्यानङ्गीकारेण निर्गुणश्रुतेस्सङ्कोचोऽकामेनाप्यङ्गीकरणीयः। एवमसङ्गश्रुतेरपि। किञ्च ब्रह्मण्यविद्यासंबन्धाङ्गीकारेण निरवद्यं निरञ्जनम्, 'निरवद्यो निरानिष्टः, इत्यादिश्रुतिसङ्कोचोऽपि तन्मतेऽधिक इत्यादिकमाचार्यसूक्तिसारज्ञानां सुगमम्। महभारत एव बहुषु प्रदेशेषु ब्रह्मणि निर्गुणत्वं सत्त्वरजस्तमोगुणशून्यत्वरूपमित्युक्तं तत्र तत्रैव द्रष्टव्यम्। नारायणशब्दस्यान्यपर्यासंभवः प्राचीनग्रन्थेष्ववसेयः ईश्वरो हि जगत्स्रष्टेत्यनेन श्लोकेन 'तमीश्वराणां परमं महेश्वर' मित्यारभ्य--

एको देवस्सर्वभूतेषु गूढ-
स्सर्वव्यापी सर्वभूतान्तरात्मा।
कर्माध्यक्षस्सर्वभूताधिवास-
स्साक्षी चेता केवलो निर्गुणश्च॥

इत्यादिश्रुतिसन्दर्भस्य उदाहृतसुबालोपनिषदैकार्थ्यमाविष्कृतम्। अतश्च सकलश्रुतितात्पर्यविषयोऽकर्मवश्यो नारायणः परं तत्त्वमिति सिद्धम्॥

भूतप्रलयमत्यन्तं (व्यक्तं) श्रुणुष्व नृपसत्तम ।
धरण्यामथ लीनायामप्सु चैकार्णवे पुरा ॥ १३ ॥
ज्योतिर्भूते जले चापि लीने ज्योतिषि चानिले ।
वायौ चाकाशसंलीने आकाशे च मनोनुगे ॥१४॥
व्यक्ते मनसि संलीने व्यक्ते चाव्यक्ततां गते ।
अव्यक्ते (क्तं) पुरुषं (षे) याते पुंसि सर्वगतेऽपि च ॥
तम एवाभवत्सर्वं न प्राज्ञायत किञ्चन ।

भूतप्रलयम् भूतस्य सत्ताश्रयचिदचिदात्मक कार्यसामान्यस्य प्रलयम् । तथा च श्रुतिः 'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति ।' इति । एवं 'सन्मूलास्सोम्येमास्सर्वाः प्रजास्सदायतनास्सत्प्रतिष्ठाः, इति । श्रुतिद्वयमिदं चिदचितोः प्रलयमपि प्रतिपादयतीति प्राचां ग्रन्थेषु स्पष्टम् । नैमित्तिकलयव्यावृत्त्यर्थं अत्यन्तमिति । अयं च प्रलयः पुराणेषु प्राकृतप्रलय इति व्यवह्रियते । अव्यक्तमिति क्वचित्पाठः । अस्मिन्पाठेऽपि अव्यक्तः अदृश्यः बद्धजीवानाम् इत्यर्थः । स च प्रलयः प्राकृत एवेति बोध्यम् । नृपसत्तमेति । त्वया परिपाल्यमानानां नराणां देहान्तरविशिष्टवेषेणापि नाऽस्मिन्प्रलये स्थितिरिति भावः । श्रुणुष्व । सावधानेन चेतसा आकर्णय । श्रुण्विममिति क्वचित्पाठः । धरण्यामित्यादि । अथ धरण्यां पुरा एकार्णवे अप्सु लीनायामिति योजना । अथशब्दः कात्स्न्यार्थकः कृत्स्नायां धरण्यामप्सु लीनायामित्यर्थः । अथेत्यनेन ब्रह्माण्डान्तर्वर्तिनी पृथिवी ब्रह्माण्डप्रथमावरण-

हेमकटाहरूपा च पृथिवी[1] गन्धतन्मात्रं चेति सर्वं विवक्षितम् । लय-क्रमश्च विष्णुपुराणषष्ठांशचतुर्थाध्यायादिषु द्रष्टव्यः। एतेन 'पृथिव्यप्सु प्रलीयते, आपस्तेजासि लीयन्ते। तेजो वायौ लीयते। वायुराकाशे लीयते। आकाशमिन्द्रियेषु । इन्द्रियाणि तन्मात्रेषु । तन्मात्राणि भूतादौ लीयन्ते । भूतादिर्महति लीयते । महानव्यक्ते लीयते । अव्यक्तमक्षरे लीयते। अक्षरं तमसि लीयते। तमः परे देवे एकीभवति, इति सुबालश्रुतौ एतद्वचनमूलभूतायां पृथिव्यादिशब्दाः कृत्स्न-पृथिव्यादिपरा इति बोधितम् । श्रुतौ च 'पृथिव्यप्सु प्रलीयते, इत्यादावेव तन्मात्रलयो विवक्षितः । अत एव 'आकाशमिन्द्रियेषु। इन्द्रियाणि तन्मात्रेषु, इत्यत्र लयवाचिपदाप्रयोग इत्यादिकं सुबालोपनिषद्भाष्ये स्पष्टम् । पुरा । प्राक्-प्राकृतलयकाले एकार्णवे । ब्रह्माण्डस्य द्वितीयं यदुदकावरणं तद्रूपैकार्णवे ।

---

[1] यथोक्तं विष्णुपुराणे—

येनेदमावृतं सर्वमण्डमप्सु प्रलीयते ।
सप्तद्वीपसमुद्रान्तं सप्तलोकं सपर्वतम् ॥ (६-४-३०)
उदकावरणं यत्तु ज्योतिषा नीयते तु तत् । इत्यादि ।

विष्णुधर्मोत्तरेऽपि—

महाकल्पक्षये ब्रह्मन् समवस्थां वदस्व मे ।

इति प्रश्नप्रतिवचने—

अण्डस्याभ्यन्तरं सर्वं तदाऽम्भोभिः प्रपूर्यते ।
शरीरधारिणस्सर्वे तदा नश्यन्ति पार्थिव ॥
अन्तर्गतेन तोयेन भिन्नमण्डं जगत्पते ।
पूर्णे ब्रह्मायुषि तदा बाह्यस्थेऽम्भसि लीयते ॥
एवं सा जगदाधारा धारा तोये प्रलीयते ॥ (१-२२-६) इति ॥

'अप्सु चैकार्णवे पुरे' इत्यत्र चशब्दः उदकावरणजलव्यतिरिक्तजलसमुच्चायकः। तत्र च ब्रह्माण्डप्रथमावरणहेमकटाहस्य द्वितीयावरणजले तद्भिन्नपृथिव्याश्च द्वितीयावरणव्यतिरिक्तअण्डान्तर्गते जले लयो विवक्षितः। ज्योतिर्भूते। उपादेय जलत्वावस्थां विहाय उपादान तेजस्त्वावस्थामापन्ने। तदुक्तं विष्णुपुराणे—

अन्नवस्थे च सलिले वाय्ववस्थे च तेजसि। इति।

एतेन उपादानस्य उत्तरावस्थाप्रहाणपूर्वकतत्पूर्वावस्थाप्राप्तिर्लय इति बोधितम्। लीने ज्योतिषीत्यादि पूर्ववदेवार्थः। आकाशे च मनोऽनुग इति। अत्र मनश्शब्द इन्द्रियसामान्य[1]मुपलक्षयति। अत्र पूर्ववल्लयबोधकपदाप्रयोगेण 'आकाशमिन्द्रियेषु' इति श्रुताविवात्राकाशस्य मनोऽनुगमनं संश्लेष एव न तु लय इति बोधितम्। तेन मनस आकाशोपादनत्वाभावेन लयानुपपत्तिरिति शङ्काया नावकाशः। एवं—

ज्योतिष्यापः प्रलीयन्ते ज्योतिर्वायौ प्रलीयते।
खे वायुः प्रलयं याति मनस्याकाशमेव च॥ (१-७७-७)

इति विष्णुधर्मोत्तरवचनेऽप्यूह्यम्। अत एव विष्णुपुराणे—

ज्योतिर्वायौ लयं याति यात्याकाशे समीरणः।

---

[1] एवं मनःप्रधानानीन्द्रियाणि प्रभावयेत्।
इन्द्रियाणान्तु सर्वेषामीश्वरं मन उच्यते॥
एतद्विशन्ति भूतानि सर्वाणीह महायशः॥ (शा. २१६-२१)

इत्यत्रैव पूर्वं मनस इन्द्रियप्रधानत्वोक्त्या मनश्शब्देन इन्द्रियसामान्यविवक्षा युक्तेति भावः॥

आकाशं चैव भूतादिर्ग्रसते तं तथा महान् ॥
महान्तमेभिस्सहितं प्रकृतिर्ग्रसते द्विज ॥ (४-३२)

इत्यत्राकाशस्य भूताद्यहङ्कार एव लय उक्तः । मोक्षधर्म एव भृगु-भरद्वाजसंवादे (१८०) वार्ष्णोयाध्यात्मसंवादे (२१२ अ.) जनकयाज्ञ-वल्क्यसंवादे—आनुशासनिके नारदसनत्कुमारसंवादे (३९) रुद्रसन-कुमारसंवादे (१६६) याज्ञवल्क्यस्मृतौ (३-१७९-१८०) मनुस्मृतौ[1] महदहङ्कारयोर्लयसृष्टिप्रतिपादनात् यथोक्त एवार्थः । मनसी-त्यादि । मनसि । आकाशसंश्लिष्टेन्द्रियेषु 'व्यक्तसंलीने, इति अत्र व्यक्तपदं—

अष्टौ प्रकृतयः प्रोक्ता विकाराश्चापि षोडश ।
आसान्तु सप्त व्यक्तानि प्राहुरध्यात्मचिन्तकाः ॥
(शान्ति. ३१६—१०)

---

[1] अत्र याज्ञवल्क्यस्मृतौ—

निस्सरन्ति यथा लोहपिण्डात्तप्तास्स्फुलिङ्गकाः ।
सकाशादात्मनस्तद्वदात्मानः प्रभवन्ति हि ॥ (३-६६)
सर्गादौ स यथाकाशं वायुं ज्योतिर्जलं महीम् ।
सृजति . . . . . . . (६९)

इत्यनेन 'यथाऽग्नेः क्षुद्रा विष्फुलिङ्गा व्युच्चरन्ति एवमेतस्मादात्मनस्सर्वे प्राणास्सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि सर्व एत आत्मानो व्युच्चरन्ति, (बृ. ४-१ मा. पाठः) इति श्रुत्यर्थमुपक्रम्य—

बुद्धीन्द्रियाणि सार्थानि मनः कर्मेन्द्रियाणि च ।
अहङ्कारश्च बुद्धिश्च पृथिव्यादीनि चैव हि ॥
अव्यक्तमात्मा क्षेत्रज्ञः क्षेत्रस्यास्य निगद्यते ॥

अव्यक्तं च महांश्चैव तथाऽहङ्कार एव च।
पृथिवीवायुराकाशमापो ज्योतिश्च पञ्चमम् ॥
एताः प्रकृतयस्त्वष्टौ . . . . .।

इति जनकयाज्ञवल्क्यसंवादवचनेन महत्तत्त्वान्त सप्तलयप्रकरणान्तरानुरोधेन च महत्तत्त्वाहङ्कारद्वयपरम्। लयक्रमश्च इन्द्रियाणां भूताद्यहङ्कारे तस्य च महत्तत्त्वे इति बोध्यः। व्यक्ते अव्यक्तताम्। मूलप्रकृते-

---

बुद्धेरुत्पत्तिरव्यक्तात्ततोऽहङ्कारसम्भवः।
तन्मात्रादीन्यहङ्कारादेकोत्तरगुणानि तु ॥ (३-१७९)
शब्दस्स्पर्शश्च रूपं च रसो गन्धश्च तद्गुणाः।
यो यस्मान्निस्सृतश्चैषां स तस्मिन्नेव लीयते।
यथात्मानं सृजत्यात्मा तथा वः कथितो मया ॥

इति तदर्थं विशदीकृत्य—

यतो वेदाः पुराणानि विद्योपनिषदस्तथा।
श्लोकास्सूत्राणि भाष्याणि यच्चान्यद्वाङ्मयं क्वचित् ॥ (१८९)

इत्यत्र 'अस्य महतो भूतस्य निश्वसितं एतद्यदृग्वेदो यजुर्वेदो सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदश्श्लोकास्सूत्राणीति, (मै. ब्रा.) श्रुत्यर्थम्—

वेदानुवचनं यज्ञं ब्रह्मचर्यं तपो दमः।
श्रद्धोपवासस्स्वातन्त्र्यमात्मनो ज्ञानहेतवः ॥ (१९०)

इत्यत्र 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन, इति श्रुत्यर्थम्—

सर्वाश्रमैर्विजिज्ञास्यस्समस्तैरेवमेव तु।
द्रष्टव्यस्त्वथ मन्तव्यश्श्रोतव्यश्च द्विजातिभिः ॥ (१९१)

इत्यत्र—'आत्माऽवारे द्रष्टव्यश्श्रोतव्यो मन्तव्यो निदिध्यासितव्यः, इति श्रुत्यर्थम्—

य एवमेनं विन्दन्ति ये चारण्यकमाश्रिताः ।
उपासते द्विजास्सत्यं श्रद्धया परया युताः ॥
क्रमात्ते संभवन्त्यर्चिरहश्शुक्लं तथोत्तरम् ।
अयनं देवलोकं च सवितारं स वैद्युतम् ॥
ततस्तान्पुरुषोऽभ्येत्य मानसो ब्रह्म लौकिकान् ।
करोति पुनरावृत्तिस्तेषामिह न विद्यते ॥

इत्यत्र 'य एवमेतद्विदुः ये चामी अरण्ये श्रद्धाग् सत्यमुपासते तेऽर्चिरभिसम्भवन्ति' इत्यादि 'तेषां न पुनरावृत्तिः' इत्यन्तश्रुत्यर्थं च विशदीकुर्वन्याज्ञ्यवल्क्यः महत्तत्वाहङ्कारयोः (बृ) उपनिषत्तात्पर्यविषयत्वं प्राकाशयत् । एतेन उपनिषत्सु भूतमात्रोक्तिस्थलेऽपि महदादिभूतपर्यन्तं विवक्षितमिति सिद्धम् ॥

मनुस्मृतावपि—'मनसश्चाप्यहङ्कारम्' (१-१४) 'महान्तमेव चात्मानम्' इत्यत्र महत्तत्वाहङ्कारयोर्विवक्षा स्फुटा । आह च कुल्लूकभट्टोऽपि- 'भवन्तु च तत्त्वान्तराण्येव महदहङ्कारतन्मात्राणीति—

नारदसनत्कुमारसंवादे—(आनु)

त्रयोविंशतितत्त्वस्याव्यक्तस्य महामुने ।
प्रभवं चाप्ययं चैव श्रोतुमिच्छामि तत्त्वतः ॥ (म.भा.आ. ३८-२९).

इत्यादिना—अव्यक्तकार्यत्रयोविंशतितत्त्वप्रभवादिप्रश्नस्य—

यं विश्वमुपजीवन्ति यमाहुः पुरुषं परम् ।
तं वै श्रृणु महाबुद्धे नारायणमनामयम् ॥
एष नारायणो नाम यं विश्वमुपजीवति ।
एष स्रष्टा विधाता च भर्ता पालयिता प्रभुः ॥
प्राप्यैनं न निवर्तन्ते यतयोऽध्यात्मचिन्तकाः ।

इत्यादिना —

'विश्वमेवेदं पुरुषस्तद्विश्वमुपजीवति' इति श्रुत्यर्थोपक्रममुखेन सनत्कुमारप्रतिवचनेषु महत्तत्त्वाहङ्कारयोश्श्रुतितात्पर्यविषयत्वं स्पष्टम् ॥

रुद्रसनत्कुमारसंवादे––(आनु)

यदुक्तं भवता वाक्यं तत्त्वसंज्ञेति देहिनाम् ।
चतुर्विंशतिमेवात्र केचिदाहुर्मनीषिणः ॥ (१६६-२६)
केचिदाहुस्त्रयोविंशं यथाश्रुतिनिदर्शनात् ।
वयन्तु पञ्चविंशं वै तदधिष्ठानसंज्ञितम् ॥
तत्त्वं समधिमन्यामस्सर्वतत्त्वप्रलापनात् ।

इत्यत्र परावरयोरुभयोः पारमार्थ्यं परस्य लयाधारत्वम्—

एषा तत्त्वचतुर्विंशन्मया शास्त्रानुमानतः ।
वर्णिता तव देवेश पञ्चविंशसमान्विता ॥

इत्यन्ते अव्यक्तस्य चतुर्विंशतितत्त्वात्मकत्वं चोपपादितम् । अत्र यथाश्रुतिनिदर्शनादित्युक्तया मोक्षधर्मे जनकयाज्ञवल्क्यसंवादे परस्य पञ्चविंशत्वव्यपदशेस्य परजीवयोरपृथक्सिद्धिनिबन्धनत्वं प्रसाध्य महदहङ्कारादिसृष्टिमभिधाय––

चतुर्विंशतिरुक्तानि यथाश्रुतिनिदर्शनम् ।

इत्युपसंहारेण च चतुर्विंशत्यचित्तत्वानां श्रौतत्वं स्फुटम् ॥

वार्ष्णेयाध्यात्मसंवादे––

वासुदेवस्सर्वमिदं विश्वस्य ब्रह्मणो मुखम् ।
सर्गप्रळयकर्तारमव्यक्तं ब्रह्म शाश्वतम् ॥ (म. भा. शा. २१२-१०).
अव्यक्तकर्मता बुद्धिरहङ्कारं प्रसूयते ।
आकाशं चाप्यहङ्काराद्वायुराकाशसम्भवः ॥

इत्यत्र––भृगुभारद्वाजसंवादे––

कुतस्सृष्टमिदं सर्वं जगत् स्थावरजङ्गमम् ।

**श्चतुर्थावस्थां गुणसाम्यरूपाम् । गते [1]मूलप्रकृतेर्हि अविभक्ततमोऽवस्था । विभक्ततमोवस्था । अक्षरावस्था । अव्यक्तावस्था चेति चतस्रोऽवस्थाः । तथा च सौबालानां श्रुतिः 'अव्यक्तमक्षरे लीयते ।**

प्रळये च कमभ्येति तन्मे ब्रूहि पितामह ॥

इति प्रश्नप्रतिवचनभूते--

नारायणो जगन्मूर्तिरनन्तात्मा सनातनः ।
सोऽसृजत्प्रथमं देवो महान्तं नाम नामतः ॥
महान्ससर्जाऽहङ्कारं स चापि भगवानतः ।

इत्यत्र महत्तत्वाहङ्कारयोस्सृष्टिरुक्ता--' इतरेषां चानुपलब्धेः' (२-२) इति सूत्रन्तु महत्तत्त्वादिनिषेधकश्रुतिविरहेण (शं) परोक्तदिशा न महत्तत्वाहङ्कारयोः अप्रामाणिकत्वपरमिति श्रुतप्रकाशिकादौ व्यक्तम् । श्रुतयस्तु श्रीभाष्य एवोपन्यस्ताः ॥

[1]अत्र--मनसि व्यक्तसंलीने व्यक्ते चाव्यक्ततां गते ।

इत्युक्तया--

जगत्प्रतिष्ठा विप्रर्षे पृथिव्यप्सु प्रलीयते ।
ज्योतिष्यापः प्रलीयन्ते ज्योतिर्वायौ प्रलीयते ॥ (शं. २-३-१४).
खे वायुः प्रलयं याति मनस्याकाशमेव च ।
मनो हि परमं भूतं तदव्यक्ते प्रलीयते ॥
अव्यक्तं पुरुषे ब्रह्मन्निष्क्रिये संप्रलीयते ॥ (शं २-१-१)

इति (ना.) पूर्ववचनेषु (शं) परोदाहृतेष्वपि मनसः व्यक्तद्वार एव अव्यक्तेलयः, न तु साक्षादिति विवक्षितमिति सिद्धम् ॥

अत एव तत्रैव तत्पूर्ववचनेषु तस्मिन्नेवाध्याये—

द्विर्द्वा दशेभ्यस्तत्त्वेभ्यः ख्यातोऽन्यः पञ्चविंशकः ॥

इत्युक्तिस्सङ्गच्छते--'तत्त्वमेकः' इति मूलविवरणावसरे षड्विंशस्यपरत्वं स्थापयिष्यते ॥

अक्षरं तमसि लीयते। तमः परे देवे एकीभवति इति। सुबालोपनिषद्भाष्ये एतच्छ्रुतिविवरणावसरे व्यासार्याः "भूतलनिहितबीजस्थानीयमविभक्तं तमः। मृन्निस्सृतबीजवद्विभक्तं तमः। सलिलसंसृष्टार्द्रपृथ्व्यवबीजतुल्यमक्षरम् उच्छूनबीजसमानमव्यक्तम्। अङ्कुरस्थानीयो महानिति विवेकः" इति प्रतिपादयन्ति। अव्यक्त इत्यादि। पुरुषम्। जीवं। यस्यामवस्थायां गुणसाम्यमप्यस्फुटं तादृशाक्षरावस्थम्। चेतनसमष्टिगर्भमिति यावत्। 'अव्यक्तमक्षरे लीयते' इति श्रुत्यनुसारात्। श्रुतौ चाक्षरशब्द इत्थमेव विवृतो व्यासार्यैः। विवेचितश्चैतन्नयायसिद्धाञ्जनादिषु। एवञ्च—

प्रकृतिर्या मया ख्याताव्यक्ता व्यक्तस्वरूपिणी।
पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि॥

इति विष्णुपुराणवचनमपि सङ्गतम्। क्वचिच्चा'व्यक्तं पुरुषे याते' इत्यपि पाठः॥

ज्योतिष्यापः प्रलीयन्ते ज्योतिर्वायौ प्रलीयते।
खे वायुः प्रलयं याति मनस्याकाशमेव च॥ ७७-७॥
मनः प्रलीयते बुद्धौ[1] बुद्धिश्चात्मनि लीयते।
अव्यक्ते लीयते चात्मा अव्यक्तः पुरुषे परे॥

इति विष्णुधर्मोत्तरवचनात्सोऽपिसाधुः एतत्पाठेऽव्यक्तशब्दस्तमोऽवस्थापन्नप्रकृतिपरः। उदाहृतश्रुत्यनुसारात्। अस्मादपि 'अव्यक्ते पुरुषं याते' इति पाठ एव ज्यायान्। पुंसि। पुरुषसंयुक्ते पूर्वोक्ताक्षरावस्थे। सर्वगते।

---

[1] अत्र बुद्धिशब्दस्य महत्तत्वमर्थः—आत्मा च अक्षरावस्थप्रकृतिसंश्लिष्टः जीवः विवक्षितः॥

असतश्च सतश्चैव सर्वस्य प्रभवाप्ययात् ।
सर्वस्य च सदा ज्ञानात्सर्वमेतं प्रचक्षते ॥ ७० ॥

इत्युद्योगपर्वणि निर्वचनानुसारेण सर्वशब्दः परमात्मपरः ।परमात्मानं तमोद्वारा प्राप्त इत्यर्थः । तथा चानुपदं वक्ष्यते । 'तम एवाभवत्सर्वमि'ति । यद्वा—

अव्यक्तं पुरुषे ब्रह्मन्निष्क्रिये संप्रलीयते ।
नास्ति तस्मात्परतरः पुरुषाद्वै सनातनात् ॥ (३४७-३१ शान्ति.)

इति नारायणाख्यानवचनानुसारेण । 'अव्यक्तः पुरुषे परे' इति विष्णुधर्मोत्तरवचनानुसारेण च । 'अव्यक्ते पुरुषं याते' इत्यत्रापि पुरुषशब्दो वासुदेववचनः । अव्यक्तस्य पुरुषप्राप्तिश्चाक्षरतमोद्वारा विवक्षिता । तदेव विशदयति । पुंसि सर्वगतेऽपि च । तम एवाभवत्सर्वमित्यादिना । पुंसि सर्वगतेऽपि चेत्यस्य 'प्रकृतिर्या मयाऽऽख्याता' इति विष्णुपुराणोक्तदिशा वासुदेवे चिदचित्सामान्यलयाधारे चेत्यर्थः । अत्र सर्वपदेन चेतनस्यापि परिग्रहाद्वासुदेवस्याक्षरावस्था संबन्ध उक्तः । तम एवाभवत्सर्वमित्यस्य सर्वं चिदचिदात्मककार्यसामान्यं तम एवाभवत् अविभक्ततमोऽवस्थापन्नमेवाभवत् । किञ्चन । चिदचिदात्मककार्यवस्तुकिञ्चिदपि न प्राज्ञायत प्रकर्षेण नामरूपविभागवत्तया नाज्ञायेतत्यर्थः । एतेन तम एवाभवदित्यत्रैवकारेण न ब्रह्मणो व्यवच्छेदः । नापि चेतनस्य किन्तु नामरूपविभक्तस्य कार्यवर्गस्यैवेति बोधितम् । तदुक्तं विष्णुपुराणे—

नाहो न रात्रिर्न नभो न भूमि-
र्नासीत्तमो ज्योतिरभून्न चान्यत् ।
श्रोत्रादिबुद्ध्याऽनुपलभ्यमेकं
प्राधानिकं ब्रह्म पुमांस्तदासीत् ॥ इति ॥[1]

[1] तथा च सौबालश्रुतिः 'तमः परे देवे एकीभवति' इति ।

एतद्विवरणावसरे च सुबालोपनिषद्व्याख्याने व्यासार्याः 'सलिलविलीनलवण-चन्द्रकान्तस्थसलिलसूर्यकान्तस्थवह्निकल्पं परमात्मैकवेद्यमवतिष्ठते' इति। स्मृत्यधिकरणश्रुतप्रकाशिकायां च 'अत्रैक्यं ब्रह्मणः पृथग्व्यवहारानर्हावस्था। क्षीरे नीरस्येव; इति च प्रतिपादयन्ति। अत्र चतुर्मुखादीनामपि लयो विवक्षितः। यथोक्तं नारायणाख्याने पूर्वं 'किञ्च ब्रह्मा च रुद्रश्च' इत्यारभ्य 'प्रलयं न विजानन्ति आत्मनः परनिर्मितम्' इति। एवं बहुषु स्थलेषु द्रष्टव्यम्। एवञ्च 'ईश्वरो हि जगत्स्रष्टे' त्यादिना प्रस्तुतस्य जगत्स्रष्टुर्वासुदेवस्यैव सकल-चेतनाचेतनलयकारणत्वमित्युक्तं भवति। स्थितिकारणत्वं भूतान्तरात्मा वरद इत्यनेनोक्तम्। ततश्च जन्मस्थितिलयकारणं नारायण एव पर इति सिद्धम्। अत्र च सुबालोपनिषदेकार्थम् 'नासदासीन्नोसदासीत्तदानीम् 'नासीद्रजो नो व्योमापरो यत्' 'तम आसीत्तमसागूढमग्रे प्रकेतम्' इत्यादि ऋग्यजुर्वेदपठितं नासदासीयसूक्तमपि मूलम्।इदञ्च वृद्धहारीतेन (८-१२९) कृष्णार्चने विनियुक्तम्। एतेन 'नासदासीदिति जपेज्जुहुयाद्योगतत्परः। प्रजापते स्तुसायुज्यं द्वादशाब्दैस्समश्नुते, इति ऋग्विधाने प्रजापतिशब्दो यौगिको वासुदेववाचीति बोध्यम्। मनुरपि 'आसीदिदं तमो भूतम्' इत्यादिना अस्य नारायणपरतां प्राचीकशत्। व्यासोऽपि नारायणा-ख्यान एव पूर्वं श्रीकृष्णेन अर्जुनं प्रति ब्रह्मरुद्रजनकनारायणमहिम कथनावसरे "न वै रात्र्यान्न दिवसे न सति नासति न व्यक्ते न चाव्यक्ते व्यवस्थिते। एतस्यामवस्थायां नारायणगुणाश्रयादजरामरादतीन्द्रियादग्राह्यादसंभवात्सत्याद-हिंस्याल्लवादिभिरद्वितीयादप्रवृत्तिविशेषादवैरादक्षयादमरादजरादमूर्तितस्सर्वव्या-पिनस्सर्वकर्तुश्शाश्वतात्तमसः परात्पुरुषः प्रादुर्भूतोऽस्य पुरुषस्य ब्रह्मयाने-र्ब्रह्मणः प्रादुर्भावे हरिरव्ययो निदर्शनमप्यत्र भवति। नासीदहो न रात्रिरासीन्न सदासीन्नासदासीत्तम एव पुरस्तादभविष्यद्विश्वरूपं सा विश्वरूपस्य रजनी हि एवमस्यार्थोऽनुभाष्यते। तस्येदानीं तमस्संभवस्य पुरुषस्य ब्रह्मयोनेर्ब्रह्मणः प्रादुर्भावे स पुरुषः प्रजास्सिसृक्षमाण" इत्यनेनास्यसूक्तस्य नारायणपरतां

एतावता 'तमसा गूढमग्रे प्रकेतम्' (तै. ब्रा. २-८-९) इति श्रुत्यर्थ उक्तः — अथ (प) संहितानुसारेण 'प्रातरग्निम्' इत्याद्युत्तरश्रुतितात्पर्यविषय हयग्रीवावतारस्य सङ्कर्षणाद्यनन्तरकालिकतया 'तमसस्तन्महिनाजायतैकम्' इति श्रुत्यर्थमभिसन्धाय प्रथमतस्सङ्कर्षणाद्यवतारान् प्रदर्शयति। तमसो ब्रह्म संभूतमित्यादिश्लोकेन —

तमसो ब्रह्मसंभूतं तमो मूलामृतात्मकम् ॥ १६ ॥
तद्विश्वभावसंज्ञान्तं पौरुषीं तनुमाश्रितम्।
सोऽनिरुद्ध इति प्रोक्तस्तत्प्रधानं प्रचक्षते ॥ १७ ॥
तदव्यक्तमिति ज्ञेयं त्रिगुणं नृपसत्तम।

अत्र तमश्शब्दोऽविभक्ततमश्शरीरकपरमात्मपरः, देवमनुष्यादिशब्दवच्छरीरवाचकस्य तमश्शब्दस्यापि शरीरिणि पर्यवसानात्। तमसः परमात्मशरीरत्वं च सुबालोपनिषदि व्यक्तम्। यथा

---

प्राकाशयत्। 'नैवेह किञ्चनाग्र आसीत्' इति सौबालश्रुतेः 'एको ह वै नारायण आसीत्' इत्यादिमहोपनिषद्वाक्यस्य विश्वकर्मसूक्तादेश्चैककण्ठ्यान्नासदासीदिति सूक्तस्य श्रीपति परत्वमेव। मात्स्येऽपि —

महाप्रलयकाले तु एतदासीत्तमोमयम् ॥ २–२५ ॥
व्यञ्जयन्नेव तच्छीलं प्रादुरासीत्तमोनुदः।
अतीन्द्रियः परोऽव्यक्तादन्तर्यामी सनातनः।
नारायण इति ख्यातस्स एषस्वयमुद्बभौ ॥ २८ ॥ इति।

वचनानि चेममर्थं दृढीकुर्वन्ति। एवं 'तमो वा इदमग्र आसीदि' ति मैत्रायणीयश्रुतिरपि तम एवाभवत्सर्वमित्याद्यर्थे मूलामिति बोध्यम् ॥

'अव्यक्तमक्षरे लीयते, अक्षरं तमसि लीयते, तमः परे देव एकीभवति, इत्युक्तक्रमेण 'अव्यक्तं भिनत्ति अव्यक्तं भित्वाऽक्षरं भिनत्ति अक्षरं भित्वा मृत्युं भिनत्ति मृत्युर्वै परे देवे एकीभवति, इति परमात्मनैकीभूतत्वेन श्रुतस्य मृत्युशब्दवाच्यस्य तमसः 'यस्याव्यक्तं शरीरम्, यस्याक्षरं शरीरम्' इत्यनन्तरं 'यस्य मृत्युश्शरीरम्' इत्यनेन परमात्मशरीरत्वप्रतिपादनात्। अत एव स्मृत्यधिकरणटीकायाम्—

ततस्स्वयम्भूर्भगवानव्यक्तो व्यञ्जयन्निदम्।
महाभूतादिवृत्तौजाः प्रादुरासीत्तमोनुदः ॥

इति मनुवचने तमोनुदः अव्यक्तः इति शब्दाभ्यां तमःप्रेरकस्य तच्छरीरिण एवाऽव्यक्तशरीरकत्वकथनमपि संगच्छते। तमसो भगवच्छरीरत्वं 'सोऽभिध्याय शरीरात्स्वादि' ति मनुवचनेऽपि स्पष्टम्। तमोनुद इत्यस्य प्रथमान्तता मनुवचनव्याख्यातृभिर्मेधातिथिकुल्लूकभट्टादिभिस्सर्वैरप्यङ्गीकृता[1]। ब्रह्मसंभतमिति विभक्ततमोऽक्षरशरीरकं ब्रह्म संजातमित्यर्थः 'तमसस्तन्महिनाजायत' इति श्रुतिर्न तमोमात्रादुत्पत्तिपरा किन्तु तच्छरीरकाद्ब्रह्मणः 'तमसा गूढमग्रे प्रकेतम्' इति पूर्वमाम्नानादिति दर्शयति। तमोमूलामृतात्मकामिति। मूलं 'योह वा उपरिस्थश्श्रूयते 'ऊर्ध्वमूलं त्रिपाद्ब्रह्म' इत्यादि श्रुतिप्रसिद्धं अमृतम् 'एतदमृतमेतदभयमेतद्ब्रह्म' इत्यादि श्रुतिप्रसिद्धम् वासुदेवरूपम् परं ब्रह्म आत्मा। अन्तः प्रविश्य नियन्ता। यस्य तथाभूतम् एतेन 'यस्य मृत्युश्शरीरम्' इति सौबालश्रुत्यर्थ उक्तः।

---

[1]एवंस्थिते श्रीकण्ठानुयायिभिः कैश्चित् (अ-दी-शि-त-वि) तमोनुद इत्यस्य नुदधातोः क्विपि पञ्चम्यन्ततामाश्रित्य तमःप्रेरकशिवान्नारायणस्योत्पत्तिरत्र विवक्षितेत्युक्तिर्दुराग्रहमूलैवेति विभावनीयम्। अत एव मनुस्मृतौ 'प्रादुरासीत्तमोनुद इत्यनन्तरं 'स एष स्वयमुद्बभौ' इत्युत्पत्तेरनन्याधीनत्वोक्तिस्सङ्गच्छते। एवमुदाहृतमात्स्यवचनेष्वपि ॥

तमसो वासुदेवशरीरत्वकथनेन ‘तमसस्तन्महिनाजयतैकम्’ ‘तमसो ब्रह्मसंभूतम्’ इति श्रुतितदुपबृंहणयोर्वासुदेवादेवोत्पत्तिर्विवक्षितेति बोधितम्। तदित्यादि तत् मूलामृतम् ब्रह्म। विश्वभावसंज्ञान्तमित्यत्र भावशब्दः ‘भावस्सत्तास्वभावाभिप्रायचेष्टात्मजन्मसु’ इति कोशादात्मवाची विश्वभावसंज्ञा अन्ते यस्य तदिति विग्रहः माण्डूक्यादिषु प्रणवघटकार्धमात्रामकारोकाराकारविवरणावसरे उक्ताः यास्तुरीयप्राज्ञतैजसविश्वसंज्ञास्तत्प्रतिपाद्यमितियावत्॥

वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धानामेवैतास्संज्ञा इति (१२९) प्रागेव निरूपितम्। अयश्चार्थः—

अनादिनिधनश्श्रीमान्हरिर्नारायणः प्रभुः। इत्यादौ—

तं विश्वभूतं विश्वादिं परमं विद्धि चेश्वरम्॥७८६–१३॥

इत्यन्ते—

मूलस्थायी स भगवान् स्वेनानन्तेन तेजसा।
तत्स्थस्सृजति तान् भावानात्मरूपान्महामनाः॥६१॥

इत्यादौ ‘स चानिरुद्धस्सृजते महात्मा’ इत्यन्ते च मोक्षधर्मे पूर्वं सङ्ग्रहेणोक्तः। एतेन वासुदेवस्य कथं सर्वजगत्स्रष्टृत्वं अनिरुद्धस्य चतुर्मुखसर्गकर्तृत्वादिति शङ्का व्युदस्ता॥

‘पौरुषीं तनुमाश्रित’मिति–एतेन मूर्तिभेदेन संज्ञाभेदः वस्तुतो व्यक्तिरेकैवेति बोधितम्। तदेवाह। सोऽनिरुद्ध इत्यादिना। सः वासुदेव एव अनिरुद्ध इति प्रोक्तः॥

ननु पूर्वं ‘तम एवाभवत्सर्वं’ तमसो ब्रह्मसम्भूतमित्यादिना तमस एवोपादानकारणत्वं प्रतीयते श्वेताश्वतरप्रथमध्याये ‘किङ्कारणं ब्रह्मे’ त्यारभ्य मध्ये ‘क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः’ इति अन्ते च ‘सर्वं प्रोक्तं त्रिविधं ब्रह्म मेतत्’ इति

चोक्त्या प्रधानचेतनशरीरकब्रह्मण उपादानकारणता प्रतीयते इति मन्दानां विरोधशङ्कायां तमसः अक्षरस्य अव्यक्तस्य च अवस्थाविशेषविशिष्टप्रधानरूपतया तच्छरीरक एव तमश्शरीरक इत्यभिप्रायवानाह । तत्प्रधानमित्यादि । तत् तमश्शरीरकं वासुदेवरूपं ब्रह्म प्रधानम् प्रधानशरीरकम् प्रचक्षते श्वेताश्वतरा इति शेषः । तत्र चेतनान्तर्भावं व्यञ्जयति । तदव्यक्तमिति । अत्र तच्छब्दः पूर्ववत् । अव्यक्तम् । अव्यक्तशरीरकम् ज्ञेयं इदमुपलक्षणमक्षरस्यापि । तथा चाक्षरावस्थायां चेतनान्तर्भावान्न विरोध इति भावः । त्रिगुणम् सत्त्वरजस्तमोगुणत्रयवत् अस्य चाव्यक्तपदार्थविशेषणाव्यक्तेऽन्वयः । भगवान्नृसिंहश्श्वेतः गौर आत्रेयः पण्डित इत्यादौ श्वेतगौरपदार्थवदिति भावः । त्रिगुणशरीरकपरता तु न युक्ता तत्प्रधानं तदव्यक्तमितिवत् तत्त्रिगुणमिति शैलीविरहात् । त्रिगुणपदेन गुणसाम्यावस्थमव्यक्तमिति सूचितम् । यद्वा तत्प्रधानमित्यस्य वासुदेव एव मुख्यः मूलभूत इत्यर्थः । तत्र हेतुः तदव्यक्तमिति ज्ञेयमिति । उक्तं चाहिर्बुध्न्येन—

सङ्कर्षणादिभूम्यन्तमञ्जनं विगतं यतः ।
तदव्यक्तमिति ज्ञेयम् . . . . ॥ इति ४-७१ ॥

अव्यक्तत्वादेव प्राधान्यमिति भावः । तर्हि कथं सृष्ट्यादिकमिति शङ्कायामाह । त्रिगुणमिति । व्यूहमुखेन गुणत्रयाधिष्ठातृ इत्यर्थः ॥[1]

---

[1] उक्तं च मोक्षधर्म एव 'पञ्चविंशतिमो विष्णुरित्यादि—

निर्गुणं चेश्वरं नित्यमधिष्ठातारमेव च ।
प्रकृतेश्च गुणानां च पञ्चविंशतिकं बुधाः ॥ इति ॥
कथं गुणा भविष्यन्ति निर्गुणत्वान्महात्मनः ।

इति प्रश्नप्रतिवचनेषु—

पञ्चविंशतिमस्तात लिङ्गेषु नियतात्मकः ।

अनादिनिधनोऽनन्तस्सर्वदर्शी निरामयः ॥
केवलंत्वभिमानित्वाद्गुणेष्वगुण उच्यते ॥ ३१०–२९ ॥

इति च । एतेन तमोरजस्सत्वाधिष्ठातारस्सङ्कर्षणप्रद्युम्नानिरुद्धा इति सूचितम् । अयमर्थो मैत्रायणीये स्पष्टः । तथाहि तत्र द्वितीयप्रपाठके "यो ह वावो-परिस्थश्श्रूयते गुणेष्वेवोर्ध्वरेतसः स वा एष शुद्धः पूतश्शून्यश्शान्तोऽप्राणो निरात्माऽनन्ताऽक्षय्यःस्थिरश्शाश्वतोऽजस्स्वतन्त्रस्स्वेमहिम्नितिष्ठतीत्यनेनेदं शरीरं चेतनवत्प्रतिष्ठापितं प्रचोदयिता वैषोऽस्येति । ते होचुर्भगवन् कथमनेना निष्ठेनैतद्विधमिदं चेतनवत्प्रतिष्ठापितं प्रचोदयिता वैषोऽस्य कथमिति तान् होवाच । स वा एष सूक्ष्मोऽग्राह्योऽदृश्यः पुरुषसंज्ञोऽबुद्धिपूर्वमिहैवावर्ततेंऽ-शेनेति । सुप्तस्येवाबुद्धिपूर्वं विबोध एवमिति । अथ यो ह खलु वा वैतस्य सोंशोऽयं यश्चेतामात्रः प्रतिपुरुषः क्षेत्रज्ञःसङ्कल्पाध्यवसायाभिमानलिङ्गः प्रजापतिर्विश्वाख्यश्चेतनेनेदं शरीरं चेतनवप्रतिष्ठापितं प्रचोदयिता वैषोप्यस्येति। ते होचुर्भगवन् यद्यनेनेदृशेनानिष्ठेनैतद्विधमिदं चेतनवत्प्रतिष्ठापितं प्रचोदयिता वैषोऽस्य कथमिति । तान् होवाचेति प्रजापतिर्वा एकोऽग्रेऽतिष्ठत्सनारमतैक-स्सोत्मानमभिध्यात्वा बह्वीः प्रजा असृजत" इति। पञ्चमे च "तमो वा इदमग्र आसीदेकं तत्परे स्यात्तत्परेणेरितं विषमत्वं प्रयात्येतद्रूपं वैरजः तद्रजः खल्वी-रितं विषमत्वं प्रयात्येतद्वै सत्त्वस्य रूपम् । तत्सत्वमेवेरितं रसस्संप्रास्रवत् । सोंशोऽयं यश्चेतामात्रः प्रतिपुरुषः क्षेत्रज्ञस्सङ्कल्पाध्यवसायाभिमानलिङ्गः प्रजा-पतिर्विश्वेत्यस्य प्रागुक्तास्तनवः । अथ यो ह खलु वाऽस्य तामसोंशोऽसौ सब्रह्म-चारिणो योऽयं रुद्रोऽथ यो ह खलु वा वाऽस्य राजसोंशोऽसौ सब्रह्मचारिणो योऽयं ब्रह्माऽथ यो ह खलु वा वाऽस्य सात्त्विकोंऽशोऽसौ सब्रह्मचारिणो योऽयं विष्णुस्स वा एष एकस्त्रिधा भूतोऽष्टधैकादशधाद्वादशधाऽपरिमितधा वोद्भूत उद्भूतत्वाद्भूतं भूतेषु चरति प्रविष्टस्स भूतानामाधिपतिर्बभूवेत्यसावात्माऽन्तर्ब हिश्च" इति अत्र द्वितीये 'यो ह वाव उपरिस्थःश्रूयते' इत्यत्र उपरिस्थो वासु देवः 'गुणेष्वेवोर्ध्वरेतस इत्यत्र गुणपदं 'तमो वा इदमग्र आसीदेकमि' ति

पञ्चमोक्ततमोरजस्सत्त्वगुणपरम्, तमोरजस्सत्त्वगुणाधिष्ठातारस्सङ्कर्षणप्रद्युम्ना-निरुद्धा एवोर्ध्वरेतसः 'ऊर्ध्वं मूलं त्रिपाद्ब्रह्म' इति तत्रैव षष्ठे—

चाक्षुषस्स्वप्नचारी च सुप्तस्सुप्तात्परश्च यः ।
भेदाश्चैतेऽस्य चत्वारस्तेभ्यस्तुर्यं महत्परम् ।
त्रिष्वेकपाच्चरेद्ब्रह्म त्रिपाच्चरति चोत्तरे ॥ इति ।

सप्तमान्तेऽप्ययमर्थः स्फुटः । द्वितीये—'शुद्धः पूत' इत्यादिना वासुदेव-स्वरूपं विशदमुक्तं पुरुषसंज्ञोऽपि स एव । 'अबुद्धिपूर्वं' मित्यस्य महत्तत्त्वा-पूर्वकमित्यर्थः । प्राकृतशरीराणां परंपरया महत्तत्त्वपरिणामपूर्वकतया तदभाव-कथनेन सङ्कर्षणादिविग्रहाणामप्राकृतत्वं सिद्ध्यति । एकस्यैव पुंसस्सुकृत-वशादुत्कृष्टशरीरधारिणः दुष्कृतवशान्निकृष्टशरीरान्तरपरिग्रहवत् अत्रापि किं न स्यादिति शङ्कामपनुदति । 'सुप्तस्येवे' त्यादि । सुप्तस्य विबोधानन्तरमपि पूर्वं यत्तदेव शरीरमिति 'स एव तु कर्मानुस्मृतिशब्दविधिभ्यः' इति सूत्रे स्थापितम् । प्राकृतलयकाले सङ्कर्षणादीनामपि लयस्य 'नासदासीदि'ति श्रुतितात्पर्यविषयताया अहर्बुध्न्यादिभिरुक्ततया प्राकृतप्रलयकालो रात्रिकाल एव सुषुप्तिकालः प्राकृतसृष्टिकाले च सङ्कर्षणादिसृष्टेः 'नैवेह किञ्चनाग्र आसीत्' इत्यादिबृहदारण्यकादावपि व्यक्ततया स एवोद्बोधकालः प्राकृतप्रलयसृष्टिकालयो रात्र्यहोरूपत्वं विष्णुपुराणादिषु स्पष्टम् । अतश्च यथोक्त एवार्थः । एवं 'रात्रिया अह्न आसीत्प्रकेतः' इति नासदासी-दिति सूक्तेऽपि । पञ्चमे चेतामात्रः ज्ञानाश्रय एव, प्रतिपुरुषः सर्वानुगतः प्रतिनिधिर्वा पुरुषः क्षेत्रज्ञः वासुदेवः, 'सर्वावासं वासुदेवं क्षेत्रज्ञं विद्धि तत्त्वतः' इति मोक्षधर्मोक्तेः । 'सङ्कल्पाध्यवसायाभिमानलिङ्गः' इत्यत्र सङ्कल्पपदं तदाश्रयजीवपरम् । अध्यवसायपदं मनःपरम् अभिमानपदञ्चा-हङ्कारपरमिति बोध्यम् । 'प्रजापतिर्विश्वाख्यः' इत्यत्रानिरुद्धो विवक्षितः । 'सोंऽशोऽयमि' त्यादिपञ्चमप्रपाठकवाक्यस्याप्येवमेवार्थः पञ्चमे 'विश्वेत्यस्य

प्रागुक्ता एतास्तनव' इति वाक्यस्यायमेवार्थः प्राक् चतुर्थप्रपाठके 'अग्नि-र्वायुरादित्यः कालो यः प्राणोऽन्नं ब्रह्म रुद्रो विष्णुरित्येकेऽन्यमभिध्यायन्त्ये-केऽन्यं श्रेयः कतमो यस्सोऽस्माकं ब्रूहीति । तान् होवाचेति । ब्रह्मणो वा वैता अग्र्यास्तनवः परस्यामृतस्याशरीरस्यैव लोके प्रतिमोदतीह यो यस्यानुषक्त इत्येवं ह्याह । ब्रह्म खल्विदं वाव सर्वं यावाऽस्या अग्र्यास्तनवस्ता अभिध्यायेदर्चयेन्निहनुयाच्चातस्ताभिस्सहैवोपर्युपरिलोकेषु चरत्यथ कृत्स्नक्षय एकत्वमेति पुरुषस्य पुरुषस्य' इत्यत्रोक्ता अग्न्यादित्यादितनवः ब्रह्माण्डा-न्तर्वर्तिन्यः एताः 'यो ह खलु वावाऽस्य तामसोंश' इत्यादिना वक्ष्यमाण-रुद्रब्रह्मविष्णुतनवः । यद्वा एताः सङ्कर्षणप्रद्युम्नानिरुद्धतनवः अत्र तमोरजस्सत्त्वगुणाधिष्ठातृंसङ्कर्षणप्रद्युम्नानिरुद्धानुक्त्वा अनन्तरं रुद्रब्रह्म-विष्णूनां तमोरजस्सत्त्वगुणाधिष्ठातृत्वकथनेन गुणत्रयमूलसृष्टिस्थितिलयांशे सङ्कर्षणप्रद्युम्नानिरुद्धानां द्वारित्वं रुद्रब्रह्मविष्णूनां द्वारत्वञ्च बोधितमिति व्यासस्याशयः 'यो ह खलु' इत्यादि (१७६) श्रुतेरुपबृंह्मणानि (५७) पूर्वमुदा-हृतानि ॥

नारायणोपनिषदि—'अथ पुरुषो ह वै नारायणोऽकामयत प्रजास्सृजे-येती' त्युपक्रम्य 'नारायणाद्ब्रह्मा जायते नारायणाद्रुद्रो जायते' इति कर्मकृतो-त्पत्तिमभिधाय 'निष्कलङ्को निरञ्जनो निर्विकल्पो निराख्यातश्शुद्धो देव एको नारायणः न द्वितीयोऽस्तिकश्चित्' इत्यनेन नारायणस्य कर्मसंबन्धगन्धाविधु-रत्वमुपपाद्य 'य एवं वेद स विष्णुरेव भवती' ति यथाक्रतुन्यायेन विष्णो-र्नारायणाभेदं प्रकाश्य प्राप्यत्वमुक्तम् । एतत्तात्पर्यसूचनायैवात्रत्यवचनेषु सृज्य-कोटौ विष्णोरनुक्तिः । तदुक्तं ब्रह्मवैवर्त्ते—

निर्गुणः परमात्मा च य ईशः प्रकृतेः परः ।

इत्युपक्रम्य—

य ईशस्त्रिविधाम्मूर्तिं विधत्ते सृष्टिकर्मणि ।
सृष्टिस्थित्यन्तजननीं ब्रह्मविष्णुशिवाभिधाम् ॥ ४–४१–६४ ॥

ब्रह्मा च ब्रह्मलोकस्थो विष्णुः क्षीरोदवासकृत् ।
शिवः कैलासवासी च सर्वाः कृष्णविभूतयः ॥ ६५ ॥
श्रीकृष्णश्च द्विधा भूतो द्विभुजश्च चतुर्भुजः ।
चतुर्भुजश्च वैकुण्ठे गोलोके द्विभुजस्स्वयम् ॥ ६६ ॥
तस्य देवस्य तेंशाश्च ब्रह्माविष्णुमहेश्वराः ।
महाविष्णुस्स विज्ञेयश्श्रीकृष्णष्षोडशांशकः ॥
नाभिपद्मोद्भवो ब्रह्मा तस्यैव जलशायिनः ।
फालोद्भवस्तस्य स्रष्टुश्शङ्करश्चन्द्रशेखरः ॥ ७० ॥

इति ब्रह्मखण्डोपक्रमवचनानि चादावेवोदाहृतानि । कूर्मपुराणेऽप्ययमर्थः स्फुटः॥

यथा द्वितीये—
अहं नारायणो देवः पूर्वमास न मे परम् ।
चतुर्मुखस्ततो जातो ब्रह्मा लोकपितामहः ॥
रुद्रः क्रोधात्मको जज्ञे शूलपाणिस्त्रिलोचनः ॥

इति सप्तदशे च—
यस्मादभिन्नं सकलं भिद्यते योऽखिलादपि ।
स वासुदेवो देवानां मातुर्देहं समाविशत् ॥
न यस्य देवा जानन्ति स्वरूपं परमार्थतः ।
स विष्णुरदितेर्देहं स्वेच्छयाऽद्य समाविशत् ॥

इत्युपक्रम्य—
यस्य सा तामसी मूर्तिश्शङ्करो राजसी तनुः ।
ब्रह्मा सञ्जायते . . . . . . . . . . ॥

इत्यनेन रुद्रब्रह्मणोः कर्मकृतोत्पत्तिं 'विष्णुरंशेनैकेन सत्वधृक्' इत्यनेन विष्णोरकर्मकृतावतारत्वमपि व्यञ्जयित्वा उदाहृताथर्वशिखामैत्रायणीय-श्रुतितात्पर्यनिष्कर्षः कृतः । मात्स्ये च—

महाप्रलयकाले तु एतदासीत्तमोमयम् ।

इत्युपक्रम्य—

प्रविश्यान्तर्महातेजास्स्वयमेवात्मसंभवम् ।
प्रहाय मात्स्यमव्यक्तं विष्णुत्वमगमत्पुनः ॥
वासुदेवो जगत्सूतिस्तस्य सम्भूतयो ह्यमी ।
ब्रह्मा विष्णुश्च भगवान्मार्ताण्डो वृषवाहनः ॥
अष्टौ च वसवस्तद्वदेकादशगणाधिपाः ।
द्वादशैव तथाऽऽदित्याःपितरो मातरस्तथा ॥
इमा विभूतयःप्रोक्ताश्चराचरसमन्विताः । इति ।

बृहन्नारदीये च—

नारायणोऽक्षरोऽनन्तस्सर्वव्यापी निरञ्जनः ।
तेनेदमखिलं व्याप्तं जगत्स्थावरजङ्गमम् ॥
आदिसर्गे महाविष्णुस्स्वप्रकाशो जगन्मयः ।
गुणभेदमधिष्ठाय मूर्तित्रयमवाप्तवान् ॥
सृष्ट्यर्थमसृजद्देवो दक्षिणाङ्गात्प्रजापतिम् ।
मध्येरुद्राख्यमीशानं जगदन्तकरं मुने ॥
पालनायास्य जगतो वामाङ्गाद्विष्णुमव्ययम् । इत्यादि ।

विष्णुधर्मोत्तरे च—

नारायणोऽस्य जगतस्सृष्टिसंहारकारणम् ।
करोति जगतीपाल . . . . ॥

इत्युपक्रम्य—

वेदेषु गीयते योऽसौ पुरुषः पञ्चविंशकः ।
अनादिनिधनो धाता त्वनन्तः पुरुषोत्तमः ॥
असक्तं सर्वभुक्चैव निर्गुणं गुणभोक्तृ च ।
तञ्च प्राप्य भवन्तीह ये मुक्ताः पुरुषोत्तमाः ॥

अण्डो हिरण्मयो राजंस्तस्यान्तस्स्वयमेव हि ।
शरीरग्रहणं पूर्वं सृष्ट्यर्थं कुरुते प्रभुः ॥
ब्रह्मा चतुर्मुखो देवो रजोमात्राधिकस्सदा ।
सृष्टिं कृत्वा स भगवान् सात्त्विकीमास्थितस्तनुम् ॥
लक्ष्मीसहायो लोकांस्तु सर्वान्पालयते सदा ।
अन्तकाले हरो भूत्वा जगत्संहरते पुनः ॥
तामसीं तनुमास्थाय लीलयैव महायशाः । इति ।

विष्णुपुराणेऽपि—

जुषन् रजोगुणं तत्र स्वयं विश्वेश्वरो हरिः ।
ब्रह्माभूत्वाऽस्य जगतो विसृष्टौ संप्रवर्तते ॥
सृष्टं च पात्यनुयुगं यावत्कल्पविकल्पना ।
सत्वभृद्भगवान्विष्णुरप्रमेयपराक्रमः ॥
तमोद्रेके च कल्पान्ते रुद्ररूपी जनार्दनः ।
मैत्रेयाखिलभूतानि भक्षयत्यत्ति भीषणः ॥
सृष्टिस्थित्यन्तकरणाद्ब्रह्मविष्णुशिवात्मिकाम् ।
स संज्ञां याति भगवानेक एव जनार्दनः ॥ इति ।

'ब्रह्मादक्षादयः कालः' 'विष्णुर्मन्वादयः कालः' 'रुद्रः कालान्तकाद्याश्च' 'जनार्दनविभूतयः' इति च ॥

मैत्रायणीये पञ्चमे—रुद्रादीनां तमोगुणाद्यधिष्ठातृत्वकथनेन सकलचेतनानां द्वितीयप्रपाठकोक्ततामसादिगुणसमृद्धौ रुद्रादय एव निदानभूता इति बोधितम् । एतच्च 'यत्किञ्चिदिह लोके वै' इति श्लोकविवरणे निरूपितम् । एतच्छ्रुतितात्पर्येणैव हयशिरउपाख्यानानन्तराध्याये 'तिस्रः प्रकृतयो राजन्नि' त्युपक्रम्य—

जायमानं हि पुरुषं यं पश्येन्मधुसूदनः ।
सात्त्विकस्स तु विज्ञेयस्स वै मोक्षार्थचिन्तकः ॥

पश्यत्येनं जायमानं ब्रह्मा रुद्रोऽथवा पुनः ।
रजसा तमसा चास्य मानसं समभिप्लुतम् ॥

इत्युक्तम् इत्याचार्यसूक्तिषु व्यक्तम् । वाराहवचनानि च स्तोत्रभाष्यादावुदाहृतानि । यथा वाराहे चागस्त्यं प्रति रुद्रः—

नारायणः परो देवस्सर्वरूपो जनार्दनः ।
त्रिधाऽत्मानं स भगवान् ससर्ज परमेश्वरः ॥
रजस्तमोभ्यां युक्तोऽभूत्परस्सत्वाधिको विभुः ।
ससर्ज नाभिकमलाद्ब्रह्माणं कमलासनम् ।
रजसा तमसा युक्तस्सोऽपि मामसृजद्विभुः ।
यस्सत्वं स हरिर्देवो यो हरिस्तत्परं पदम् ॥
सत्वेन मुच्यते जन्तुस्सत्वं नारायणात्मकम् ॥ इत्यादि ।
विष्णुरेव परं ब्रह्म त्रिभेदमिह पठ्यते ।
वेदसिद्धान्तमार्गेषु तन्न जानन्ति मोहिताः ॥ इति ।
नारायणत्परो देवः न भूतो न भविष्यति ।
एतद्रहस्यं वेदानां पुराणानां च सत्तम ॥

इति विष्णुं प्रति रुद्रवचनम् । धरण्युवाच—

परमात्मा शिवः पुण्य इति केचिद्ध्रुवं विदुः ।
अपरे विष्णुमीशानमिति केचिच्चतुर्मुखम् ॥
एतेषां कतमो देवः परः को वाथवाऽपरः ।
एतदेव ममाचक्ष्व परं कौतूहलं च मे ॥

वराह उवाच—

परो नारायणो देवस्तस्माज्जातश्चतुर्मुखः ।
तस्माद्रुद्रोऽभवद्देवि स च सर्वज्ञतां गतः ॥ इति ।

अथ पराशरसंहितोक्तदिशा व्यूहानन्तरहयग्रीवावतारं 'प्रातरग्निम्' इत्यादिश्रुतितात्पर्यविषयं वक्तुमुपक्रमते "तमिद्गर्भं प्रथमं दध्र आपो यत्र देवास्समगच्छन्त विश्वे । अजस्य नाभावध्येकमर्पितं यस्मिन् विश्वानि भुवनानि तस्थुः । न तं विदाथ य इमा जजानान्यद्युष्माकमन्तरं बभूव । नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरन्ति" इति ऋग्वेदे (८-३-१७) द्वितीयविश्वकर्मसूक्ते श्रूयते । तत्र 'अजस्य नाभावध्येकम्' इत्यत्र एकमित्यस्य पुष्करपरत्वं 'अजस्य नाभावध्येकं यस्मिन् विश्वं प्रतिष्ठितम् । पुष्करं पुष्कराक्षस्य तस्मै पद्मात्मने नमः ॥' (४-६-६२) इति वचनेन स्थापितम् । 'अजस्य नाभाविति यस्य नाभेरभूच्छुतेःपुष्करं लोकसारम् । तस्मै नमो व्यस्तसमस्तविश्वविभूतये विष्णवे लोककर्त्रे' इति स्कान्दवचनमप्येतदेव दृढीकरोति । 'आपो वा इदमासंत्सलिलमेव । स प्रजापतिरेकः पुष्करपर्णे समभवत्' इति श्रुत्यन्तरानुसाराच्चायमेवार्थो युक्तः । यजुर्वेदिनां (४-६-२) विश्वकर्मसूक्ते तु—'अजस्य नाभावध्येकमि'ति मन्त्रानन्तरं 'विश्वकर्मा ह्यजनिष्टदेव आदिद्गन्धर्वो अभवद्द्वितीयः' इति मन्त्रः पठितः । अत्र गन्धर्वपदं हयवाचकम् । शिरस एव प्राधान्याद्धयशिरःपरम् । ऋग्वेदिनामेतन्मन्त्राभावेऽपि प्रथमविश्वकर्मसूक्तान्ते 'वाचस्पतिं विश्वकर्माणमूतये' इति मन्त्रपाठेन 'न तं विदाथय इमा जजानान्यद्युष्माकमन्तरं बभूव' इति

---

तत्रैवान्यत्र—

अन्त्ये युगे प्रविरला भविष्यन्ति मदाश्रयाः ।
एषमोऽहं सृजाम्याशु योजनं मोहयिष्यति ॥

इत्यादीनि । एवमुत्तररामायण, हरिवंश, लैङ्गादिवचनान्यनुसन्धेयानि । अन्यत्सर्वं प्राचां ग्रन्थेष्वेव निरूपितामिति विरम्यते विस्तरभिया ॥ १७ ॥

द्वितीयविश्वकर्मसूक्तान्तमन्त्रे दुर्विज्ञेयो वाचस्पतिर्हयशिरा एव विवक्षित इति तत्राप्ययमर्थोऽभिप्रेतः। अतश्च पाद्मकल्पे हयशिरोऽवतार इत्यभिप्रयन् तत्र प्रथमतः शक्तेः तत्संबन्धविरहिणश्च न सर्वस्मात्परत्वं किन्तु शक्तिविशिष्टस्यैवेति प्रतिपादयति—

**विद्यासहायवान्देवो विष्वक्सेनो हरिः प्रभुः ॥ १८ ॥**

**आदिकर्ता स भूतानामप्रमेयो हरिः प्रभुः ।**

**अप्स्वेव शयनं चक्रे निद्रायोगमुपागतः ॥ १९ ॥**

**जगतश्चिन्तयन् सृष्टिं चित्रां बहुगुणोद्भवाम् ।**

विद्यासहायवानिति । विद्या लक्ष्मीः सहायः पत्या सह सृष्टिस्थितिलयादिकार्येषु अयते, एतेति वा गच्छतीति सहायः विद्या चासौ सहायश्चेति कर्मधारयः तद्वान् नित्ययोगे मतुप् । अत्र—

मा च विद्या हरेः प्रोक्ता तस्या ईशो यतो भवान् ।
तस्मान्माधवनामासि धवस्स्वामीति शब्दितः ॥

इति हरिवंशे कृष्णं प्रति रुद्रवचने स्थानप्रमाणेन विद्याशब्दार्थो लक्ष्मीरिति वेदान्तकौस्तुभकृतः ॥

वस्तुतस्तु नारायणाख्यान एव पूर्वं नारदकृतपाञ्चरात्रिकस्तुतौ 'लक्ष्म्यावास, विद्यावास, कीर्त्यावास, श्रीवास' इत्यत्र लक्ष्मीवाचकशब्दानां प्रायपाठात्। पाद्मपुराणे (२५५) 'लक्ष्मीः श्रीः कमला विद्या मा च विष्णुप्रिया सती' (२३) इति लक्ष्मीनामसु विद्याशब्दपाठाच्च विद्याशब्दो लक्ष्मीपरः । कीर्तिशब्दस्य लक्ष्मीपरत्वम् 'कीर्तिश्श्रीर्वाक्च नारीणाम्' इति गीतातात्पर्यचन्द्रिकायां स्फुटम् । विद्याशब्दस्य भगवच्छक्तिषु प्रचुरतरप्रयोगाः पाञ्चरात्रलक्ष्मीतन्त्रस्थाः घर्मसूक्तविवरणेऽस्माभिरुदाहृताः ॥

तदाहुराचार्याश्चतुश्श्लोकीभाष्ये 'रहस्याम्नाये तु प्रकृतौ लक्ष्म्याश्च विद्याशब्दः प्रयुक्तः' इति । लक्ष्मीवाचकप्रसिद्धपदपरित्यागेन विद्याशब्दं प्रयुञ्जता व्यासेन श्रुतिपञ्चरात्रयोरैकरस्यं दृढीकृतम्[1] ॥

---

[1] दृढीकृतमिति—नृसिंहपूर्वतापनीये—'आपो वा इदमासंत्सलिलमेव स प्रजापतिरेकः पुष्करपर्णे समभवत् । तस्यान्तर्मनासि कामस्समवर्तत इदगँ सृजेयमिति' इत्युपक्रमः । तृतीये च—"देवा ह वै प्रजापतिमब्रुवन्नानुष्टुभस्य मन्त्रराजस्य नारसिंहस्य शक्तिं बीजञ्च नो ब्रूहि भगव इति । स हो वाच प्रजापतिर्माया वा एषा नारसिंही सर्वमिदं सृजति सर्वमिदं रक्षति सर्वमिदं संहरति तस्मान्मायामेतां शक्तिं विद्या" दित्युपक्रम्य—"श्रियं लक्ष्मीमौपलामम्बिकां गां षष्ठीञ्च यामिन्द्रसेनेत्युताहुः । तां विद्यां ब्रह्मयोनिं सरूपां तामिहोयुषे शरणं प्रपद्ये' इति उक्तम् । चतुर्थे तु—"देवा ह वै प्रजापतिमब्रुवन्नानुष्टुभस्य मन्त्रराजस्य नारसिंहस्य अङ्गमन्त्रान्नो ब्रूहि भगव इति । स होवाच प्रजापतिऽप्रणवं सावित्रीं यजुर्लक्ष्मीं नृसिंहगायत्रीमित्यङ्गानि जानीयात्"-इत्युपक्रम्य प्रणवघटकाकारोकारमकारार्थानुक्त्वा—'एकात्मप्रत्ययसारं प्रपञ्चोपशमं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेय' इति नादार्थं वासुदेवमभिधाय 'घृणिरिति द्वे अक्षरे सूर्य इति त्रीणि आदित्य इति त्रीणि एतद्वै सावित्रस्याष्टाक्षरं पदं श्रियाऽभिषिक्तं य एवं वेद श्रिया हैवाभिषिच्यते' इति सावित्रीम् 'ओं भूर्लक्ष्मीर्भुवर्लक्ष्मीस्सुवः कालकर्णी तन्नो महालक्ष्मीऽप्रचोदयात् इत्येषा वै महालक्ष्मीर्यजुर्गायत्री' इति यजुर्गायत्रीञ्चोक्त्वा "देवा ह वै प्रजापतिमब्रुवन्नथ कैर्मन्त्रैर्देवस्तुतऽप्रीतो भवति स्वात्मानं दर्शयति तन्नो ब्रूहि भगव इति । स होवाच प्रजापतिः' इत्युपक्रम्य द्वात्रिंशन्मात्रा उक्ताः ॥

तत्र क्रमेणं ब्रह्मविष्णुमहेश्वरपुरुषेश्वरनामघटितमन्त्रानन्तरं क्रमात् सरस्वती-श्री-गौरी-प्रकृति-विद्यानामघटिता मन्त्रा उक्ताः । अत्र प्रथमपञ्चमन्त्र-

प्रतिपाद्यानां ब्रह्मादीनां शक्तय एव यथाक्रममनन्तरमन्त्रपञ्चकप्रतिपाद्याः । तत्र प्रथममन्त्रचतुष्टयं चतुर्व्यूहतदधिष्ठेयप्रतिपादकं चतुर्थमन्त्रघटकपुरुषपदार्थो व्यूहवासुदेव इति प्राक् उदाहृत व्यासवचनैरेवे सुज्ञेयं पञ्चममन्त्रघटकेश्वरशब्दार्थः परवासुदेवो नारायण इति "ईश्वरो हि जगत्स्रष्टा" इति श्लोके निर्णीतम् । अनन्तरं व्यूहशक्तिचतुष्टयप्रातिपादकमन्त्रचतुष्कानन्तरपञ्चममन्त्रघटकविद्या-शब्दः ईश्वरशब्देन प्रमितस्य परवासुदेवस्य शक्तिं श्रियमभिदधातीति । बृहन्नारदीयवचनानिचैतदुपबृंहणानि यथा तृतीये—

नारायणोऽक्षरोऽनन्तस्सर्वव्यापी निरञ्जनः ।
तेनेदमखिलं व्याप्तं जगत्स्थावरजङ्गमम् ॥
आदिसर्गे महाविष्णुस्स्वप्रकाशो जगन्मयः ।
गुणभेदमाधिष्ठाय मूर्तित्रयमवाप्तवान् ॥
सृष्ट्यर्थमसृजद्देवो दक्षिणाङ्गात्प्रजापतिम् ।
मध्ये रुद्राख्यमीशानं जगदन्तकरं मुने ॥
पालनायास्य जगतो वामाङ्गाद्विष्णुमव्ययम् ।
आदिसर्गे महाविष्णुरेवं त्रित्वमवाप्तवान् ॥
तमादिदेवमजरं केचिद्रुद्रं वदन्ति वै ।
केचिच्च विष्णुमपरे धातारं ब्रह्म चापरे ॥
तस्य शक्तिःपरा विष्णोर्जगत्कार्यपरिश्रया ।
यथा हरिर्जगद्व्यापी तस्य शक्तिस्तथा मुने ॥
दाहशक्तिर्यथाऽङ्गारे स्वाश्रयं व्याप्य तिष्ठति ।
उमेति केचिदाहुस्तां शक्तिं लक्ष्मीति चापरे ॥
भारतीत्यपरे चैनां गिरिजेत्याम्बिकेति च ।
दुर्गेति भद्रकाळीति चण्डीमाहेश्वरीति च ॥
कौमारी वैष्णवी चेति वाराह्यैन्द्रीति चापरे ।

ब्राह्मी विद्याऽविद्येति मायेति च तथाऽपरे ॥
प्रकृतश्च परा चेति वदन्ति परमर्षयः ।
सोयं शक्तिः परा विष्णोर्जगत्सर्गादिकारिणी ॥
व्यक्ताऽव्यक्तस्वरूपेण जगद्व्याप्य व्यवस्थिता ॥ इति ।

अन्ते च—

वासुदेवात्मकं सर्वं जगत्स्थावरजङ्गमम् ।
आब्रह्मास्तम्बपर्यन्तं तस्मादन्यन्न विद्यते ॥ इति ॥

ब्रह्मवैवर्तेऽपि—

श्रीकृष्णस्य परा शक्तिर्बुद्धिरूपा जगत्प्रभोः ।
अनया शक्तिमान् कृष्णो निर्गुणः प्रकृतेः परः ॥
सृष्टिं कर्तुं न शक्तश्च ब्रह्मशक्त्यनया विना ।
वयमस्यां प्रसूताश्च ब्रह्मविष्णुमहेश्वराः ॥ इति ॥

तत्रैव ब्रह्मखण्डान्ते—

ब्रह्मादयः प्राकृतिकाश्च सर्वे
मुक्तिप्रदां श्रीं प्रकृतिं भजन्ति ।
ब्रह्मस्वरूपात्प्रकृतिर्न भिन्ना
यया च सृष्टिं कुरुते सनातनः ॥
नारायणी सा परमा सनातनी
शक्तिश्च पुंसः परमात्मनश्च ।
आत्मेश्वरश्चापि यया च शक्तिमान्
तया विनास्रष्टुमशक्त एव ॥

मूलप्रकृतिरेकासा पूर्णब्रह्मस्वरूपिणी ।
सृष्टौ पञ्चविधा सा च विष्णुमाया सनातनी ॥

इत्युपक्रम्य राधा लक्ष्मी वाग्देवी चेति नारायणपत्न्यस्तिस्रः। सावित्री ब्रह्मपत्नी दुर्गा शङ्करपत्नी चेति द्वे इति पञ्चप्रकारा उक्ताः। कौर्मे च श्रियं प्रस्तुत्य—

इयं सा परमा शक्तिर्मन्मयी ब्रह्मरूपिणी।
माया मम प्रियाऽनन्ता ययेदं धार्यते जगत्॥

इत्युपक्रम्य—

अस्यास्त्वंशानधिष्ठाय शक्तिमन्तोऽभवन् सुराः।
ब्रह्मेशानादयस्सर्वे सर्वशक्तिरियं मम॥
सैषा सर्वजगत्सूतिः प्रकृतिस्त्रिगुणात्मिका।
प्रागेव मत्तस्सञ्जाता श्रीः कल्पे पद्मवासिनी॥

(मत्तः प्रागवे सञ्जाता इत्यन्वयः)—

चतुर्भुजा शङ्खचक्रपद्महस्तास्रगान्विता।

इति नारदादीन्प्रति विष्णुवचनानि। एवम्—

न मां पश्यन्ति मुनयो देवाश्शक्रपुरोगमाः।
नारायणात्मिकामेकां मायाहं तन्मया परा॥
न मे नारायणाद्भेदो विद्यते हि विचारतः।
तन्मय्यहं परं ब्रह्म स विष्णुः परमेश्वरः॥

इति इन्द्रद्युम्नं प्रति श्रीवचनानि च। अतश्च तापनीये "तां विद्यां ब्रह्मयोनिम्" इत्यत्र विद्याशब्दः परशक्तिपरः अनिरुद्धशक्तिपरो वा परवासुदेवानिरुद्धशक्तयोरुभयोरपि लक्ष्मीतन्त्रे विद्याशक्तिप्रयोगात् 'ब्रह्मयोनिम्' इत्यस्य चतुर्मुखकारणभूतामित्यर्थ इति व्यासाशयः। लक्ष्मीविशिष्टस्यैव जलशायित्वादिकं मोक्षधर्मे पूर्वमेवोक्तम्—

अनिरुद्धस्ततो जज्ञे सर्वशक्तिर्महाद्युतिः।
अप्सु व्योमगतश्श्रीमान्योगनिद्रामुपागमत्॥

इति। विष्णुधर्मोत्तरे च—

अहमेकार्णवे लोके शेषपर्यङ्कशायिकः ।
लक्ष्मीसहायस्तिष्ठामि यावत्सुप्तः पितामहः ॥
मयाऽश्वशिरसा वेदा दानवाभ्यां तथाऽऽहृताः ॥ ३२–३५१–३८ ॥

इति । एतेन हरिवंशे तृतीयपर्वणि द्विसप्ततितमे नागबन्धनार्तायबलये नारदेनोपदिष्टे मोक्षविंशकाख्ये वासुदेवस्तोत्रे—

एको विद्यासहायस्त्वं योगी योगमुपागतः ।
पुनस्त्रैलोक्यमुत्सृज्य तेन सत्येन मोक्षय ॥
जलशय्यामुपासीनो योगनिद्रामुपागतः ।
लोकांश्चिन्तयते भूयस्तेन सत्येन मोक्षय ॥
दानवाभ्यां हृता वेदा ब्रह्मणः पश्यतः पुरा ।
परित्रातास्त्वया देव तेन सत्येन मोक्षय ॥
कृत्वा हयशिरोरूपं हत्वा तु मधुकैटभौ ।
ब्रह्मणे तेऽर्पिता वेदास्तेन सत्येन मोक्षय ॥

इत्यत्र विद्याशब्दोऽपि व्याख्यातः । अत्र—त्रैलोक्यमित्यत्र कृतकाकृतककृतकाकृतकलोकत्रयविवक्षया सर्वे लोकास्सङ्गृहीताः । एवमत्र विद्याशब्दस्य लक्ष्मीपरत्वं तत्रैवोत्तरत्र—

यश्शेते जलधौ नागे देव्या लक्ष्म्या सुखावहे ।
हत्वा तौ दानवौ घोरौ मधुकैटभसंज्ञितौ "॥

इति घण्टाकर्णकृतकृष्णस्तुतिवचनेन निर्णीतम् । एवञ्च " एको विद्यासहायस्त्वम् " इति हरिवंशवचने श्रीविष्टस्यैक्यं विवक्षितम् । प्रलयकाले लक्ष्मीविष्टस्यैक्यञ्च " आनीदवातग्ँ स्वधया तदेकम् " (तै. ब्रा. २–८–९) इति नासदासीयसूक्ते स्पष्टम् । उपबृंहितञ्चेदं सूक्तमहिर्बुध्न्यवचनेन—

नासदासीत्तदानीं हि नोसदासीत्तदा मुने ।

इत्यारभ्य—

सदसच्चिदचिद्रूपैर्यत्र विश्वं प्रकाशते ।

तस्मिन्नुपरते शश्वद्विश्वकोलाहलोद्गमे ॥
अलक्ष्या कार्यतश्शक्तिः देवाद्विजहतीभिदाम् ।
इन्धनाभावतो ज्वाला वह्निभावं यथा गता ॥
ब्रह्मभावं व्रजत्येवं सा शक्तिर्वैष्णवी परा ।
नारायण॒परं ब्रह्म शक्तिर्नारायणी च सा ॥
व्यापकावतिसंश्लेषादेकतत्त्वमिव स्थितौ ।

इति अत्रातिसंश्लेषः दिव्यमङ्गळविग्रहतोऽभिप्रायतश्च बोध्यः । एतेन श्रियः पत्युश्चाभेदोऽपि व्याख्यातः । अनन्तरम्—

सङ्कर्षणादयो यावदह॒पौरुषमुच्यते ।
तावती पौरुषी रात्रिस्संहृताखिलवस्तुका ॥

इत्यनेन—"रात्रिया अह्न आसीत्प्रकेतः" इति श्रुत्यर्थोऽप्युक्तः । तदुक्तम् "श्रेष्ठश्च" इत्यधिकरणे "आनीदवातामिति न जैवं श्रेष्ठं प्राणमभिप्रेत्योच्यते अपि तु परस्यैव ब्रह्मण एकस्य विद्यमानत्वमुच्यते" इति भाष्यविवरणावसरे श्रुतप्रकाशिकायां "सिद्धान्ते स्वधयेत्यनेन 'स्वधात्वं लोकपावनी' इत्युपबृंहणाल्लक्ष्मीविशिष्टत्वमुच्यते" इति अनया व्यासार्यसूक्त्या स्वधयेत्यत्र तृतीयार्थो वैशिष्ट्यं तस्य तच्छब्दार्थे ब्रह्मण्यन्वयः एवञ्च लक्ष्मीविशिष्टस्य ब्रह्मण एकस्यैव विद्यमानत्वमुच्यत इति भाष्यार्थः पर्यवस्यति । 'ब्रह्मणि श्रीनिवासे भवतु मम परस्मिन्' इत्यादौ श्रीविशिष्टस्यैव परब्रह्मत्वोक्तेः एतेन "यातेधामानि परमाणि याऽवमायामध्यमा विश्वकर्मन्नुते मा । शिक्षासखिभ्यो हविषि स्वधा वस्स्वयं यजस्व तन्वं वृधा नः" इति प्रथमविश्वकर्मसूक्तपञ्चममन्त्रे 'स्वधा वः' इत्यत्र स्वधाशब्दोऽपि व्याख्यातः "ऐश्वर्येण स योगेन" इत्येतद्विवरणावसरे मन्त्रार्थं वक्ष्यामः । एतेन एतत्सूक्तस्यान्तिमे मन्त्रे "वाचस्पतिं विश्वकर्माणम्" इत्यत्र वाक्छब्दो लक्ष्मीपर इति सिद्धम् । नासदासीयसूक्तघटकानां विश्वकर्मसूक्तघटकानां कतिपयानां मन्त्राणामैकार्थ्यस्य स्फुटतया सूक्तयोरैकार्थ्यमप्रत्याख्येयम् । अतश्च "आनीदवातगँ स्वधया

तदेकम् " इति 'प्रातरग्निम्' इत्यादिहयग्रीवमनुपूर्वश्रुतिमभिप्रेत्यैव हरिवंशे 'एको विद्यासहायस्त्वम्' इति—अत्र 'विद्यासहायवान् देवः' इति चोक्तिः—

एको विद्यासहायस्त्वं योगी योगमुपागतः ।
पुनस्त्रैलोक्यमुत्सृज्य . . . . . . . ॥

इत्यत्र योगीत्यस्य जगत्सृष्ट्यादिध्यानवानित्यर्थः । लोकांश्चिन्तयते भूय इति वक्ष्यमाणानुसारात् । "एको ह वै नारायण आसीत्" इत्युपक्रम्य 'तस्य ध्यानान्तस्थस्ये' त्यादिश्रुतेः । योगमित्यस्य निद्रायोगमित्यर्थः—

जलशय्यामुपासीनो योगनिद्रामुपागतः ।

इति समनन्तरवचनात् । एवं हरिवंश एव पूर्वम्—

विश्वेदेवास्तथा साध्या रुद्रादित्यास्तथाश्विनौ ।
प्रजानां पतयश्चैव सप्त चैव महर्षयः ॥

इत्यादौ—

तस्मिन्नहानि संप्राप्ते तं हंसं महदक्षयम् ।
प्रविशन्ति महायोगं हरिं नारायणं प्रभुम् ॥
पूर्णे युगसहस्रान्ते कल्पो निश्शेष उच्यते ।
तस्मिन् जीवकृतं सर्वं निश्शेषमवतिष्ठते ॥
संहृत्य लोकान् सर्वान् सदेवासुरपन्नगान् ।
कृत्वाऽऽत्मगर्भे भगवानास्त एको जगद्गुरुः ॥
परमेष्ठी हृषीकेशश्शयनायोपचक्रमे ।
पत्नी चैव स्वयं लक्ष्मीर्देहमावृत्य तिष्ठति ॥
ततस्स्वपिति धर्मात्मा सर्वलोकपितामहः ।
किमप्यमितविक्रान्तो निद्रायोगमुपागतः ॥
ततो वर्षसहस्रान्ते पूर्णे स पुरुषोत्तमः ।
स्वयमेव विभुर्भूत्वा बुध्यते विबुधाधिपः ॥

ततश्चिन्तयते भूयस्सृष्टिं लोकस्य लोककृत् ।
पितृदेवासुरनरान् पारमेष्ठ्येन कर्मणा ॥

तस्य चिन्तयतः कार्यं देवेषु समितिञ्जयः ।
सम्भवं सर्वलोकस्य विदधाति स वाक्पतिः ॥

इत्यन्ते हयशिरउपाख्यान समानार्थकतया प्रतीयमाने वचनजाते लक्ष्मीविशिष्टस्य शयनं स्पष्टमुक्तम् । अत्र हंसवाक्पतिशब्दाभ्यामुपक्रमोपसंहारगताभ्यां हंसगायत्रीमनुप्रत्यभिज्ञानात्तत्प्रतिपाद्यो हयशिरा एव पदद्वयार्थः । हंसशब्दस्य हयशिरोवाचित्वादेव मोक्षधर्मे नारदं प्रति वासुदेवोक्तौ वासुदेवव्यूहकथनानन्तरं "अहं हयशिरा भत्वा" इति हयशिरोरूपमभिधाय "मत्स्यः कूर्मो वराहश्च" त्यादिना दशावतारान् सङ्गृह्य अन्ते—

"कर्माण्यपरिमेयानि चतुर्मूर्तिधरो ह्यहम् ।

हंसः कूर्मश्च मत्स्यश्च" त्यादिना वासुदेवादिमूर्तिचतुष्टयस्य हयशिरोयुतदशावतारमूर्तीनामुपसंहारोऽपि सङ्गच्छते । व्यक्तीभविष्यति चेदं 'ऐश्वरेण स योगेन' इत्येतद्विवरणावसरे । हरिवंशप्रकरणे—

तस्य चिन्तयतः कार्यं देवेषु सामितिञ्जयः ।
सम्भवं सर्वलोकस्य विदधाति स वाक्पतिः ॥

इति वचने हयशिरोवृत्तान्तस्संक्षिप्तः, अत्र देवकार्यं हरिवंशे प्रथमपर्वणि व्यक्तमुक्तम् । यथा—

सहस्रशीर्षा भूत्वा तु शयनायोपचक्रमे ।

इत्युपक्रम्य—

तस्य सुप्तस्य शुशुभे नाभिपद्मात्समुत्थितम् ।
आद्यं तस्यासनं पद्मं ब्रह्मणस्सूर्यवर्चसम् ॥

इत्यादिना—

अजस्य नाभावध्येकमर्पितं यस्मिन्निदं विश्वं भुवनमधिश्रितम् ।

इत्यादिश्रुत्यभिप्रेतचतुर्मुखादिसृष्टिमभिधाय —

न तं वेद स्वयं ब्रह्मा नापि ब्रह्मर्षयोऽव्ययाः ।
विष्णोर्निद्रामयं योगं प्रविष्टं तमसाऽऽवृतम् ॥

इत्यादिना—

"न तं विधाथय इमा जजानान्यद्युष्माकमन्तरं बभूव" (वि. सू.) "को अद्धावेदक इह प्रवोचत्" (ना. सू.) "कश्छन्दसां योगमावेद धीरः कोधिष्ण्यां प्रतिवाचं पपाद" (घ. सू.) इति श्रुतितात्पर्यविषयभूतं श्रियः-पत्युर्दुर्ज्ञेयत्वमुक्त्वा—

उत्तिष्ठशतपत्राक्ष पद्मनाभमहाद्युते ।
कारणं किञ्चिदुत्पन्नं देवानां कार्यगौरवात् ॥

इति देवकार्यं सामान्यतो निर्दिष्टम् अनन्तरञ्च—

स संक्षिप्य जलं सर्वं तिमिरौघं विदारयन् ।
उदतिष्ठद्धृषीकेशः श्रिया परमया ज्वलन् ।

इत्यनेन "अन्यद्युष्मायमन्तरम्" इत्यत्र सामान्यतः "वाचस्पतिं विश्वकर्माणम्" इत्यत्र विशेषतश्च निर्दिष्टा श्रीरिति बोधितम्। पश्चाच्च भगवता आगमननिमित्तं पृष्टैर्ब्रह्मादिदेवैः भुवो भारावतरणार्थमागमनमिति प्रतिवचनानन्तरं पद्मनाभसहितास्सर्वेऽपि देवा मेरुशिखरमगमन्। तत्र सभायां धरण्या —

त्वया धार्या ह्यहं देव त्वयेदं धार्यते जगत् ।

इत्यादिना स्वभारावतरणार्थं शरणागतिपूर्वकम्—

अहमादौ पुराणस्य सङ्क्षिप्ता पद्मयोनिना ।
माञ्च बद्ध्वा कृतौ पूर्वं मृण्मयौ द्वौ महासुरौ ॥
कर्णस्रोतोद्भवौ तौ हि विष्णोरस्य महात्मनः ।
महार्णवे प्रस्वपतः काष्ठकुड्यसमं स्थितौ ॥
तौ विवेश स्वयं वायुर्ब्रह्मणा साधु चोदितः ।

दिवं प्रच्छादयन्तौ तु ववृधाते महासुरौ ।

इत्याद्युक्त्यनन्तरम्—

तौ दैत्यौ कृतनामानौ चेरतुर्बलदर्पितौ ।
सर्वमेकार्णवं लोकं योद्धुकामौ सुदुर्जयौ ॥
तद्युद्धमभवद्घोरं तयोस्तस्य च वै तदा ।
एकार्णवे तदा लोके त्रैलोक्ये जलताङ्गते ॥
स तु गृह्यमृधे दोर्भ्यां दैत्यौ तावभ्यपीडयत् ।

इत्यादिना मधुकैटभवधादिकमुक्तम् । सभापर्वणि चेत्थमेव मधुकैटभवध-वृत्तान्तःप्रदर्शितः कल्पभेदेन चाविरोध ऊह्यः । अतश्च—

तस्य चिन्तयतःकार्यं देवेषु समितिञ्जयः ।
संभवं सर्वलोकस्य विदधाति स वाक्पतिः ॥

इति हरिवंशतृतीयपर्ववचने देवकार्यं प्रथमपर्वोक्तमेव । समितिञ्जय इत्यस्य युद्धे मधुकैटभयोर्जेतेत्यर्थः, मधुकैटभवधानन्तरं धरण्यास्स्वास्थ्यसम्पादनेन तद्द्वारा सर्वलोकसत्तां विदधातीति अनन्तरवचनार्थः—

स्वयम्भूरितिविज्ञेयस्स ब्रह्मा भुवनाधिपः ।
स वायुरिति विज्ञेय . . . . . . . ॥

इत्यस्य यौ च मधुकैटभपोषकतया प्रथमपर्वोक्तौ ब्रह्मवायू तावुभावपि नारायणनियाम्यावेवेत्यत्र तात्पर्यम् । अत्रापि—

यच्च वेद्यं भगवतो देवा अपि न तद्विदुः ।

इत्यादिना "न तं विदाथय इमा जजान" इत्यादि श्रुत्यर्थ उक्तः । अतश्च "पत्नी चैव स्वयं लक्ष्मीर्देहमाश्रित्य तिष्ठति" "विदधाति स वाक्पतिः" इत्युपक्रमोपसंहारगतवाक्याभ्यां "अन्यद्युष्माकमन्तरम्" "वाचस्पतिं विश्वकर्माणम्" इति श्रुत्यर्थ उक्तः । इत्थञ्च "एको विद्यासहयस्त्वमि"ति

हरिवंशवचनेऽपि विद्याशब्दर्थो लक्ष्मीरिति सिद्धम् । एवं नारायणाख्यान एव पूर्वं नारदं प्रति पाञ्चरात्रिकवासुदेवोक्तौ—

विद्यासहायवन्तं मामादित्यस्थं सनातनम् ।
कपिलं प्राहुराचार्यास्साङ्ख्यनिश्चितनिश्चयाः ॥
एषोऽहं व्यक्तिमाश्रित्य तिष्ठामि दिवि शाश्वतः ।
ततो युगसहस्रान्ते संहरिष्ये जगत्पुनः ।
कृत्वाऽऽत्मस्थानि भूतानि स्थवराणि चराणि च ।
एकाकी विद्यया सार्धं विहरिष्ये द्विजोत्तम ॥
ततो भूयो जगत्सृष्टिं करिष्यामीह विद्यया ।
अस्मन्मूर्तिश्चतुर्थी या साऽसृजच्छेषमव्ययम् ॥
स हि सङ्कर्षणःप्रोक्तःप्रद्युम्नं सोऽप्यजीजनत् ।
प्रद्युम्नादनिरुद्धोऽहं सर्गो मम पुनःपुनः ॥ इति ॥

(५८) पूर्वोदाहृतवचनानन्तरवचनेष्वपि परवासुदेवशक्तिर्विद्याशब्दार्थ-श्श्रीरिति सिद्धम्। अत्र 'संहारिष्ये' इत्यत्र विद्याशब्दाप्रयोगः लक्ष्म्या व्यष्टिसंहार-फलोपधायकत्वाभावाभिप्रायेण । "एकाकी विद्यया सार्धं विहरिष्ये" इत्यत्र एकाकिशब्दप्रयोगेण "पूर्वं नारायणस्त्वेक" इत्युदाहृतवाराहवचनोपबृंहि-तायां "एको ह वै नारायण आसीत्" "स एकाकी न रमेत" इत्यादि-श्रुतौ श्रीवैशिष्ट्यं विवक्षितमिति बोधितम् । तदुक्तं विष्णुधर्मोत्तरोपक्रमे—

नारायणं नमस्कृत्य सर्वभूतपरायणम् ।
लक्ष्मीसहायं वरदं शेषपर्यङ्कशायिनम् ॥
जगतोऽस्य समुत्पत्तिस्थितिसंहारकारणम् । इति
लक्ष्मीसहायो लोकांस्तु सर्वान् पालयते सदा ॥

इति च अत्र पुनः लक्ष्म्याःपालनमात्रेऽन्वयोक्तिम्सृष्टिप्रलययोःकात्स्न्र्येन फलोपधानाभावाभिप्राया सृष्टिसंहारयोस्तु लक्ष्म्याः न कात्स्न्र्येन

देवः जगद्व्यापारक्रीडावान् "ईश्वरो हि जगत्स्रष्टे"त्यादिना जगत्सृष्ट्यादेःप्रस्तुतत्वात् चैत्रसहायवान् पक्ता मैत्र इत्यत्र चैत्रमैत्रयोरुभयोरपि पाककर्तृत्ववदत्रापि लक्ष्मीनारायणयोर्जगद्व्यापारक्रीडावत्त्वं प्रतीयते, "एकाकी विद्यया सार्धं विहारिष्ये[1]" इत्यत्राप्ययमर्थस्स्फुटः'॥

---

फलोपधानम् । अनुग्रहैकतानायास्तस्या नारकिजन्मनि व्यष्टिसंहारे च फलोपधानविरहात् । सृष्टिस्थितिलयत्रयान्वयोक्तिस्तु लक्ष्म्यास्स्वरूपयोग्यताऽभिप्रायेणेत्यादिकं तत्र सिद्धान्त भेदादिकं च श्रीतत्त्वसिद्धाञ्जनलक्ष्युपायत्वनिर्णयादिषु सुधीभिर्विभावनीयम् । अतो 'विद्यासहायवा'नित्यस्य पूर्वोक्त एवार्थ इति सिद्धम् ॥

[1] अत्र विहारिष्ये इत्यत्र विहारः "त्वं न्यञ्चाद्भिरुदञ्चाद्भिः कर्मसूत्रावलम्बितैः। हरे विहरसि क्रीडाकन्तुकैरिव जन्तुभिः।" इति वचनप्राप्तो जगद्व्यापाररूप एव, "संहरिष्ये" "ततो भूयोजगत्सृष्टिं करिष्यामीह विद्यया।" इति संहारसृष्टिमध्यपतितत्त्वाच्च। तथा च काठकश्रुतिः "श्रद्धया देवो देवत्वमश्नुते" इति । तदुक्तं भगवद्गुणदर्पणे माधवशब्दार्थकथनावसरे भट्टपराशरपादैः अस्यास्वरूपवन्नित्यनिर्मलरूपत्वं, निरुपाधिकपरमैश्वर्यादि जगन्मातृत्वं औत्पत्तिको भगवत्सम्बन्धः नित्यानपायश्चेत्यादि तत्त्वपरेषु शास्त्रेष्वमर्यादम् , वेदेषु तावत श्रीसूक्तं श्रद्धासूक्तं मेधासूक्तमुत्तरनारायणं कौषीतकी ब्राह्मणमित्यादीत्यारभ्य "श्रद्धया देवो देवत्वमश्नुते" इत्येतदस्यास्तत्त्वरहस्यम् इत्यन्तम्। एषामयमाशयः श्रीस्तुतौ "मेधा श्रद्धासरस्वती" (वि.पु.१-९ श्री. स्तु. ११९) इत्युक्तयाऽत्र श्रद्धाशब्दो लक्ष्मीपरः उत्तरत्र "श्रद्धा प्रतिष्ठा लोकस्य देवी"त्यादौ अभ्यस्तदेवीशब्दसामानाधिकरण्यात्, "ईशाना देवीभुवनस्याधिपत्नी" इत्यधिपत्नीशब्देनोपसंहारात् । सर्वस्थितिभरणलयनियमनमोक्षहेतुत्वलिङ्गबलाच्च । प्राक्तनश्रुत्यैकरस्यादपि श्रद्धाशब्दस्य लक्ष्मीपरत्वमवगम्यते । तथाहि पूर्वं "येनेदं विश्वं परिभूतं यदस्ति। प्रथमजं देवगँ हविषा विधेम।

स्वयंभुर्ब्रह्मपरमं तपो यत् । स एव पुत्रस्स पिता स माता । तपोहयक्षगूँ प्रथमंसम्बभूव" इति श्रूयते तत्र "येनेदं विश्वं परिभूतं यदस्ती" तिवासुदेवस्य जगत्कारणत्वं "प्रथमजं देवगँ हविषा विधेम" इत्यनेन प्रथमतः परवासुदेवाज्जातस्य व्यूहरूपस्य भगवत आत्महविरुद्देश्यत्वं "स्वयंभुर्ब्रह्मपरमं तपो यत्" इत्यत्र स्वयंभुशब्देन व्यूहजन्म ऐच्छिकं न तु कर्मकृतमिति चोक्तम् । 'परमम्' इत्यस्य परा मा श्रीर्यस्येति विग्रहः । तप इत्यत्र "तप आलोचने" इत्यस्मात्कर्तरि असुन् । अत्र परमतपश्शब्दाभ्यां श्रीविशिष्टस्य बहुभवनालोचनं ज्ञापितम् । एवञ्च—

षाड्गुण्यं तत्परं ब्रह्म स्वशक्तिपरिबृंहितम् ।
बहुस्यामिति सङ्कल्पं भजते . . . ॥ इत्यहिर्बुध्न्योक्तिरेतन्मूलैवेति ॥

एतेन "प्रथमजं देवगूँ हविषा विधेम" इत्यत्र श्रीविशिष्टस्यैवात्महविरुद्देश्यत्वं सिद्धम् । "उपह्वेस्य सुमतौ स्याम" इत्युपसंहारानुगुण्याच्च । "स एव पुत्रस्स पिता स माता" इत्यत्र परव्यूहयोरभेदः । "नित्यैवैषा जगन्मता विष्णोश्श्रीरनपायिनी" इत्याद्युक्तरीत्या श्रियो मातृतया श्रीविशिष्टस्यैव मातापितृत्वञ्च प्रतिपाद्यते । भट्टार्यैः 'लोकबन्धु 'नामविवरणावसरे "माता पिता भ्राता निवासश्शरणं सुहृत् गतिर्बन्धुर्नारायणः" इति श्रुतिमुदाहृत्य 'माधव 'नामविवरणावसरे "मातापितृत्वं श्रिया सहास्य सूचयति माधवः" इति विवरणात् । एतत्प्रपाठकान्ते "ततो ह जज्ञे भुवनस्य गोपाः" इति "पिता पुत्रेण पितृमान् योनियोनौ" इत्यादिश्रुतिसन्दर्भस्य रामकृष्णादिविभवावतारपरतया सर्वव्याख्यानाधिकरणे व्यासार्यैर्व्याख्यातत्वाच्च यथोक्त एवार्थः । एतावता व्यूहसृष्टिरुक्ता अथ जगदालोचनं श्रीविशिष्टस्यैवेत्याह "तपो ह यक्षं प्रथमं सम्बभूव" इति तपश्शब्दः पूर्ववत् अस्य नारायणस्य स्त्री विद्यारूपपत्नी ई, ई, लक्ष्मीं अक्ष्णोति व्याप्नोतीति यक्षं लक्ष्म्यपृथक्सिद्धमिति यावत्, अमरसुधायाम्, 'ईं लक्ष्मीमक्ष्णोति व्याप्नोतीति ' यक्षशब्दाविवरणात् । एतेन वासुदेवशक्तिर्या विद्यापदाभिधेया सैवानिरुद्धशक्तिर्विद्याशब्दवाच्येति सूचितम् ॥

**अत्र—**

स वासुदेवो भगवान् क्षेत्रज्ञःपरमो मतः ।
विष्णुर्नारायणो विश्वो विश्वरूप इतीर्यते ॥
अहन्तया समाक्रान्तं तस्य विश्वमिदं जगत् ।
वस्तुतस्तु च तन्नास्ति यन्नाक्रान्तमहन्तया ॥ इत्यदीनि ।
तद्ब्रह्म परमं धाम निरालम्बनभावनम् ।
अपृथग्भूतशक्तित्वाद्ब्रह्माद्वैतं तदुच्यते ॥
अहन्ता ब्रह्मणस्तस्य साऽहमस्मि सनातनी ।
भवान् नारायणो देवो भावो लक्ष्मीरहं परा ॥
लक्ष्मीनारायणाख्यं तदतो ब्रह्म सनातनम् ।
अन्योन्येनाविनाभावादन्योन्येन समन्वयात् ॥
तादात्म्यं विद्धि सम्बन्धं मम नाथस्य चोभयोः ।
सङ्कर्षणादिसद्भावं भजे लोकहितेच्छया ॥
क्रमशःप्रलयोत्पत्तिस्थितिभिः . . . . ॥ (२ अ.)

इत्यन्तानि अन्यान्यपि वासुदेवानिरुद्धशक्त्योर्विद्यात्मकत्वप्रतिपादकानि लक्ष्मीतन्त्रवचनान्यनुसन्धेयानि । जगद्व्यापारसामान्येऽपि लक्ष्म्या अन्वयं दर्शयति "श्रद्धया देवो देवत्वमश्नुते" इति देवः "येनेदं विश्वं परिभूतं यदस्ति। प्रथमजं देवग् हविषा विधेम" इत्यत्रोक्तो वासुदेवः श्रद्धया सह देवो-देवत्वमश्नुत इत्यन्वयः । देवत्वं जगद्व्यापारक्रीडासम्बन्धं, 'सृष्ट्याद्यैः क्रीडति स्वयम् । इति देवार्थ ईरितः (५२–६८) इत्यहिर्बुध्न्यसंहितोक्तेः "येनेदं विश्वं परिभूतं यदस्ति । यस्माद्देवा जज्ञिरे भुवनश्च विश्वे" इत्युपक्रमोपसंहारयो-र्जगत्सृष्टिप्रतिपादनात्, "श्रद्धा प्रतिष्ठा लोकस्य देवी" त्यादिना लक्ष्म्यास्स्थिति-भरणमोक्षलयकर्तृत्वस्य वक्ष्यमाणत्वाच्च । तदाहुराचार्यपादाश्चतु श्लोकीभाष्ये अथ स्यात् 'मेधा श्रद्धा सरस्वती' 'अहं श्रद्धा च मेधा च' इति स्मृत्युपबृंहितया

'श्रद्धया देवो देवत्वमश्नुत' इति श्रुत्या पत्न्यधीनोत्कर्षवत्त्वं परस्य देवस्य प्रतीयत इति । तदपि न चोद्यं स्वतस्सिद्धातिशयस्य भास्करस्य प्रभान्वयेनेव "श्रियश्श्रीश्च भवेदग्र्या " इत्युक्तस्य भगवतः पत्न्याऽप्यतिशयान्तरे दोषाभावात्, अभिरूप-एवाभरणेनापि द्योतमानत्वमश्नुत इत्यादाविवायोगव्यवच्छेदमात्रेणाप्यर्थोपपत्तौ बहुप्रमाणविरुद्धस्यान्ययोगव्यवच्छेदस्य कल्पयितुमयुक्तत्वात्।देवत्वञ्च निष्कृष्य-माणं देवनसम्बन्ध एव ' कृत्तद्धितसमासेषु सम्बन्धाभिधानं त्वतलादिभिरिति शाब्दिकोक्तेः । तच्च देवनं विहरणादिरूपं स्ववल्लभासहितस्यैव परस्य देवस्य भवतीति सुस्थोऽयं पन्था " इति । अत्र ' तच्च देवन ' मित्यादिना–तत्रैव पूर्वं " आनीदवातगँ् स्वधयातदेकम् " इति श्रुतिविवरणावसरे उपन्यस्तेषु बहुषु पक्षेषु " अस्तु वा स्वधयेति पदं लक्ष्मीविषयंतथाऽपि सहयोगाविवक्षैवात्र युक्ता यथामहाभारते—

कृत्वाऽऽत्मस्थानि भूतानि स्थावराणि चराणि च ।
एकाकी विद्यया सार्धं विहरिष्ये द्विजोत्तम ॥

इति " इत्युक्तः पक्ष एव " एकाकी विद्यया सार्धमि " त्यानुगुण्येन " श्रेष्ठश्चे " त्यधिकरणश्रुतप्रकाशिकोक्तस्स्वसम्मत इति बोधितम् ॥

ततो भूयो जगत्सृष्टिं करिष्यामीह विद्यया ।

इति तदुत्तरवचनेऽपि विद्ययेति सहयोगे तृतीया लक्ष्म्या सार्धमित्यर्थ इत्यपि सूचितम् । ' विहरिष्ये द्विजोत्तम ' इति पाठेऽपि विहरणं जगद्व्यापार-रूपमेवेति पूर्वमेवोपपादितम् । ' विहरिष्ये जगत्पुनः ' इति बहुषु महाभारत-कोशेषु परिदृश्यमानपाठे च स्फुटमेव तत् । अतः " श्रद्धया देव " इत्या-देर्यथोक्त एवार्थः ॥

अनन्तरश्रुतिवाक्यानामयमर्थः । एतावता श्रद्धाशब्दितलक्ष्म्यास्सामा-न्यतो जगद्व्यापारान्वय उक्तः । अथ विशिष्य स्थित्यादिहेतुत्वं दर्शयति " श्रद्धा प्रतिष्ठे " त्यादिना। देवी महिषी ' देवी कृताभिषेकायामिति कोशात् ।

एतेन भूनीलाभ्यां विशेष उक्तः प्रतिष्ठा उभयविधास्थितिहेतुः अन्तर्व्याप्ति-फलभूता अन्तर्यामिकृतसत्ताऽनुवृत्तिरूपा एका बहिर्व्याप्तिफलभूता बहिर्भूत-मातापित्राचार्यादिमुखेन क्रियमाणा इष्टानिष्टप्राप्तिपरिहाररूपा अपरा चेति स्थितिद्वैविध्यं विष्णुपुराणव्याख्याने विष्णुचित्तीये जिज्ञासाधिकरणश्रुतप्रकाशि-कायाञ्च स्पष्टम् । स्थितिहेतुत्वं श्रियः न भगवतःपृथग्भावेन किन्त्व-पृथग्भावेनैवेत्याह "सा न" इत्यादिना । सा श्रद्धा, नः जुषाणा प्राप्नुवाना, प्रीणाना वा, यज्ञम् । 'यजयाचयतविच्छप्रच्छंरक्षोनङ्' (३-३-९०) इति सूत्रेण यजधातोर्बाहुलकः कर्तरि नङ् ॥

यज्ञस्स्यादात्मनि मखे नारायाणहुताशयाः' ।

इति हैमः (अ. सु.) जगत्सृष्ट्यादियज्ञकर्तारम्, "श्रद्धया देव" इति पूर्वप्रस्तुतं उपागात् उपागमत् । तादृशयागकर्त्री तत्पत्नीत्यर्थसिद्धम्, तत्फलमाह "कामवत्से" त्यादिना काम्यन्त इति कामाः वत्साः अचिन्मिश्र-चिद्रूपाश्शिशवो यस्यास्सा, कामवत्साशब्देन श्रिया वात्सल्यं व्यञ्जितं तेन श्रिय अनुग्रहैकतानत्वं सिद्ध्यति । एतेन "सोऽकामयत बहुस्यामि" ति स्मारणमुखेन श्रियो बहुभवनसङ्कल्पो व्यञ्जितः । "तदेवानुप्राविशत्" इति श्रुतिसिद्धाऽन्तर्यामिकृतसत्ताऽनुवृत्तिलक्षणा स्थितिः प्रतिष्ठाशब्देनोक्ता । अमृतं दुहाना मोक्षप्रदा, अनेनाचार्यादिमुखेन रक्षणं नान्तरीयकतया सिद्ध्यति । एतेन द्विविधस्थितिहेतुत्वं लक्ष्म्या उपपादितम् ॥

अथ "येनेदं विश्वं परिभूतं यदस्ति प्रथमजं देवगं हविषा विधेम" इत्यादिना भगवति पूर्वोक्तानर्थान् लक्ष्म्यामपि दर्शयति "श्रद्धा देवी" इत्यादिना ऋतस्य ब्रह्मणः, "ऋतगँ सत्यं परं ब्रह्म" त्यादौ ऋतशब्दो ब्रह्मणि प्रयुक्तः । प्रथमजा पूर्वमवतीर्णा, विश्वस्य भर्त्री स्वसङ्कल्पेन धार-यित्री "श्रद्धा प्रतिष्ठे" त्यत्र स्वरूपतास्स्थितिहेतुत्वमुक्तामिति न पौनरुक्त्यम् । एतेन "भर्ता सन् भ्रियमाणो बिभर्ति । एको देवो बहुधा निविष्टः" इत्यत्र

लक्ष्मीतन्त्राद्युक्तदिशैवैक्यं विवक्षितमिति सूचितम्। लयहेतुत्वमाह "जगतः प्रतिष्ठा" इति प्रतिष्ठा प्रकर्षेण स्वाविभागेन स्थितिर्लयः तद्धेतुः। प्रतिष्ठा-शब्दस्य लयपरत्वं 'प्रतिष्ठा निष्ठा पर्यवसानं लयः' इति जिज्ञासाधिकरण-श्रुतप्रकाशिकायामुक्तम्। "ताँग् श्रद्धाँग् हविषा यजामहे" इत्यत्र लक्ष्म्या अप्यात्महविरुद्देश्यत्वमुच्यते। "सा नो लोकममृतं दधातु" इति लोकं लोक्यत इति लोकं हविस्समर्पणफलं, "तद्यथेह कर्मचितो लोकः क्षीयते" इत्यादौ लोकशब्दस्य फले प्रयोगात्। अमृतं मोक्षरूपम्, दधातु संपादयतु॥

ननु "क्षरात्मानावीशते देव एकः" इत्यादौ देवस्यैव जगन्नियन्तृत्व-संवलितशेषित्वप्रतिपादनात् कथमेतदिति शङ्कामपनुदति—'ईशाना देवी' इत्यादिना 'भुवनस्य' भवतीति भुवनं तस्य सत्ताश्रयजगत्सामान्यस्य ईशाना नियन्तृत्वसंश्लिष्टशेषित्ववती, यथा हि श्रूयतेऽन्यत्रापि "अस्येशाना जगतो विष्णुपत्नी" "ईश्वरीँग् सर्वभूतानाम्" इत्यादि। लक्ष्मतिन्त्रे—

भूतानामीश्वरा चास्मि प्रियेणेशेन सर्वदा॥ ५०॥ १५१॥
वरदा भुवनेशाना वन्दिता च सदाऽखिलैः।
वृद्धिदा वर्तमाना च क्षपणी च सदांहसाम्॥ १६०॥
ईश्वरीत्येव मे नाम तेन वेदे निरूपितम्।
निरुपाधि स्वतन्त्रा च स्वामिनी नःकृपानिधिः॥२१८॥
अधिष्ठाय गुणान् सृष्टिस्थितिसंहृतिकारणी।
निर्गुणापि गुणानेतानधिष्ठायात्मवाञ्छया॥ ३॥ ९॥
अनियोज्यं ममैश्वर्यमिच्छैव मम कारणम्।
मुह्यन्त्यत्र महान्तोऽपि तत्त्वं श्रुणु तथा च मे॥ १२॥
विभक्ते अपि ते एते शक्ती चिदाचिदात्मके।
मत्स्वाच्छन्द्यवशेनैव मम रूपे सनातने॥ २४॥

इत्यादिवचनानि एतच्छ्रुतितात्पर्यं विशदयन्ति । एतत्तात्पर्येणैव " निरुपाधिक-मैश्वर्यादिक " मित्यादिभट्टार्योक्तिः अधिपत्नी भोगपत्नीभूताभ्यां भूनीळाभ्या-मधिकमहिमवती पत्नी, एतच्छ्रुतितात्पर्यानिर्णायकानि च—

" स्वातन्त्र्येण स्वरूपेण विष्णुपत्नीयमद्भुता ।
यतो जगद्भविष्यन्ती क्वचिदुन्मेषमृच्छति"। (अ. सं. ३. २६) इति ।
भगवद्यज्ञसंयोगात्पत्नी भगवतो ह्यहम् । ल. तं. ४. ४८ ।
निरुपाधि स्वतन्त्रा च स्वामिनी नःकृपानिधिः ॥५० ॥२१८॥ इति ॥
तथा लक्ष्म्यास्स्वरूपञ्च श्रुणु वक्ष्ये समाहितः । वि. सं ।
गुणतश्च स्वरूपेण व्याप्तिस्साधारणी मता ॥
यथा मया जगद्व्याप्तं स्वरूपेण स्वभावतः ।
तया व्याप्तमिदं सर्वं नियन्त्री च तथेश्वरी ॥
मया व्याप्ता तथा साऽपि तया व्याप्तोऽहमीश्वरः ।
मम तस्याश्च सेनेश वैलक्षण्यमिदं श्रुणु ॥
मच्छेषभूता सर्वेषामीश्वरी वल्लभा मम ।
तस्याश्च जगतश्चाहमीश्वरो वेदविश्रुतः ।
अस्या मम च शेषं हि विभूतिरुभयात्मिका ।
इति श्रुतिशिरस्सिद्धं मच्छास्त्रेष्वपि मानद ॥
तथा भूमिश्च नीळा च शेषभूते मते मम ।
तथाऽऽत्मनाञ्च सर्वेषां ज्ञानतो व्याप्तिरिष्यते ॥
स्वरूपतस्तु न तयोर्व्याप्तिर्वेदान्तपारग ॥ इति ॥
युवां तु विश्वस्य विभू जगतःकारणं परम् ॥

इत्यहिर्बुध्न्यसंहिता लक्ष्मीतन्त्रविष्वक्सेनसंहिताभागवतादिवचनानि । वचनार्थस्त्वन्यत्र विचारितः । अत्र लक्ष्म्या अधिपत्नीत्वकथनेन पतिवत्पत्न्या अपि सृष्ट्यादियज्ञाधिकारः सृष्ट्यादियज्ञकर्तृत्वञ्च बोधितम् ॥

पूर्वतन्त्रे "जातिन्तु बादरायणोऽविशेषात्तस्मात् स्त्र्यपि प्रतीयेत जात्यर्थस्याविशिष्टत्वात्" (६-१-३-८) "स्ववतोस्तु वचनादैककर्म्यं स्यात्" (६-१-४-१७) इति सूत्रद्वये पत्न्या अपि यज्ञाधिकारः पतिपत्न्योरेकमेव यागकर्तृत्वम्, इत्यादिकं स्फुटम्। अत्र ऐककर्म्यपदं प्रयुञ्जता जैमिनिना पत्न्या अनुमतिकर्तृत्वादिकमेवेति वदन्तःप्रत्युक्ताः। तदुक्तं भाट्टदीपिकायां भट्टकुमारिलानुयायिना खण्डदेवेन—"यद्यपि तत्स्वारस्यात्पुंस एव त्यागे कर्तृत्वं तस्या अप्यनुमतिद्वारा तदिति केषाञ्चिन्मतम्। तत् अनुमतेः फलसम्बन्धाश्रवणात् तद्वारकत्वे प्रमाणाभावेन पूर्वाधिकरणव्युत्पादिताधिकारभङ्गापत्तेरुपेक्षितम्। यत्तु आख्यातोपात्तमेकत्वं सहाधिकारे नावकल्पत इति तन्न। एकवचनश्रवणादेव व्यासज्यवृत्त्यैककर्तृत्वस्य कल्पनात्। इतरथा कर्तृभेदात्सत्रवद्द्विवचनाद्यापत्तेः" इति। अत्र 'जातिन्तु बादरायण' इति पूर्वाधिकरणसिद्धान्तसूत्रानुसारेण "स्ववतोस्तु वचनादैककर्म्यं स्यात्" इत्युत्तराधिकरणसिद्धान्तसूत्रे कर्मण्येकत्वमेकजातीयत्वमेवेति न तिरोहितं विदुषाम्। अत एव शास्त्रदीपिकाव्याख्याने सोमनाथीये दम्पत्योरेकजातीयत्यागकर्तृत्वप्रतिपादनं सङ्गच्छते। यत्र तु विषयविशेषे एककर्तृत्वांशे विरोधादिकं तत्र त्वगत्या प्रमाणान्तरेण च प्रेरणानुमतिनिबन्धनमेव कर्तृत्वमित्यादिकं सुधीभिरूह्यम्। एवं स्थिते वेदव्यासापरनामबादरायणसिद्धान्ते केषाञ्चिन्मीमांसकैकदेशीनां सर्वत्र यागकर्तृत्वस्य प्रेरणानुमतिनिबन्धनत्वोक्तिरनुपादेया। तथा च सकलार्थसङ्ग्राहिका श्वेताश्वतरद्वितयाध्यायगा श्रुतिः "मही देवस्य सवितुः परिष्टुतिः युजे वां ब्रह्मपूर्व्यं नमोभिः" इति अत्र 'वां ब्रह्म' इति समानाधिकरणनिर्देशः एतेन श्वेताश्वतरप्रथमाध्याये "क्षरात्मानावीशते देव एक" इत्यत्र लक्ष्मीपतिरेव विवक्षितः पुंस्त्वञ्चाविवक्षितमिति सिद्धम्। "युजे वां ब्रह्मपूर्व्यं नमोभि" रिति श्रुतितात्पर्यं लक्ष्मीतन्त्रे—

नमो नित्यानवद्याय जगतस्सर्वहेतवे।
ज्ञानाय निस्तरङ्गाय लक्ष्मीनारायणात्मने॥

इत्युपक्रमेण—

लक्ष्मीनारायणाख्यं तदतो ब्रह्म सनातनम् ॥ २ ॥ १५ ॥

इत्यादिवचनैश्च व्यक्तीकृतम् । महीशब्दस्य लक्ष्मीवाचकत्वादिकं "मही गौः प्राणवत्सला" (अ. सं.) इत्यादिलक्ष्मीनामपाठादिना सिद्ध्यति । नारायणाख्याने—

विद्यासहायवन्तं मामादित्यस्थं सनातनम् । इति
ततो भूयो जगत्सृष्टिं करिष्यामीह विद्यया ।

इत्यादि पाञ्चरात्रिकवासुदेववचनेष्वपीयमेव श्रुतिर्मूलभूतेति विद्याया आदित्यसम्बन्धकथनपूर्वकं जगत्कारणत्वप्रतिपादनेन व्यञ्जितम् ।

श्रुतीनामभिसन्धिश्च सैव देवी सनातनी । ल. तं. १. ३५ ॥
एषैव सृजते काले सैषा पाति जगत्त्रयम् ।
जगत्संहरते चान्ते तत्तत्कारणसंस्थिता ॥ ३६ ॥

इत्यादिलक्ष्मीतन्त्रवचनैः "माया वा एष नारसिंही सृजति" इत्यादि नृसिंहतापनीयादितात्पर्यमाविष्कृतमिति विरम्यते विस्तरभयात् ॥

अतश्च अधिपत्नीत्यस्य यथोक्त एवार्थः । तदेतत्सर्वमाभिप्रेत्योक्तं वेदार्थसङ्ग्रहे "अनवधिकमहिममाहिषी" इति । एवं पतिपत्नीभावकथनेन "ज्योतिष्टोमेन स्वर्गकामो यजेत" इत्यादौ पुंस्त्वाविवक्षावत् जगत्सृष्ट्यादिप्रतिपादकश्रुत्यादिषु लिङ्गाविवक्षया लक्ष्म्यास्सर्वजगद्व्यापारान्वयस्सम्भवतीति बोधितम् । एतेन "श्रद्धया देवो देवत्वमश्नुते" इत्यस्य पूर्वोक्तार्थे उपपत्तिरूपतात्पर्यलिङ्गमप्युक्तम् । एतावता "ईश्वरीगँ् सर्वभूतानां त्वामिहोपह्वये श्रियम्" इति श्रुत्यर्थ उक्तः ॥

अथ "मनसःकाममाकूतिं (आकृतिं) वाचस्सत्यमशीमहि" इत्यस्यार्थ उच्यते "आगात्सत्यगँ् हविरिदं जुषाणम्" इत्यादिना अत्र "स. त्ति. यम्." (८–३–५) इत्यादि च्छान्दोग्यश्रुतौ—

सच्चासच्चैव कौन्तेय मयावेशितमात्मनि ।
पौष्करे ब्रह्मसदने सत्यम्मामृषयो विदुः ॥ इति ।

मोक्षधर्मे—

सच्चत्यच्च जगद्द्वेधा यत्प्रमाणेन दृश्यते ।
तत्सर्वमहमस्मीति सत्त्यं मामृषयोऽब्रुवन् ॥ ५०–१६९ ॥

इति लक्ष्मीतन्त्रे च निर्वचनानुसारेण सत्त्यपदं श्रीश्रीशोभयबोधकं वेदितव्यम् । अत एव " मनसो वशे सर्वमिदं बभूव नान्यस्य मनो वशमन्वियाय । भीष्मो हि देवस्सहसस्सहीयान् । स नो जुषाणापेयज्ञमागात् । आकूतीनामधिपतिं चेतसाञ्च । सङ्कल्पजूतिं देवं विपश्चिम् । मनो राजानमिह वर्धयन्तः । उपहवेस्य सुमतौ स्याम " इत्युपसंहारस्सङ्गच्छते । अत्र सुमतिशब्दो लक्ष्मिवाची " सुमज्जानये विष्णवे " " बृहत्ते विष्णो सुमतिं भजामहे " इति श्रुत्यन्तरात् । अत्र सुमतित्वं समीचीनसङ्कल्पवत्त्वम्, समीचीनत्वं अनुग्रहैकतानत्वं तच्च रक्षणविषये कार्त्स्न्येन पतिसङ्कल्पतुल्यत्वं नारकिजन्मव्याष्टिसंहारयोश्च श्रियःफलोपधानाभावश्चेति । तत्र प्रथमं पूर्वमुक्तम् । द्वितीयं "भीष्मो हि देव" इत्यादिना व्यक्तीभविष्यति, अयञ्च विशेषो विष्णुधर्मोत्तरोपक्रमवचनैरपि व्यञ्जितः । यथा—

नारायणं नमस्कृत्य सर्वभूतपरायणम् ।
लक्ष्मीसहायं वरदं शेषपर्यङ्कशायिनम् ॥
जगतोऽस्य समुत्पत्तिस्थितिनाशैककारणम् । इति

" लक्ष्मीसहायो लोकांस्तु सर्वान् पालयते सदा " इति च । " प्रथमजं देवगँ् हविषा विधेम " इत्यत्र सामान्यतो व्यूहरूपिणो भगवत अस्महाविरुद्देश्यत्वमुक्तम् । अत्र व्यूहव्यक्तिं विशिंषन् लक्ष्म्यास्सुमतित्वमुपपादयितुमारभते " मनसो वशे " इत्यादिना । अत्र मनःपदं " कामस्सङ्कल्प " इत्यादि " सर्वं मन एव " इति । सङ्कल्पः कर्म मानसम् " इति च वैदिकलौकिकवचनानुसारेण सङ्कल्पजनकमनोवाचकं सत्—

स मनस्सर्वभूतानां प्रद्युम्नः परिपठ्यते ।

इत्यादिवचनैस्तदभिमानिप्रद्युम्नपरम्, अन्यदतिरोहितार्थम् । अत्र विश्वस्य भर्त्री " इत्यदि " ईशाना देवी भुवनस्याधिपत्नी " इति " मनसो वशे

विश्वमिदं बभूव" इत्यादिश्रौतनिर्देशेन पूर्वं श्रद्धाशब्दप्रतिपादितसर्वनियन्त्री लक्ष्मीरेव मनश्शब्दवाच्यस्य सर्वनियन्तुः प्रद्युम्नस्य शक्तिः, "उपहवेस्य सुमतौ स्याम" इत्यत्र सुमतिशब्दनिर्दिष्टेत्यवगम्यते। श्रीतदीशयोरैश्वर्यं—

हेत्वन्तरानपेक्षं यत्स्वातन्त्र्यं विश्वनिर्मितम् ।
तदैश्वर्यं तदासीन्मे प्रद्युम्नःपुरुषोत्तमः ॥ २४–९ ॥

इति लक्ष्मीतन्त्रे—

ऐश्वर्यवीर्यसम्भेदात्प्राद्युम्नं रूपमुच्यते ।
कर्तृत्वं नाम यत्तस्य स्वातन्त्र्यपरिकल्पितम् ।
ऐश्वर्यं नाम तत्प्रोक्तं गुणतत्त्वार्थचिन्तकैः ॥ २–५८ ॥

इत्यहिर्बुध्न्यसंहितायाञ्च निरुक्तं विवक्षितम्। अत्रैश्वर्यमात्रोक्तावपि तदेव वीर्यस्याप्युपलक्षणं रक्षणोपयोगितयाऽभ्यर्हितत्वात्तस्य निर्देशः ऐश्वर्यस्य रक्षणोपयोगित्वञ्च—

सृष्टिस्थित्यन्तकर्तारो विज्ञानैश्वर्यशक्तयः ।

इति लक्ष्मीतन्त्रे स्पष्टम् ॥

अथ प्रद्युम्नस्यैव रक्षणैकान्तत्वं स्थिरीकर्तुं सङ्कर्षणानिरुद्धयोस्समाश्रयणानर्हत्वमाह "भीष्मो हि देवस्सहसस्सहीयान्" इति। हि यतः, सहसस्सहीयांश्च देवो भीष्मः, अतस्स नो जुषाणोपयज्ञमागादित्यन्वयः। सहः बलमस्यास्तीति सहसः अर्श आदेराकृतिगणत्वादच् बलवान् सङ्कर्षण इति यावत् सहीयान् सहः तेजः अस्यास्तीति सहस्वान् अतिशयेन सहस्वान् सहीयान् अनिरुद्धः—

बलं वीर्यं तथा तेज इत्येतत्तु गुणत्रयम् ॥

इति सङ्कर्षणानिरुद्धयोः बलतेजोगुणवत्त्वाभिधानात् भीष्मः भयङ्करः, तयोः क्रमेण व्यष्टिसंहारनारकिजन्मफलोपधायकसङ्कल्पवत्त्वादिति भावः एतेन

प्रद्युम्नस्य रक्षणाधिकृतस्य लक्ष्मीविदनुग्रहैकतानत्वं सिद्धम् "स नो जुषाणोप-यज्ञमागात्" इत्यत्र जुषाणः उपयज्ञमिति च्छेदः "स नो जुषाणोपयज्ञं-मागात्" इति वाक्यसच्छायेऽत्र स इत्यस्य पत्नीविशिष्टप्रद्युम्न इत्यर्थः यज्ञम् आत्महविर्यज्ञम्, "उपह्वेस्य" इत्युत्तरत्र कथनात् । अथ "मनसो वशे" इत्यत्र मनःपदं विवृण्वन्नन्तिमसुमतिशब्दार्थमपि निर्धारयति "आकूतीनाम्" इत्यादिना आकूतीनामिति मनःकार्यसामान्योपलक्षणम् एतेन 'कामस्सङ्कल्प' इति श्रुतौ पठितायाश्श्रद्धाया अभिमानिनी देवता पूर्वं "श्रद्धया देव" इत्यादौ श्रद्धाशब्दार्थ इति व्यञ्जितम् । सङ्कल्पजूतिं सङ्कल्पात्मकवेगवन्तम् सङ्कल्पमूलवेगवन्तं वा विपाश्चिं सर्वज्ञम्, 'मनो राजानम्' अनेन मनसो वशे, इत्यत्र मनःपदं नाचेतनवाचि किन्तु तदधिपतिप्रद्युम्नपरमिति बोधितम् अत्र सङ्कल्पाभिमानिनो वर्धनं लक्ष्मीसङ्कल्पामिश्रणेन पूर्णसङ्कल्पवत्त्वसंपाद-नम् । "स्वशक्तिपरिबृंहितम् । बहुस्यामिति सङ्कल्पं भजते" इत्यहिर्बुध्न्यवचने "स्वशक्तिपरिबृंहितम्" इत्यनेन एतच्छ्रुत्यर्थ उक्तः 'उपह्वे इत्यादि' । अस्य मनोराजप्रद्युम्नदेवतासम्बन्धिनि हवे यज्ञे सुमतौ पतिसङ्कल्पानुगुणतत्तुल्यसङ्कल्प-वत्यां लक्ष्म्यां उपस्याम शेषत्वेन सन्निहिता भवेमेत्यर्थः । अनन्तरं "चरणं पवित्रं विततं पुराणम्" इति मन्त्रस्सुदर्शनपरः । अस्य सुदर्शनपरत्वं सच्चरित्ररक्षादौ स्थिरीकृतम् । एतच्छ्रुतितात्पर्यविस्तरोऽहिर्बुध्न्यसंहितादिरिति तत्त्वरहस्यमिति ॥

एतेन—

लक्ष्म्या सह हृषीकेशो देव्या कारुण्यरूपया ।
रक्षकस्सर्वसिद्धान्ते वेदान्तेऽपि च गीयते ॥ इति ॥

लक्ष्मीसहायो लोकांस्तु सर्वान् पालयते सदा ॥ इति

लक्ष्मीतन्त्रविष्णुधर्मोत्तरोक्तिः स्थिरीकृता इत्थञ्च श्रद्धया देवो देवत्व-मश्नुते" इत्यस्य प्रागुक्त एवार्थे तात्पर्यमिति भट्टार्याणामाशयनिष्कर्षेण तदुप-बृंहणभूतस्य "विद्यासहायवान् देव" इत्यस्यापि यथोक्त एवार्थः ॥

विष्वक्सेनो जनार्दन इति अयं पाठः केषुचित्कोशेषुदृश्यते नामद्वयञ्चेत्थं विवृतं भगवद्गुणदर्पणे भट्टार्यैः। अथ स्थापकोऽनिरुद्धः विष्षक्सेनः इनेन स्वामिना सह वर्तत इति सेना सेश्वरेति यास्कः, अनेन रक्षकवन्तो जन्तवः विष्वञ्चोऽस्येति, इयमत्र सामर्थ्यशरीरा शक्तिः रक्षाप्रातिपक्षान् जनाननपेक्षोर्दऽयतीति जनार्दनः (१) "दस्युत्राणाज्जनार्दनः" (भा. उ. ७१-६१) इति। इदमनपेक्षालक्षणं तेजः प्रतिमूर्तिगुणानां व्यवस्थेयम्। इयतामाविष्कारात् भगवतस्सर्वत्रानावरणगुणत्वात्। मूले हि श्रूयते "ज्ञानेनैश्वर्येण शक्त्येति सर्वे भगवतोऽनूनाऽपूर्णा इति" "एष आत्मा चतुर्विधस्सर्वज्ञस्सर्वदर्शी सर्वेश्वरस्सर्वशक्तिस्समृद्धिमान् वाग्ग्रन्धि(अव्यादि)रनून आप्तो वशी स्वाधीनोऽनादिरनन्तो व्यपगतनिद्राभयक्रोधतन्द्रो व्यपगतेच्छातमःक्लमव्याधिर्निर्दोषो निरनिष्टो निरवद्यो ये भगवन्तं वासुदेवमेवं विदुः त एनं विदुः। येनैवं विदुर्न ते विदुरिति भगवान् वासुदेवोनन्त एवापरिमितोऽनन्तत्वेनापरिमितत्वेन भवति, इति प्रतिपर्यायम्" इति॥

यद्यपि भगवच्छास्त्रवचनसिद्धं प्रद्युम्नस्य स्रष्टृत्वमनिरुद्धस्य रक्षकत्वं भट्टार्यसम्मतम्। तथाऽपि—

"सृजते ह्यनिरुद्धोऽत्र प्रद्युम्नःपाति तत्कृतम्" इति लक्ष्मीतन्त्राद्युक्त एवार्थो व्यासेन प्रतिपादितः अविरोधश्च कल्पभेदेनेत्याशयः। "विष्वक्सेनो हरिःप्रभुः" इत्यपि पाठो दृश्यते॥

"आदिकर्ता स भूतानामप्रमेयो हरिःप्रभुः" इति श्लोकार्धस्य केषुचित्कोशेषु पाठानुरोधेन "विष्वक्सेनो जनार्दन" इति पाठ उचितः। "आदिकर्ता स भूतानाम्" इत्यत्र भूतपदमण्डकारणसकलसमष्टितत्वपरम्। अत्र बीजञ्च पूर्वमेवोक्तम्। "तदण्डमभवद्धैमम्" इत्यतःपूर्वं "महाभूतादिवृत्तौजा" इति वचनैकार्थ्याच्च

मनुवचनसच्छायानि च बहूनि वचनानि महाभारते उपलभ्यन्ते। अप्रमेयः कालतो देशतो वस्तुतश्च परिच्छेत्तुमयोग्यः तथा च जगत्करणशोधिका श्रुतिः "सत्यं ज्ञानमनन्तं ब्रह्म" इति। हरिः—

ब्रह्माणमिन्द्रं रुद्रञ्च यमं वरुणमेव च।
प्रसह्य हरते यस्मात्तस्माद्धरिरिहोच्यते॥

इत्युक्तरीत्या ब्रह्मादिस्तम्बपर्यन्तलयकर्ता। यथा हि श्रूयते "विष्णुस्तदासीद्धरिरेव निष्कलः" इति इयं च श्रुतिर्वेदार्थसङ्ग्रहतात्पर्यदीपिकायामुदाहृता प्रभुः स्वामी अप्स्वेवेत्यादि [1] निद्रायोगमुपागतः सृष्टिं चिन्तयन् अप्स्वेव शयनं चक्रे। इति योजना।

---

[1] निद्रास्वरूपञ्च विवृतं हरिवंशे प्रथमपर्वणि—

न तत्र विषयो वायोर्नेन्दोर्न च विवस्वतः।
वपुषः पद्मनाभस्य स देशस्तेजसा वृतः॥ ५० ॥ ६२ ॥

लोकानामन्तकालज्ञा कालीननयशालिनी।
उपतस्थे महात्मानं निद्रा तं कालरूपिणी॥

न तं वेद स्वयं ब्रह्मा नापि ब्रह्मर्षयोऽव्ययाः।
विष्णोर्निद्रामयं योगं प्रविष्टं तमसावृतम्॥

देवेष्वपि दधारैनां नान्यो नारायणादृते।
सखी सर्वहरस्यैषा माया विष्णुशरीरजा॥ ३२॥

सैषा नारायणमुखे दृष्टा कमललोचना।

इति। अनन्तरं च—

स संक्षिप्य जलं सर्वं तिमिरौघं विदारयन्।
उदतिष्ठद्धृषीकेशश्श्रिया परमया ज्वलन्॥ ४२॥ इति॥

लक्ष्मीतन्त्रेपि—

गुणत्रयमधिष्ठात्री त्रिगुणा परिकीर्तिता ।
गुणैर्वैषम्यसर्गाय प्रवृत्ताहं सिसृक्षया ॥ ५५ ॥
भरामि त्वपरं रूपं तमसा केवलेन तु ।
सा मां प्रोवाच सम्भूता तामसी प्रमदोत्तमा ॥
नामकर्म च मे मातः देहि तुभ्यं नमोनमः ।
तामब्रुवं वरारोहां तामसीं प्रमदोत्तमाम् ।
ददामि तव नामानि यानि कर्माणि तानि ते ।
महाकाली महामाया महामारी क्षुधा क्रिया ।
निद्रा तृष्णा चैकवीरा कालरात्रिर्दुरत्यया ।

इति—

अवतारो हि यो विष्णोस्सिन्धुशायीति संज्ञितः ।
स्थिता परापरा तस्य चतुर्धा रूपमेययुषी ॥ ८ ॥ ३० ॥
लक्ष्मीर्निद्रा तथा प्रीतिर्विद्या चेति विभेदिनी ।
योगनिद्रा हरेरुक्ता या सा देवी दुरत्यया ।
महाकालीं तनुं विद्धि तां मां देवीं सनातनीम् ।
मधुकैटभनाशे च मोहितौ च तया तदा ॥ ९ ॥ १५ ॥
जघ्नाते वरलाभेन देवदेवेन विष्णुना ।
विश्वैश्वर्यादिकं सूक्तं दृष्टं तद्ब्रह्मणा सदा ॥ ९ ॥ १६ ॥
स्तुतये योगनिद्रा या मम देव्याः पुरन्दर ।

इति च—

आत्ममायामयीं दिव्यां योगनिद्रामुपागतः ।
आत्मानं वासुदेवाख्यं चिन्तयन्मधुसूदनः ।

इति विष्णुपुराणविवरणे विष्णुचित्तार्यैः 'आत्ममायामयी मूलप्रकृत्यभिमानिदेवता' योगनिद्रां योगरूपां निद्रां एतद्विवृणोति आत्मानमिति "

निद्राया योगं सम्बन्धं—

अप्सु व्योमगतश्श्रीमान्योगनिद्रामुपेयिवान् ।

इति पूर्वोदाहृत[1]मोक्षधर्मवचने योगनिद्रामिति कर्मधारयः ॥

जगत इत्यादि विबोधानन्तरमिति शेषः जगतः अण्डान्तर्वर्तिलोकानाम् चित्रां आश्चर्यकरीम् बहुगुणोद्भवाम् बहुः बहुप्रकारः गुणानां सत्त्वरजस्तमसां उद्भवः आविर्भावः यस्यां ताम्, इति ॥

एतावता शक्त्यनुग्रहेण विष्णोश्शिरःप्राप्तिरिति भ्रमापनोदनाय 'नासदासीय' सूक्त 'विश्वकर्म' सूक्ताद्युक्तदिशा विद्यारूपशक्तिविशिष्टस्यैव सर्वस्मात्परत्वं निरूपितम्। अथ विश्वकर्मसूक्ताद्युक्तां चतुर्मुखसृष्टिं प्रदर्शयति—

तस्य चिन्तयतस्सृष्टिं महानात्मगुणस्मृतः ॥ २० ॥
अहङ्कारस्ततो जातो ब्रह्मा शुभचतुर्मुखः ।
हिरण्यगर्भो भगवान् सर्वलोकपितामहः ॥ २१ ॥
पद्मेऽनिरुद्धात्सम्भूतस्तदा पद्मनिभेक्षणः ।
सहस्रपत्रे द्युतिमानुपविष्टस्सनातनः ॥ २२ ॥
ददृशेऽद्भुतसङ्काशो लोकानापोमयान् (नाप्याययन्) [प्रभुः ।
सत्त्वस्थः परमेष्ठी स ततो भूतगणान् सृजन् ॥ २३ ॥

---

[1] इत्युक्त्या मोक्षधर्मवचनमप्येतत्समनार्थमेव योगशब्दस्य लक्ष्मीपरत्वं लक्ष्मीतन्त्रे व्यक्तमुक्तम्—

"योजनाच्चैव योगाऽहं योगमाया च कीर्तिता ।
माया योग इति ज्ञेया ज्ञानयोजनतो नृणाम् ॥" इति ।

तस्येत्यादि . . महान् महत्तत्त्वं, आत्मगुणः आत्मनः "आत्मभूतो वासुदेव" इत्यानुशासनिकोक्तरीत्या वासुदेवस्य, गुणः उपसर्जनभूतः, एतेन प्रकृतेस्स्वतन्त्राया एव परिणाम इति साङ्ख्यपक्षः प्रत्युक्तः स्मृत इति अनेन पूर्वं वासुदेवादेव महत्तत्त्वस्योत्पत्तिर्नानिरुद्धादिति सूचितम्। ततः अनन्तरं अहङ्कारः अहङ्काराभिमानी उभयभावनत्वेनाहमभिमानाश्रयो वा। एतेन "आत्मैवेदमग्र आसीत्पुरुषविधस्सोऽनुवीक्ष्य नान्यदात्मनोऽपश्यत्सोऽहमस्मीत्यग्रे व्याहरत्ततोऽहंनामाभवत्" इत्यादि बृहदारण्यकश्रुतिरत्र मूलमिति ज्ञापितम् ॥

अत्र व्यासार्याः—"अहमिति हिरण्यगर्भनाम अहमभिमानाश्रयव्याष्टिपुरुषाणां प्रथमत्वाद्धिरण्यगर्भस्य। तथा मोक्षधर्मे चतुर्मुखस्य अहङ्कारसंज्ञत्वमुक्तम् ॥

मया सृष्टः पुरा ब्रह्मा मद्यज्ञमयज(मकरो)त्स्वयम्।
ततस्तस्मै वरान्प्रीतो ददावहमनुत्तमान्।
मत्पुत्रत्वञ्च कल्पादौ लोकाध्यक्षत्वमेव च।
अहङ्कारकृतश्चैव तथा पर्यायवाचकम् ॥ इति।

तत्रैव भृगुभरद्वाजसंवादे—

तस्मात्पद्मात्समभवद्ब्रह्मा वेदमयो निधिः।
अहङ्कार इति ख्यातस्सर्वभूतात्मभूतकृत्।
ब्रह्मा च स महातेजा य एते पञ्च धातवः।

इति चोक्तत्वात्। तस्मादयमर्थः अहमस्मि अहं स्यां चतुर्मुखस्स्यामिति सङ्कल्पवाक्यं व्याहरत् ततोऽहंनामा चतुर्मुखोऽभवदित्यर्थ" इत्यादिना श्रुत्यर्थं निरणैषुः। उक्तञ्च नृसिंहतापनीये—"सर्वाहंमानी हिरण्यगर्भः" इति। शुभचतुर्मुखः शुभानि ऋगादिचतुर्वेदोच्चारणानु-

कूलतया कल्याणानि चत्वारि मुखानि यस्य सः अनेन "वेदेन रूपे व्यकरोत्सतासती प्रजापतिः" ॥

नामरूपञ्च भूतानां कृत्यानाञ्च प्रपञ्चनम् ।
वेदशब्देभ्य एवादौ देवादीनां चकार सः ॥

इत्यादिश्रुतिस्मृतिप्रसिद्धा 'ततो भूतगणान् सृजन्' इति वक्ष्यमाणसृष्टिसामग्री पूर्णेति सूचितम्। स तु चतुर्मुख इति क्वचित्पाठः तत्पाठेऽप्ययमर्थ उपस्कार्यः मुखचतुष्टयस्य वेदचतुष्टययुक्तत्वमुक्तं विष्णुधर्मोत्तरे—

ब्रह्मा देववरो ज्ञेयस्सर्वभूतनमस्कृतः ॥ ३ ॥ ४६ ॥ ७ ॥
ऋग्वेदः पूर्ववदनं यजुर्वेदस्तु दक्षिणम् ।
पश्चिमं सामवेदस्स्यादाथर्वणमथोत्तरम् ॥ इति ।

[1] हिरण्यगर्भः "हिरण्मयमण्डं तस्य गर्भ इव—
तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् ।
तस्मिन् जज्ञे स्वयं ब्रह्मा" इति मनूक्तेरिति सुधायां हिरण्यगर्भशब्दो विवृतः ॥

---

[1] अत्र गर्भपदप्रयोगेण गर्भोपनिषदि "यदि योन्यां प्रमुञ्चामि तं प्रपद्ये नारायणमि" त्यादिना "जातमात्रस्तु वैष्णवेन वायुना संस्पृश्य तदा न स्मरति जन्ममरणं न च कर्म शुभाशुभम्" इत्यन्तेनोक्ता जननात्पूर्वं पूर्वजात्यादिस्मरणाद्यवस्था जननानन्तरं तद्विसजातीयावस्था च सर्वजीवसाधारणी चतुर्मुखस्यापि निश्शेषं न परित्याज्येति सूचितम् । तदाह पराशरः—

द्विविधा भावना भूप विश्वमेतन्निबोधत ।
ब्रह्माख्या कर्मसंज्ञा च तथा चैवोभयात्मिका" ॥ ६ । ७ । ४८ ॥
हिरण्यगर्भादिषु च ब्रह्मकर्मात्मिका द्विधा ।
बोधाधिकारयुक्तेषु विद्यते भावभावना ॥ ५१ ॥ इति ।

भगवान् ज्ञानशक्त्यादि षाड्गुण्यपूर्णवासुदेवात्मकः, वासुदेव एव वा भगवच्छब्दार्थः सामानाधिकरण्यमपृथक्सिद्धिनिबन्धनम्। उक्तञ्च बृहन्नारदीये—

वासुदेवात्मकं सर्वं जगत्स्थावरजङ्गमम् ।
आब्रह्मस्तंबपर्यन्तं तस्मादन्यन्न विद्यते । इति ।

सर्वजीवसाधारणस्य वासुदेवात्मकत्वस्य चतुर्मुखे विशिष्य कथनम् "या ते धामानि परमाणि यावमा या मध्यमा विश्वकर्मन्नुतेमा" इति श्रुत्युक्तमध्यमशरीरत्वबोधनमुखेन पौष्करायुक्तगौणप्रादुर्भावत्वसूचनार्थम् ॥

यद्वा भगवान् "उत्पत्तिं प्रलयञ्चैव भूतानामागतिं गतिम्। वेत्ति विद्यामविद्याञ्च" इत्युक्तज्ञानविशेषवान्, द्युतिमानिति क्वचित्पाठः तत्पाठे द्युतिमान् कान्तिमान् अनेन सर्वचेतनसमष्टिभरितविग्रहवत्त्वमुक्तं भवति। सर्वलोकपितामहः सर्वलोकानां पितरः मरीच्यादयः तेषां पिता "पितृव्यमातुलमातामहपितामहा" इति निपातनात्साधुः। अनेन चतुर्मुखेन मरीच्यादिद्वारा क्रियमाणा सृष्टिरुक्ता। एतावता "ता इमा आपस्तद्धिरण्मयमण्डमभवत्। तत्र ब्रह्मा चतुर्मुखोजायत" इति महोपनिषदर्थस्संक्षिप्तः ॥ अथ "आपो वा इदमासंत्सलिलमेव स प्रजापतिरेकः पुष्करपर्णे समभवत्। "यन्नाभिपद्मादभवन्महात्मा प्रजापतिः" "अजस्य नाभावध्येकम्—विश्वकर्मा ह्यजनिष्ट देवः' इत्यादि श्रुत्यभिप्रायेणाह पद्मेऽनिरुद्धात्संभूत इत्यादि, पद्म-

हिरण्यगर्भो भगवान्वासवोऽथ प्रजापतिः ।
मरुतो वसवो रुद्रा भास्करास्तारका ग्रहाः ॥ ५६ ॥
प्रधानादि विशेषान्तं चेतनाचेतनात्मकम् ।
मूर्तमेतद्धरे रूपं भावनात्रितयात्मकम्" ॥ ५६ ॥ इति च ।

निभेक्षण इति अनेन सृष्ट्यौपयिकेक्षणसम्पत्तिस्सूचिता । सहस्रपत्रे इत्यादि सहस्रपत्रे सनातन उपविष्ट इति योजना, एतेन भगवन्नाभि-कमल एव चतुर्मुखेन सृष्ट्यादिकं कृतमिति सूचितम् । व्यक्तमेतद्धरि-वंशादौ । ददृशे इत्यादि, प्रभुस्सत्त्वस्थस्सपरमेष्ठी तत आपोमयान् लोकान् भूतगणान् सृजन् अद्भुतसङ्काशो ददृशे इति योजना सत्त्वस्थः[1] सत्त्वगुणयुक्ते तन्निमित्ते वा देवशरीरे तिष्ठतीति तथोक्तः "सुपिस्थः" इति कः देवोत्तमः देवजातीय इति यावत् ॥

---

[1] यथोक्तं मनुस्मृतौ—

सत्त्वं ज्ञानं तमोऽज्ञानं रागद्वेषौ रजस्स्मृतम् ।
एतद्व्याप्तिमदेतेषां सर्वभूताश्रितं वपुः ॥ १२ ॥ २६ ॥

इत्युपक्रम्य—

त्रयाणामपि चैतेषां गुणानां यः फलोदयः ।
अग्र्यो मध्यो जघन्यश्चे"त्यादिना तन्निमित्तकर्माण्युक्त्वा—
येन यांस्तु गुणेनैतान् संसारान् प्रतिपद्यते ।
तान् समासेन वक्ष्यामि सर्वस्यास्य यथाक्रमम् ॥ २९ ॥
देवत्वं सात्विका यान्ति मनुष्यत्वञ्च राजसाः ।
तिर्यक्त्वं तामसा नित्यमित्येषा त्रिविधा गतिः ॥ इति ।

तन्निमित्तकशरीरभेदानभिधाय तत्राप्यधममध्यमोत्तमभेदकथनावसरे—

ब्रह्मा विश्वसृजो धर्मो महानव्यक्तमेव च ।
उत्तमां सात्विकीमेतां गतिमाहुर्मनीषिणः ॥ ५० ॥
एष सर्वस्समुद्दिष्टस्त्रिप्रकारस्य कर्मणः ।
त्रिविधस्त्रिविधः कृत्स्नस्संसारस्सार्वभौतिकः ॥ इति ॥

एतेन मैत्रायणीयश्रुत्यादौ रजोगुणाधिष्ठातृत्वेनोक्तस्य चतुर्मुखस्य कथं सत्त्वस्थतेति शङ्काऽपाकृता ॥

परमेष्ठी परमे उत्कृष्टे भगवन्नाभिपद्मे तिष्ठतीति तथोक्तः "परमेस्थःकित्" इत्यौणादिक इनिः। आपोमयान् लोकानित्यत्र लोकशब्दो जनिमत्प्राणिपरः आपोमयत्वञ्च प्रलयकालिकं एतच्च पूर्वोदाहृतविष्णुधर्मोत्तरवचनादौ स्पष्टम्। भूतगणानिति भूतशब्दः पाञ्चभौतिकस्थावरजङ्गमशरीरवत्परः भृगुभरद्वाजसंवादादौ चैतत्पूर्वमेव स्पष्टमुक्तम्। अत्राप्युपक्रमे—

यत्किञ्चिदिह लोके वै देहबद्धं विशाम्पते।
सर्वं पञ्चभिराविष्टं भूतैरीश्वरबुद्धिजैः॥ इत्यनेन तदेव स्मारितम्॥

पूर्वमेव च पद्मस्य पत्रे सूर्यांशु (ग्नि) सप्रभे।
नारायण (णा) कृतौ बिन्दू अपामास्तां गुणोत्तरौ॥
तावपश्यत्स भगवाननादिनिधनोऽच्युतः।
एकस्तत्राभवद्बिन्दुर्मध्वाभोरुचि (धि) रप्रभः॥ २५॥
स तामसो (नामतो] मधुर्जातस्तदा नारायणाज्ञया।
कठिनस्त्वपरो बिन्दुःकैटभो राजसस्तु सः॥ २६॥
तावभ्यधावतां श्रेष्ठौ तमोरज (जो) गुणान्वितौ।
बलवन्तौ गदाहस्तौ पद्मनालानुसारिणौ॥ २७॥
ददृशातेऽरविन्दस्थं ब्रह्माणममितप्रभम्।
सृजन्तं प्रथमं वेदांश्चतुरश्चारुविग्रहान्॥ २८॥
ततो विग्रहवन्तस्तान्वेदान् दृष्ट्वाऽसुरोत्तमौ।
सहसा जगृहतुर्वेदान् ब्रह्मणःपश्यतस्तदा॥ २९॥
अथ तौ दानवश्रेष्ठौ वेदान् गृह्य सनातनान्।
रसां विविशतुस्तूर्णमुदकपूर्वे महोदधौ॥ ३०॥

ततो हृतेषु वेदेषु ब्रह्मा कश्मलमाविशत् ।
ततो वचनमीशानं प्राह वेदैर्विनाकृतः ॥३१॥

वेदा मे परमं चक्षुर्वेदा मे परमं बलम् ।
वेदा मे परमं धाम वेदा मे ब्रह्मचोत्तर[म]म् ॥

मम वेदा हृतास्सर्वे दानवाभ्यां बलादितः ।
अन्धकारा हि मे लोका जाता वेदैर्विना कृताः ॥३३॥
वेदानृते हि किङ्कुर्यां लोकानां [न्वै]सृष्टि [स्रष्टु]
मुत्तमाम् [यतः]।
अहो बतमहद्दुःखं वेदनाशनजं मम ॥ ३४ ॥
प्राप्तं दुनोति हृदयं तीव्रशोकपरायणम्म ।
को हि शोकार्णवे मग्नं मामितोऽद्य समुद्धरेत् ॥ ३५ ॥

वेदांस्तांश्चानयेन्नष्टान् कस्य चाहं प्रियो भवे ।
इत्येवं भाषमाणस्य ब्रह्मणो नृपसत्तम ॥ ३६ ॥

हरेस्तोत्रार्थमुद्भूता बुद्धिर्बुद्धिमतां वर ।
ततो जगौ परं जप्यं साञ्जलिप्रग्रहःप्रभुः ॥ ३७ ॥

ब्रह्मोवाच—

नमस्ते ब्रह्महृदय नमस्ते मम पूर्वज ।
लोकाद्य भुवनश्रेष्ठ साङ्ख्ययोगनिधे प्रभो ॥ ३८ ॥

व्यक्ताव्यक्तकराचिन्त्यक्षेमं पन्थानमास्थित ।
विश्वभुक्सर्वभूतानामन्तरात्मन्नयोनिज ॥ ३९ ॥

अहं प्रसादजस्तुभ्यं लोकधाम स्वयंभुवः ।
त्वत्तो मे मानसं जन्म प्रथमं द्विजपूजितम् ॥ ४० ॥

चाक्षुषं वै द्वितीयं मे जन्म चासीत्पुरातनम् ।
त्वत्प्रसादात्तु मे जन्म तृतीयं वाचिकं महत् ॥ ४१ ॥

त्वत्तश्श्रवणजश्चापि चतुर्थं जन्म मे विभो ।
नासिक्यश्चापि मे जन्म त्वत्तःपञ्चममुच्यते ॥ ४२

अण्डजश्चापि मे जन्म त्वत्तष्षष्ठं विनिर्मितम् ।
इदञ्च सप्तमं जन्म पद्मजन्मेति वै प्रभो ॥ ४३ ॥

सर्गे सर्गेऽप्यहं पुत्रस्तव त्रिगुणवर्जित ।
प्रथमःपुण्डरीकाक्ष पधानगुणकल्पितः ॥ ४४ ॥

त्वमीश्वरस्वभावश्च भूतानां त्वं प्रभावन ।
त्वया विनिर्मितोऽहं वै वेदचक्षुर्वयोऽतिग ॥ ४५ ॥

ते मे वेदा हृताश्चक्षुरन्धो जातोऽस्मि जागृहि ।
ददस्व चक्षूंषि मम प्रियोऽहं ते प्रियोऽसि मे ॥ ४६ ॥

एवं स्तुतस्स भगवान् पुरुषस्सर्वतोमुखः ।
जहौ निद्रामथ तदा वेदकार्यार्थमुद्यतः ॥ ४७ ॥

सूर्यांशुसप्रभे इति प्रभया सह सप्रभं तास्मिन् तुल्ययोगे बहुव्रीहिः "वोपसर्जनस्ये" ति सहस्य सः। गुणोत्तरौ रजस्तमोगुणाभ्यां श्रेष्ठौ; सः श्रुत्यादिष्वनवधिकमहिमवत्त्वेन प्रसिद्धः भगवान् षाड्गुण्यपरिपूर्णः अनादिनिधनः आद्यन्तावधिशून्यः अच्युतः—

च्यवनोत्पत्तियुक्तेषु ब्रह्मेन्द्रवरुणादिषु ।
यस्मान्न च्यवसे स्थानात्तस्मात्सङ्कीर्त्यसेऽच्युतः ॥

इत्युक्तप्रकारेण चतुर्मुखस्य कर्ममूलोत्पत्तिकालात्प्राक् स्वेच्छयाऽनिरुद्धदिव्यमङ्गलविग्रहपरिग्रहेऽपि च्युतिरहितः, च्यवनोत्पत्तियुक्तेष्वित्यत्र च्यवनोत्पत्ती कर्ममूले विवक्षिते। मध्वाभः मधुनः क्षौद्रस्याभेवाभा यस्य सः 'स तामस' इति 'स नामत' इति क्वचित्पाठः 'कैटभो राजसस्तु स' इत्यनुरोधेन 'स तामसो मधु'रि त्येव पाठो युक्तः। 'तमोरजगुणान्विताविति' अत्र रजश्शब्दोऽदन्तः यथोक्तं सुधायां रजश्शब्दविवरणावसरे अदन्तोऽपि 'रजोऽयं रजसा सार्धं स्त्रीपुष्पगुणधूलिषु, इत्यजयः' इति। तमोरजोगुणान्विताविति पाठस्तु छन्दोभङ्गाद्धेयः। तत इत्यादि। ईशानमिति एतेन "ब्रह्मविष्णुरुद्रेन्द्रास्ते सर्वे संप्रसूयन्ते" इत्यथर्वशिखायां ब्रह्मादिजनकतया प्रस्तुत ईशानोऽनिरुद्ध इति सूचितम्। उक्तञ्च पूर्वमेव नारदं प्रति वासुदेवेन॥

"सोऽनिरुद्धस्स ईशानो व्यक्तिस्सा सर्वकर्मसु।" इति। वेदा इत्यादि चक्षुः स्रक्ष्यमाणवस्तुज्ञानसाधनम् बलं सृष्ट्यनुगुणशक्तिसाधनम् धाम सर्गप्रयोजकतेजस्साधनम् उत्तमं ब्रह्म परब्रह्म ज्ञानसाधनम् अतस्त्वां स्तोतुमप्यहं नेश इति भावः। प्राप्तं अर्हार्थे क्तः सृष्टिसंबन्धयोग्यमित्यर्थः॥

यद्वा आदिकर्मणि क्तः। सर्गारम्भे प्रवृत्तामित्यर्थः। दुनोति परितप्यते "टु दु उपतापे" इति स्वादिः, जप्यं श्रेयोर्थिभिः पुरुषैरनुसन्धातुं योग्यम् साञ्जलिप्रग्रह इति अञ्जलेः युतहस्तयोः प्रकर्षेण [1] मनोवाग्व्यापारसंवलनेन ग्रहः उपादानं तेन सह वर्तमान इत्यर्थः॥

---

[1] अत्र मनोवाक्कायव्यापारत्रयकथनेन भरद्वाजाहिर्बुध्न्याद्युक्तप्रकारेण पूर्णनमनं प्रपत्तिरूपं चतुर्मुखेनानुष्ठितमित्यवगम्यते। अत्राञ्जलिपदप्रयोगेण—

अञ्जलिः परमा मुद्रा क्षिप्रं देव प्रसादिनी।
कृतापराधस्य हिते नान्यत्पश्याम्यहं क्षमम्।
अन्तरेणाञ्जलिं बद्ध्वा लक्ष्मणस्य प्रसादनात्॥
सोऽञ्जलिं शिरसा कृत्वा वाक्यमाह वनस्पतिम्।
शरणं हि गतोऽस्म्यद्य देवतां त्विह वासिनीम्॥
बद्धाञ्जलिपुटं दीनं याचन्तं शरणागतम्।
न हन्यादानृशंस्यार्थमपि शत्रुं परन्तप॥

इत्याद्युक्ताञ्जलिवैभवस्सूचितः। नारायणाख्यानेऽप्येकान्तिनामञ्जलिसम्बन्धउक्तः।

श्वेतांश्चन्द्रप्रतीकाशांस्सर्वलक्षणलक्षितान्।
नित्याञ्जलिपुटान् ब्रह्म जपतः प्रागुदङ्मुखान्॥
मानसो नाम स जपो जप्यते तैर्महात्मभिः" ॥ ३४४—४० ॥
नारदः प्राञ्जलिर्भूत्वा नारायणपरायणः।
जजाप विधिवन्मन्त्रान्नारायणसमाश्रितान्॥
दिव्यवर्षसहस्रं हि नरनारायणाश्रमे" ॥ ३५४—२७ ॥ इति।
अत्र स्तुत्युपसंहारे "प्रियोऽहं ते प्रियोऽसि मे" इत्युक्तया॥

"प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः" इति गीताप्रत्यभिज्ञापनमुखेन स्वस्य ज्ञानित्वमाविष्कृतम्॥

जितन्ते पुण्डरीकाक्ष नमस्ते विश्वभावन ।
नमस्तेऽस्तु हृषीकेष महापुरुष पूर्वज ।
इतिशब्दश्श्रुतोऽस्माभिश्शिक्षाक्षरसमन्वितः ॥ ३४४–४९ ॥

इति श्वेतद्वीपवासिभिरनुसंहितऋग्वेदाखिलमन्त्रप्रकारेण नमस्ते इत्येव चतुर्मुखो जगादेत्याह "ब्रह्मोवाच नमस्ते" इत्यादिना। नमस्ते इत्यत्र [1] नमश्शब्दश्शरणागतिपरः ॥

ब्रह्महृदय "अहं ते हृदयं राम" इति रामायणे चतुर्मुखवचनवदत्रापि "पुत्रो वै हृदयम्" इति श्रुत्यनुरोधेन हृदयशब्दः पुत्रवचनः ब्रह्मा हृदयं यस्य स इति बहुव्रीहिः, वेदतात्पर्यविषय इति वा त्वदन्यः न कोऽपि वेदानुद्धर्तुमुत्सहते नापीष्टे, इति भावः, एकं नमस्ते इति भरसमर्पणपरम्" अपरश्च निर्भरत्वानुसन्धानपरम् इति सारशास्त्रनिष्णातानां सुगमम् । मम पूर्वजेति मत्तः पूर्वं मदर्थमवतीर्य परम-

---

[1] अरण्यपर्वणि—

"शरणं प्रति देवानां प्राप्तकालममन्यत ।
वाचा च मनसा चैव नमस्कारं प्रयुज्य सा ।
देवेभ्यः प्राञ्जलिर्भूत्वा वेपमानेदमब्रवीत्" ॥३१५–११॥

इति दमयन्तीशरणागतौ नमश्शब्दप्रयोगात् एवं तत्रैव—

यस्स देवो मया दृष्टः पुरा पद्मायतेक्षणः ।
स एष पुरुषव्याघ्रस्सम्बन्धी ते जनार्दनः ॥१९२ ॥ ५२ ॥ इत्यारभ्य ।
गच्छध्वमेनं शरणं शरण्यं पुरुषर्षभाः ।

इति मार्कण्डेयेन युधिष्ठिरं प्रत्युपदेशसमनन्तरम्—

एवमुक्तास्त्रयुः पार्था यमौ च भरतर्षभ ।
द्रौपद्या सहितास्सर्वे नमश्चक्रुर्जनार्दनम् ॥ ५२ ॥ २ ॥

इत्यत्र नमश्चक्रुरित्येनेन शरणागत्यनुष्ठानकथनाच्च ॥

कारुण्येन मत्स्यसृष्ट्यादौ प्रयतमानस्य वेदोद्धरणादौ कियानिव भारस्स्यादित्याशयः । पूर्वजेत्यत्र जनिर्न कर्मकृता विवक्षिता किन्तु स्वेच्छाधीना। एतच्च अत्र पूर्वं 'अच्युत, इत्यनेन उत्तरत्र अयोनिज 'त्वमीश्वरस्वभावश्च, 'ऐश्वरेण स योगेन द्वितीयां तनुमास्थितः, 'निष्कल्मषेण सत्त्वेन,

यां यामिच्छेत्तनुं देवः कर्तुं कार्यविधौ क्वचित् ।
तां तां कुर्याद्विकुर्वाणस्स्वयमात्मानमात्मना ॥

इत्यादिभिश्च सिद्ध्यति । एवं ।

शुभाशुभैःकर्मभिर्यो न लिप्यति कदाचन ।

इति नारदं प्रति वासुदेववचनादिमूलभूताभिः "अनश्नन्नन्यो अभिचाकशीति" "एष आत्मा अपहतपाप्मा" "न कर्मणा वर्धते नो कनीयान्" "स न साधुना कर्मणा भूयान् नो एवासाधुना कनीयान्" इत्यादिश्रुतिभिश्च । अतस्स्वेच्छयाऽवताररूपैव जनिरिति सिद्धम् । अहामित्यादि स्वयम्भुवः तव प्रसादजः लोकधाम अहं तुभ्यं त्वच्छेषभूत इत्यर्थः स्वयंप्रभुरित्यपि क्वचित्पाठः सर्ग इत्यादि प्रधानगुणेन रजसा कल्पितः प्रथमः पुत्रः पुण्डरीकाक्षेति सम्बुद्धिपाठ एव युक्तः सर्वतोमुख इति सर्वतोमुखशब्दार्थश्चेत्थमुक्तो भट्टपराशरपादैः "तेषामनेनैव मुखेन सुग्रहः नान्येन नियमं निर्धूय येन केनापि व्याजेन सुप्रवेशत्वात् सर्वतोमुखः यथा "आर्तो वा यदि वा दृप्तः परेषां शरणागतः" इत्यादीनि ततश्च रक्ष्यापेक्षाविगमदशायां स्वान्तरङ्गभूतनिद्राविवशमुखोऽपि चतुर्मुखशरणागतिसमनन्तरमेव बहिरङ्गरक्ष्यभूतचतुर्मुखपरतन्त्रः परमप्रियामपि निद्रां जहाविति भावः । वेदकार्यार्थं वेदाहरणकार्यार्थमुत्थितः उद्यत इत्यपि पाठः ॥

एतावता नासदासीयसूक्तविश्वकर्मसूक्ताद्युक्तदिशा चतुर्मुख-जन्मपर्यन्तमुक्तम्। एवं 'प्रजापतिः प्रजास्सृष्ट्वा व्यस्रंसत स च्छन्दोभिरात्मानं समदधात्' इत्यैतरेयोपनिषदभिप्रेतं मधुकैटभाभ्यां वेदानामपहरणम् तन्मूलकं चतुर्मुखस्य दुःखं 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै। तँ् ह देवमात्मबुद्धिप्रसादं मुमुक्षुर्वै शरणमहं प्रपद्ये' इति श्वेताश्वतरश्रुत्यभिप्रेतं चतुर्मुखकर्तृकशरणवरणं चोक्तम्॥

अथ (तै. ब्रा.) नासदासीयसूक्तानन्तरं प्रातरग्निमित्याद्यनुवाकं[1] 'आदि[2]र्गन्धर्वोऽभवद्द्वितीयः' इति उदाहृततैत्तिरीयविश्वकर्मसूक्तवाक्यं चानुसृत्य [3]ऐतरेय[4]श्वेताश्वतरोपनिषद्वाक्ययोरपि हय-

---

[1] आथर्वणकौशिकसूत्रे अस्यानुवाकस्य मेधाजननार्थकर्मणि विनियोगस्याभिधानेन 'प्रातरग्नि' मित्यादिहयग्रीवमनुं जपेत् इति पराशरसंहितावचनानुसारेण च अयमनुवाको हयशिरःपर इति भावः॥

[2] मत्स्यकूर्मवराहश्व हंसरूपादिभि स्स्थितिम्।

चकार जगतो योऽजस्सोद्य मामालपिष्यति॥ इति विष्णुपुराणे ५-१७. पराशरेण हयशिरसः अश्वशब्देन निर्देशाद्गन्धर्वशब्दः हयशिरःपर इति भावः॥

[3] पूर्वोत्तरवाक्यानुसारादपि अस्य हयशिरःपरत्वं स्थापयिष्यते॥

[4] पूर्वं एको हँ्स, इति मन्त्रे विष्णुहयादिवाचि हंसशब्दात् 'ज्ञः कालकालो गुणी सर्वविद्यः' इति सर्वविद्यत्वोक्तेः उत्तरत्र 'ब्रह्म ह श्वे ताश्वतरोऽथ विद्वान्' इत्यत्र' 'श्वेताश्व'शब्दाच्च 'यो ब्रह्माणं विदधादि पूर्वं' मिति मन्त्रेऽपि श्वेताश्वो हयशिरा विवक्षित इति भावः॥

शिरोऽवतारो विवक्षित इत्यभिप्रेत्य तदवतारं निरूपयति ऐश्वर्येणेत्यादिना ॥

ऐश्वर्ये (रे) ण प्र (स) योगेन द्वितीयां तनुमास्थितः ।
सुनासिकेन कायेन भूत्वा चन्द्रप्रभस्तदा ॥
कृत्वा हयशिरश्शुभ्रं वेदानामालयं प्रभुः ।

ऐश्वर्येणेत्यादि ऐश्वर्यं नियमनोपाश्लिष्टं स्वामित्वं प्रयोगेन प्रकृष्टोयोगस्सम्बन्धो यस्य तत्प्रयोगं तेन प्रकृष्टसम्बन्धवतेत्यर्थः, ऐश्वर्येणेत्यत्र वैशिष्ट्ये तृतीया यत् विभवावतारेष्वपि नित्यसम्बद्धमैश्वर्यं तद्धयशरीरपरिग्रहेऽपि न च्यवत इति भावः, यद्वा हेतौ तृतीया हयशिरश्शरीरपरिग्रहे नित्यसम्बद्धमैश्वर्यमेव मूलं नान्यत्कर्मादिकमपीति भावः। अथवा ऐश्वर्यं—

कर्तृत्वं नाम यत्तस्य स्वातन्त्र्यपरिबृंहितम् ।
ऐश्वर्यं नाम तत्प्रोक्तं गुणतत्त्वार्थचिन्तकैः ॥

इत्यहिर्बुध्न्यादिनिरुक्तं स्वतन्त्रकर्तृत्वमेवात्र विवक्षितं एतेन हयशिरःप्राप्तौ शक्त्यनुग्रहो मूलमित्युत्प्रेक्षयन्ताश्शिक्षिताः ऐश्वरेणसयोगेनेत्यपि क्वचित्पाठः अस्मिन् पाठे योगपदं 'योगस्सन्नहनोपायध्यानसंगतियुक्तिषु' इति कोशात् वपुः परम् तृतीया चाभेदे अप्राकृतवासुदेवविग्राहभिन्नां तनुमित्यर्थः। यद्वा उपादानहेतौ तृतीया तदर्थश्च अस्थितः इत्यत्र स्थाधात्वर्थेनान्वेति अतश्च हयशिरोविग्रहस्याप्राकृतत्वमुक्तं भवति इदञ्च "दिदृक्षुः' (६६) 'विवस्वते' (३८) इत्युदाहृतवचनैरपि व्यञ्जितम् । द्वितीयाम्—

तद्विश्वभावं सज्ञान्तं पौरुषीं तनुमाश्रितम् ।

इति पूर्वोक्तव्यूहविग्रहापेक्षया द्वितीयां विभवरूपामित्यर्थः। तनुमास्थित इति —

देशकालाध्वभावानामन्तर्भूतक्रियान्तरैः।
सर्वैरकर्मकैर्योगे कर्मत्वमुपजायते ॥

इत्युक्तदिशाऽत्र सकर्मकता, विवेचितश्चैतदस्माभिरीशावास्यभाष्यविवरणे। अत्र 'द्वितीया' मित्यनेन तैत्तिरीयप्रथमविश्वकर्मसूक्ते "तमिद्गर्भं प्रथमं दध्र आपो यत्र देवास्समगच्छन्ति विश्वे। अजस्य नाभावध्येकमर्पितं यस्मिन्निदं भुवनमधिश्रितम्। विश्वकर्मा ह्यजनिष्ट देव आदिद्गन्धर्वो अभवद्द्वितीयः। तृतीयः पिता जनितौषधीनामपां गर्भं व्यदधात्पुरुत्रा"। इत्यत्र "आदिद्गन्धर्वो अभवद्द्वितीय" इति श्रुतिर्मूलभूता प्रत्यभिज्ञापिता। गन्धर्वपदस्याश्वार्थकतया अश्वशिरःपरत्वम्। अत एव—

मत्स्यकूर्मवराहाश्वसिंहरूपादिभिस्स्थितिम्।
चकार जगतो योऽजस्सोऽद्य मामालपिष्यति ॥ ५-१७-१० ॥

इति विष्णुपुराणे 'मावाकियामैयाय्मीनाकिमानिडमाम्' इति श्रीमुखसूक्ते च हयवाचिशब्देन हयाशिरसो निर्देशस्सङ्गच्छते। एवं तनुमित्यनेन द्वितीयविश्वकर्मसूक्ते "या ते धामानि परमाणि यावमायामध्यमाविश्वकर्मन्नुतेमा। शिक्षा सखिभ्यो हविषिस्वधावस्स्वयं यजस्व तनुवं जुषाणः। वाचस्पतिं विशकर्माणमूतये" इत्यादेर्मूलता ज्ञापिता, सूक्तद्वयघटकपदद्वयप्रयोगेण तैत्तिरीये "इन्द्रो वृत्रमहन् तं वृत्रो हतः"। ५-४-५ इत्यारभ्य "वैश्वकर्मणेन पाप्मनो निरमुच्यत" "वैश्वकर्मणे न पाप्मनो निर्मुच्यते" इति विश्वकर्मसूक्तसाध्यहोमस्य इन्द्रस्य वृत्रवधानन्तरजातब्रह्महत्याजनितपापापनोदनार्थत्वमभिधाय "यङ्कामयेत ताजक्पाप्मनो निर्मुच्येतेति सर्वाणि तस्यानुद्धृत्य जुहुयात्ताजगेव पाप्मनो निर्मुच्यते"

सं (५-४-५) इति एकहोमसाधनत्वेनाम्नातयोस्सूक्तयोरुभयोरपि गन्धर्ववाचस्पतिशब्दबोध्यहयशिरोरूपैकार्थपरत्वमिति बोधितम् । एवं "पौरुषीं तनुं" "ऐश्वरेण स योगेन द्वितीयां तनुम्" "यां यामिच्छेत्तनुं देव" इति आदिमध्यावसानेषु [1] कठमुण्डकमैत्रायणीयादिश्रुतिप्रसिद्धतनुशब्दप्रयोगः विग्रहस्योपासनार्थत्वकर्मकृतत्वादिशङ्कामुन्मूलयति ॥

---

[1] कठोपनिषदि "सर्वे वेदाः, तत्ते पदं सङ्ग्रहेण ब्रवीम्योमित्येतत्" इति प्राप्यस्वरूपप्रतिवचनमुपक्रम्य "नायमात्मा, तस्यैष आत्मा विवृणुते तनूँ स्वाम्" इति दिव्यमङ्गलविग्रहस्य प्राप्यत्वम् "सोऽध्वनःपारमाप्नोति तद्विष्णोःपरमं पदम्" इति स्थानस्य प्राप्यत्वञ्चाभिधाय "पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः" इति परवासुदेवस्य परमप्राप्यत्वमुपसंहृतम् । अत्र 'तद्विष्णोःपरमं पद' मित्यत्र पदशब्दस्य स्थानार्थकत्वं "विशेषणाच्च" इति सूत्रे वेदान्तसारे "यदण्डमण्डान्तर" इति स्तोत्रभाष्ये च स्पष्टम् । ततश्च अप्राकृतदेशे दिव्यमङ्गलविग्रहविशिष्टःपरवासुदेव एव प्राप्यः न ब्रह्मस्वरूपमात्रम्, इति श्रुत्यर्थनिष्कर्षःकृतः । "भक्त्या त्वनन्यया शक्य" इत्येकादशाध्यायगीतातात्पर्यचन्द्रिकायाम् "अत्र तनुशब्दस्य विग्रहपरत्वे स्वरूपादिकं तत्परत्वे च विग्रहादिकमर्थलब्धम्" इत्युक्तपक्षद्वये प्रथमपक्ष एवाचार्यपादानां नैर्भर्यम्, स्तोत्रभाष्ये "तद्विष्णोःपरमं पद" मित्यत्र पदशब्दस्य शब्दस्वारस्यानुरोधेन स्थानार्थकताया आचार्यपादविवक्षितत्वेन तनुशब्दस्वारस्यानुरोधस्यापि न्याय्यत्वात् । स्थानस्य प्राप्यताग्राहकप्रमाणान्तरवत् दिव्यमङ्गलविग्रहस्यापि प्राप्यताग्राहकप्रमाणानां सत्त्वात्, "पुरुषान्न परं किञ्चिदि"त्यादिना स्वरूपस्य प्राप्यतायाःपृथगुक्तेः "विवृणुते तनूँ स्वामि"ति आत्मीयवाचकस्त्रीलिङ्गपदस्वारस्याच्च, अन्यथा स्वशब्देनैकेनैवोपपत्तौ तनुशब्दवैयर्थ्याच्च । एवं 'उपपत्तेश्च" इति सूत्रश्रुत-

प्रकाशिकायां "विवृणुते तनूँ स्वामि"त्यनेन प्रापकत्वं प्राप्यत्वञ्च गम्यते, इति सूक्तावपीत्थमेवार्थोऽनुसन्धेयः। एवं मुण्डकेऽपि "स वेदैतत्परमं ब्रह्मधाम यत्र विश्वं निहितं भाति शुभ्रम्। उपासते पुरुषं ये ह्यकामास्ते शुक्रमेतदतिवर्तन्ति धीराः" "नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूँ स्वाम्" "तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्" "स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति" इत्यत्र आदिमध्यावसानपर्यालोचनायां तनुशब्दस्य यथोक्त एवार्थः। एवं मैत्रायणीयेऽपि चतुर्थे "अग्निर्वायुरादित्यः कालो यः प्राणोऽन्नं ब्रह्म रुद्रो विष्णुरित्येकेऽन्यमभिध्यायन्त्येकेऽन्यम्। श्रेयः कतमो यस्सोऽस्माकं ब्रूहीति। तान् होवाचेति ब्रह्मणो वा वैता अग्र्यास्तनवः परस्यामृतस्याशरीरस्य तस्यैव लोके प्रतिमोदतीह यो यस्यानुषक्त इत्येव ह्याह ब्रह्म खल्विदं वाव सर्वं या अस्या अग्र्यास्तनवस्ता अभिध्यायेदर्चयेन्निहनुयाच्चातस्ताभिस्सहैवोपर्युपरि लोकेषु चरति अथ कृत्स्नक्षय एकत्वमेति पुरुषस्य पुरुषस्य" इत्यत्र पुरुषपदार्थपरवासुदेवशरीरस्य प्रलयासंस्पर्शित्वमुखेन प्राप्यत्वं व्यञ्जितम्। तथा षष्ठे "विद्युदिवाभ्रार्चिषऽपरमे व्योमन्। तेऽर्चिषो वै यशस आश्रयवशाज्जटाभिरूपा इव कृष्णवर्त्मनः। द्वे वाव खल्वेते ब्रह्मज्योतिषो रूपके शान्तमेकं समृद्धञ्चैकमथ यच्छान्तं तस्याधारं खमथयत्समृद्धमिदं तस्यान्नं" इति परव्यूहरूपभेद उक्तः सप्तमे च "एतद्वाव तत्स्वरूपं नभसऽखेन्तर्भूतस्य यत्परं तेजः" इत्युपक्रम्य—

त्रिष्वेकपाच्चरेद्ब्रह्म त्रिपाच्चरति चोत्तरे।
सत्यानृतोपभोगार्थो द्वैतीभावो महात्मनः॥

इत्यत्र परस्य व्यूहात्मना द्वैतीभावस्य फलमप्युपसंहृतम्। मैत्रायणीये चतुर्थे "कृत्स्नक्षय एकत्वमेति पुरुषस्य पुरुषस्य" इति श्रुतितात्पर्यं

"जगत्प्रतिष्ठा देवर्ष्ये पृथिव्यप्सु प्रलीयते।" इत्युपक्रम्य—

अव्यक्तं पुरुषे ब्रह्मन्निष्क्रिये सम्प्रलीयते।
नास्ति तस्मात्परतरः पुरुषाद्वै सनातनात्।
नित्यं हि नास्ति जगति भूतं स्थावरजङ्गमम्।
ऋते तमेकं पुरुषं वासुदेवं सनातनम्।

इत्यन्तेन व्यासो विशदीचकार। तदुक्तमाचार्यपादैस्तत्त्वमुक्ताकलापे—

नित्यत्वं वासुदेवाह्वयवपुषि जगौ मोक्षधर्मे मुनीन्द्रः।

ना. स. ६५। इति, ना. स. ६१। श्लो. व्या. सर्वार्थसिद्धौ च एतदेव वचनं प्रस्तुत्य "भूतशब्दोऽत्र कार्यांशपरः, अत एव जीवलयोक्ति-रौपचारिकी, वासुदेवशब्दोऽत्र परविग्रहविशिष्टपरः, स्वरूपनित्यत्वस्य जीवेष्वपि समत्वात्, विशिष्टलयस्य वासुदेवे विश्वविशिष्टेऽपि सिद्धत्वात्, परविग्रहनित्यत्वोक्तिस्तदनुबन्ध्युपलक्षणार्था" इति। नारायणाख्याने—

शुभाशुभैः कर्मभिर्यो न लिप्यति कदाचन।
नित्यं हि नास्ति जगति भूतं स्थावरजङ्गमम्।
ऋते तमेकं पुरुषं वासुदेवं सनातनम्॥
मयैतत्कथितं सम्यक्तव मूर्तिचतुष्टयम्।
अहं हयशिरा भूत्वा . . .॥

इति पूर्वं नारदं प्रति वासुदेवप्रतिवचनार्थ एव—

तद्विश्वभावसंज्ञान्तं पौरुषीं तनुमास्थितम्।
ऐश्वर्येण स योगेन द्वितीयां तनुमास्थितः।

इत्यादिहयशिरउपाख्यानवचनैस्सङ्गृहीत इति व्यक्तं विदुषाम्। महाभारत एव पूर्वं कृष्णरूपं प्रस्तुत्य—

न भूतसङ्घसंस्थानो देहोऽस्य परमात्मनः।
न तस्य प्राकृता मूर्तिर्मांसमेदोऽस्थिसंभवा।

नैष गर्भत्वमापेदे न योन्यामवसत्प्रभुः ।

इत्युक्तम् , एवं ब्रह्मवैवर्तेऽपि ब्रह्मखण्डे उपक्रमे—

मङ्गल्यं मङ्गलाभञ्च मङ्गलं मङ्गलप्रमु(द)म् ।
प्रकृतेऽपरमीशानं निर्गुणं नित्यविग्रहम् ॥ २ ॥ ३४ ॥

इत्यादि, प्रकृतिखण्डेऽपि—

तत ऊर्ध्वे च वैकुण्ठो ब्रह्माण्डाद्बहिरेव सः ।
स च सत्यस्वरूपश्च शश्वन्नारायणो यथा ॥ ३ ॥ ९ ॥
ब्रह्मादितृणपर्यन्तं शेषं प्राकृतिकं भवेत् ।
यद्यत्प्राकृतिकं दृष्टं सर्वं नश्वरमेव च ॥ ७ ॥ ८ ॥
विद्धयेकं सृष्टिमूलं तत्सत्यं नित्यं सनातनम् ।
स्वेच्छामयं परं ब्रह्म निर्लिप्तं निर्गुणं परम् ॥ ७ ॥ ८७ ॥
निरुपाधिं निराकारं भक्तानुग्रहविग्रहम् ।
अतीव कमनीयञ्च नवीनघनसन्निभम् ॥ ७ ॥ ८८ ॥ इति,

अत्र भक्तानुग्रहविग्रहमित्येनेन—

सर्वभूताधिवासञ्च यद्भूतेषु वसत्यपि ।
सर्वानुग्राहकत्वेन तदस्म्यहं वासुदेवस्तदस्म्यहं वासुदेवः

इति श्रुतितात्पर्यमाविष्कृतम् । कृष्णजन्मखण्डे भगवत्सनत्कुमारसंवादे—

यो यो विग्रह इत्युक्तस्स च प्राकृतिकस्स्मृतः ।
देहो न विद्यते विप्र नित्यस्तां प्रकृतिं विना ॥ ८७ ॥ २४ ॥

सनत्कुमारः—

रक्तबिन्दूद्भवा देहास्ते च प्राकृतिकास्स्मृताः ।
कथं प्रकृतिनाथस्य बीजस्य प्राकृतं वपुः ॥ ८७ ॥ २५ ॥

श्रीकृष्णः—

सांप्रतं वासुदेवोऽहं रक्तवीर्याश्रितं वपुः ।
कथं न प्राकृतो विप्र . . . ॥ ८७ ॥ २९ ॥

सनत्कुमारः—

वासुस्सर्वनिवासश्च विश्वानि यस्य लोमसु ।
तस्य देहः परं ब्रह्म वासुदेव इतीरितः ॥ ८७ ॥ ३० ॥
वासुदेवेति तन्नाम वेदेषु च चतुर्मुख ।

इत्यादि तत्रैव पूर्वं—

शरीरं द्विविधं शंभो नित्यं प्राकृतमेव च ।
नित्यं विनाशरहितं नश्वरं प्राकृतं सदा ॥ इति ।

तृतीयखण्डेऽपि—

केवलं लोकमाश्रित्य कः करोति विनिर्णयम् ।
बलवान् लौकिको वेदाल्लोकाचारञ्च कस्त्यजेत् ॥ ७ ॥ ४९ ॥
सर्वस्रष्टा च यः कृष्णस्सोंऽशेन सगुणः पुमान् ।
पुमान् गरीयान् प्रकृतेस्तथैव न ततश्च सा ॥ ५२ ॥
शङ्खचक्रगदापद्मधरमीशं चतुर्भुजम् ।
लक्ष्मीसरस्वतीकान्तं शान्तं तं सुमनोहरम् ॥ ५५ ॥ इति ॥
विना शक्तिं तथाऽहञ्च स्वसृष्टिं कर्तुमक्षमः ।
शक्तिप्रधाना सृष्टिश्च सर्वदर्शनसम्मता ॥ ७१ ॥
अहमात्मा च निर्लिप्तो दृश्यस्साक्षी च देहिनाम् ।
देहाः प्राकृतिकास्सर्वे नश्वराः पाञ्चभौतिकाः ॥ [illegible]२ ॥
अहं नित्यशरीरी च भानुविग्रहविग्रह[illegible]

अत्र 'भानुविग्रहविग्रह' [illegible] (भानुमान् भानुविग्रहः) । इति ।
[illegible]त्यनेन "य एषोऽन्तरादित्ये हिरण्मयः पुरुषः इत्यादिश्रुतिः प्रत्यभिज्ञा[illegible]प्यते । न च विष्णुधर्मोत्तरे—
"नारायणं [illegible] वेदे[illegible] नमस्कृत्य" इत्यारभ्य—

[illegible]षु गीयते योऽसौ पुरुषः पञ्चविंशकः ।
पुरुषत्वे त्वनन्तस्य तस्य रूपं न विद्यते ।

न च शब्दो न च घ्राणस्स्पर्शो वा तस्य विद्यते ।
न तस्य परिमाणं वा न चादिर्निधनं कुतः ।
सर्वतःपाणिपादं तत्सर्वतोऽक्षिशिरोमुखम् ॥ २ । ८ ॥ "

इत्याद्युक्तिःकथमिति वाच्यम् । दिव्यमङ्गलविग्रहे रूपादिसत्त्वेऽपि दिव्यात्मस्वरूपे रूपाद्यभावेन व्यापकरूपाविपक्षया परिमितनिषेधेन वा रूपाद्यभावश्रुत्युपपत्तेः । अत एवाशरीरत्वमनुक्तं प्रत्युत सर्वतःपाणिपादत्वाद्युक्तम्, एतच्च नारायणाख्याने नारददृष्टवासुदेवरूपे व्यक्तमुक्तं व्यासेन । सात्त्वतेऽपि—

षाड्गुण्यविग्रहं देवं भास्वज्ज्वलिततेजसम् ।
सर्वतःपाणिपादं तदि" त्यादि 'परमेतत्समाख्यातमेकं सर्वाश्रयं विभुम्' इत्यन्तम् ॥

दिव्यमङ्गलविग्रहे रूपविशेषश्च विष्णुधर्मोत्तर एवोत्तरत्र व्यक्तः यथा चतुश्चात्वरिंशे—

देवतारूपनिर्माणं वदतश्शृणु पार्थिव ॥
इत्यादिनाऽर्चारूपाणि कथितानि, षट्चत्वारिंशे—
रूपगन्धरसैर्हीनश्शब्दस्पर्शविवर्जितः ।
पुरुषस्तु त्वया प्रोक्तस्तस्य रूपमिदं कथम् ॥

मार्कण्डेय उवाच—

प्रकृतिर्विकृतिस्तस्य रूपे द्वे परमात्मनः ।
अलक्ष्यं तस्य तद्रूपं प्रकृतिस्सा प्रकीर्तिता ॥ २ ॥
साकारा विकृतिर्ज्ञेया तस्य सर्वं जगत्स्मृतम् ।
पूजाध्यानादिकं कर्तुं साकारस्यैव शक्यते ॥ ३ ॥
स्वतस्तु देवस्याकारःपूजनीयो यथाविधि ।
अतो भगवताऽनेन स्वेच्छया तत्प्रदर्शितम् ।
प्रादुर्भावेप्व्यथाकारं तं विशन्ति दिवौकसः ॥

इत्यनेन स्वाभाविकेच्छाप्रयोज्याऽऽकारं "हेतुमच्च तदाकारम्" इत्यादिना जगदाकारञ्चाभिधाय सप्तचत्वारिंशे—

परस्य पुरुषस्यैषा संसारे विकृतिर्मता ।
सर्वा च विकृतिः कृष्ण तेन संसारकारणम् ।
शुक्लरूपं स भगवान् विधत्ते भूतभावनः ।
ब्रह्मणैव हरेः प्रोक्तं सर्वाभरणधारणम् ।
बिभर्ति वक्षसा ज्ञानं कौस्तुभं भगवान्हरिः ॥

इत्यादिना वासुदेवादिचतुष्टयविग्रहविशेषः प्रकीर्तितः, अत्र 'बिभर्ति, वक्षसे' त्यादिनोक्तं रूपं विष्णुपुराणे प्रथमांशे द्वाविंशेऽध्याये "भूषणास्त्रस्वरूपस्थ" मित्यादिना "अस्त्रभूषणसंस्थानस्वरूप" मित्यन्तेन विशदीकृतम् । तत्रैव षष्ठांशे सप्तमे—

समस्तशक्तिरूपाणि तत्करोति जनेश्वर ।
देवतिर्यङ्मनुष्याख्या चेष्टावन्ति स्वलीलया ।
जगतामुपकाराय न सा कर्मनिमित्तजा ।

इति चोक्तम् । एतेन "यत्ते रूपं कल्याणतमं तत्ते पश्यामि" इतीशावास्यश्रुतौ कल्याणत्वमकर्मवश्यत्वमिति सूचितम्, बृहन्नारदीये च—

आत्मा तु निर्गुणश्शुद्धस्सच्चिदानन्दविग्रहः ।
सर्वोपाधिविनिर्मुक्तो योगिनां भात्यचञ्चलः ॥ ३१ ॥ १४५ ॥
नारायणं परानन्दं स्मरेत्प्रणवसंस्थितम् ।
नादरूपमनौपम्यमर्धमात्रापरिस्थितम् ।

इत्यनेन पूर्वोक्तश्रुतौ कल्याणत्वं जडव्यावृत्तं ज्ञानानन्दस्वरूपत्वमिति बोधितम् । एवञ्च "य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्णस्तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी तस्योदिति नाम स एष सर्वेभ्यः पाप्मभ्य उदितः" इति छान्दोग्यश्रुतिरपि दिव्यमङ्गलविग्रहपरेति सिद्धम् ॥

तदुक्तं विष्णुधर्मे—

श्रूयतान्तु नरव्याघ्र वेदवेदान्तनिश्चयः।
यज्ञेशो यज्ञपुरुषः पुण्डरीकाक्षसंज्ञितः।
तद्विष्णुः परमं ब्रह्म यतो नावर्तते पुनः॥ ९९॥ २७॥
य एष रुद्रश्चन्द्रोऽग्निस्सूर्यो वैश्रवणो यमः।
ब्रह्मा प्रजापतिः कालस्त्वगाधो बुद्धिरेव च।
क्षेत्रज्ञाख्यास्तथैवान्ये संज्ञाभिः प्रोच्यते बुधैः।
संज्ञा तु तस्य नैवास्ति न रूपं वा विकत्थना।
सर्वभूताननुगतः परमात्मा सनातनः। इति॥

अत्र पुण्डरीकाक्षस्यैव सर्वशरीरत्वेन सर्वशब्दवाच्यतया अपरिच्छिन्नसंज्ञारूपवत्वेन रुद्रचन्द्रादिवत्परिच्छिन्नसंज्ञारूपाभाव उक्तः। वाराहेऽपि—

यत्तदेतत्परं ब्रह्म त्वया प्रोक्तं महामुने।
तस्य रूपं न जानन्ति योगिनोऽपि महात्मनः।
अनामगोत्ररहितममूर्तं मूर्तिवर्जितम्।
कथं तज्ज्ञायते ब्रह्म संज्ञारूपविवर्जितम्।
तत्तस्य संज्ञां कथय येन जानाम्यहं गुरो।

दुर्वासा उवाच—

यदेतत्परमं ब्रह्म वेदे शास्त्रे च पठ्यते।
स देवः पुण्डरीकाक्षस्स्वयं नारायणो हरिः।

इत्यादि, भीष्मपर्वणि च—

वासुदेवोऽर्चनीयो वस्सर्वलोकमहेश्वरः॥ ६६॥ १३॥
एतत्पुरुषसंज्ञं वै गीयते ज्ञायते न च॥ १६॥
वासुदेवो महद्भूतं सर्वदैवतदैवतम्।
न परं पुण्डरीकाक्षाद्दृश्यते भरतर्षभ॥ ६७॥ २॥

परं हि पुण्डरीकाक्षान्न भूतं न भविष्यति ।
मुखतस्सोऽसृजाद्विप्रान् बाहुभ्यां क्षत्रियांस्तथा ॥ १७ ॥ इत्यादि ॥

इत्थञ्चाकर्मवश्यज्ञानानन्दात्मकदिव्यमङ्गलविग्रहस्सिद्धः । अत एव बृहदारण्यके चतुर्थे तृतीयब्राह्मणे—

"तस्य हैतस्य पुरुषस्य रूपं यथामाहारजनं वासः" इत्यादिना वासुदेवरूपमभिधाय तद्विशिष्टस्यैव निरतिशयानन्दरूपस्य सर्वान्तर्यामिताप्रतिपादके पञ्चमे मधुब्राह्मणे "इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच तदेतदृषिः पश्यन्नवोचत् पुरश्चक्रे द्विपदः पुरश्चक्रे चतुष्पदः पुरस्सपक्षीभूत्वा पुरः पुरुष आविशदिति स वा अयं पुरुषस्सर्वासु पूर्षु पुरिशयो नानेन किञ्चनानावृतं नानेन किञ्चना संवृतम् । इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच तदेतदृषिः पश्यन्नवोचत् रूपंरूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय । इन्द्रो मायाभिः पुरुरूप ईयते युक्ता ह्यस्य हरयश्शतादशेत्ययं वै हरयोऽयं वै दश च शतानि सहस्राणि बहूनि चानन्तानि च तदेतद्ब्रह्मा पूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म सर्वानुभूरित्यनुशासनम्" इत्यत्र अनन्तरूपवत्त्वाम्नानमपि सङ्गच्छते. तदेतद्गीतं भगवता—

पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः ।
नानाविधानि दिव्यानि नानावर्णाकृतीनि च" ॥ ११ ॥ ५ ॥ इति,

अत्र तात्पर्यचन्द्रिकायां "रूपं रूपं प्रतिरूपो बभूवेति श्रुत्याऽयमप्यर्थो विवक्षित इति केचिदिति" इति—ना. स. ४१ व्या. सर्वार्थसिद्धौ "इन्द्रो मायाभिः पुरुरूप ईयते, इत्येतच्छक्तिविशेषैः प्रभूतरूपप्रकाशनपरमन्यथाऽनन्वयात्, न चेदमिन्द्रप्रभृतिपरं वाक्यं, प्रशंसार्थप्रकरणविरोधात्, कथमन्यथा 'युक्ता ह्यस्य हरयश्शतादश, ' भूरित्वष्टेव राजति, इत्यादिकं घटते ' इति चाचार्यपादाः । "प्रोक्तो विष्णुश्शिखायामपि स हि पुरुषः प्रासतारार्धमात्रः ना. स. १०. इति तत्त्वमुक्ताकलापव्याख्यायां सर्वार्थसिद्धौ च "तत्रैव

प्रणवानिरूपणे स्वार्थस्थापनं व्यनक्ति 'प्रोक्त' इति प्रणवस्य तिसृणां मात्राणां वर्णभेदांस्त्रिमूर्तिदेवताकत्वञ्चोक्त्वा तस्य चतुर्थ्या अर्धमात्रायास्सर्वपुरुषदेवताकत्वञ्चोक्तम्, स च पुरुषः 'सृष्टिस्थित्यन्तकरणी' मित्यादावुक्त एव जनार्दनः 'तस्य हैतस्य पुरुषस्य रूपं यथामाहारजनं वासः यथा पाण्डवाविकं यथेन्द्रगोपः, इत्यादिना च पुरुषस्य सर्ववर्णविग्रहश्श्रुतः, भारतादौ च विश्वरूपपरिग्रहे व्यक्तमेतदिति, इति च । अत्र भारतादौ चेत्यत्र नारायणाख्यानवचनजातं विवक्षितम् । तत्र—

भगवान्विश्वदृक्सिंहस्सर्वमूर्तिमयःप्रभुः ।
दर्शयामास मुनये रूपं तत्परमं हरिः ॥ ३४७ ॥ १ ॥
किञ्चिच्चन्द्राद्विशुद्धात्मा किञ्चिच्चन्द्राद्विशेषवान् ।

कृशानुवर्णः किञ्चिच्चेत्युपक्रम्य—

सहस्रनयनश्श्रीमान् शतशीर्षस्सहस्रपात् ।
सहस्रोदरबाहुश्च अव्यक्त इति च क्वचित् ।
ओङ्कारमुद्गिरन्वक्त्रात्सावित्रीञ्च तदन्वयात् ।
शेषेभ्यश्चैव वक्त्रेभ्यश्चतुर्वेदान् गिरन् बहून् ।
आरण्यकं जगौ देवो हरिर्नारायणो वशी ।

इत्यादिना वासुदेवस्य सर्ववर्णरूपमभिधाय सङ्कर्षणप्रद्युम्नानिरुद्धहयशिरोमत्स्याद्यवतारदशकानुक्रमानन्तरम्—

अतिक्रान्ताश्च बहवःप्रादुर्भावा महात्मनः ॥ ३४८ ॥ ५७ ॥
प्रादुर्भावाश्च कथिता भविष्या इह ये यथा ॥३५०॥५२॥ इति उक्तम् ।

एतेन हयशिर उपाख्याने "विष्वक्सेनो हरिः प्रभुः" "पौरुषीं तनुम्" "द्वितीयां तनुम्"—

यां यामिच्छेत्तनुं देवःकर्तुं कार्यविधौ क्वचित् ।
तां तां कुर्याद्विकुर्वाणस्स्वयमात्मानमात्मना ॥ ३८८ ॥ ७७ ॥ २ ॥

विश्वकर्मसूक्तेऽपि 'या ते धामानि परमाणि' इति मन्त्रोक्तं अप्राकृतं परमशरीरं यत् 'वाचस्पतिं विश्वकर्माण' मिति तदुत्तर-मन्त्रस्थवाचस्पतिपदार्थहयशिरसोऽपि तद्विवक्षितम्। वाचस्पति-मित्यत्र वाक्शब्दस्य परा वाग्देव्येवार्थः। न त्ववरा। वागाम्भृणी-सूक्ते निरतिशयमहिमवत्त्वेनोक्तायाः वाग्देव्याः 'ममयोनिरप्स्वन्त-स्समुद्रे' इत्यत्र समुद्रान्तस्स्थानोक्तेः। तत्पूर्वसूक्तान्तिममन्त्रे 'बीभत्सूनां सयुजं हंसमाहुरपां दिव्यानां सख्ये चरन्तम्' इत्यत्र वाग्देवीपतेरपि तत्स्थानसंबन्धोक्तेः। ऐतरेयारण्यके इमं मन्त्रं प्रस्तुत्य 'वाचि वैतदैन्द्रं प्राणं न्यचाय्यन्, इत्येवमुक्तं भवतीत्युक्तेः। 'परो दिवा पर एना पृथिव्या' इति खण्डस्य वागाम्भृणीसूक्ते पठितस्य एतदुत्तरविश्वकर्मसूक्ते पाठपूर्वकं 'तमिद्गर्भं प्रथमं दध्र आपः' इत्यादिमन्त्रे पत्युस्समुद्रस्थानसंबन्धोक्तेः। तदुत्तरं 'न तं विदाथय इमाजजान अन्यद्युष्माकमन्तरं बभूव' इत्यत्र तत्पत्न्याः अन्तरात्म-त्वोक्तेश्च। अत एव घर्मसूक्ते 'यावद्ब्रह्मविष्ठितं तावती वाक्' इत्युक्तिस्सङ्गच्छते॥

---

इत्यन्तस्य—

कथितो हरिगीतासु समासविधिकल्पितः।
एकव्यूहविभागो वा क्वचिद्द्विव्यूहसंज्ञितः॥
त्रिव्यूहश्चापि सङ्ख्यातश्चतुर्व्यूहश्च दृश्यते।
हरिरेव हि क्षेत्रज्ञो निर्ममो निष्कलस्तथा॥

इत्यन्तस्य च सन्दर्भस्य बृहदारण्यकाद्यैकार्थ्यं सिद्धम्। उदाहृतवचनेषु बहुषु स्थलेषु हरिशब्दप्रयोग आरण्यकस्थहरिशब्दघटितभागोपबृंहणतां दृढीकरोति। एतेन तैत्तिरीयारण्यके 'सुवर्णं घर्मं परिवेदवेनं' 'इन्द्रस्या-त्मानं दशधा चरन्तम्' 'अन्तस्समुद्रे मनसा चरन्तम्' 'ब्रह्मान्वविन्ददृश-

विष्णुतिलकसंहितायां 'अथ हंसमन्तुं वक्ष्ये' इति हंसमन्तु-निरूपणावसरे---

हयग्रीवमहं वन्दे स्फटिकाचलसन्निभम् ।
चन्द्रमण्डलमध्यस्थं सरस्वत्या समन्वितम् ॥

इत्यत्र (विष्णुतिलकसंहितायां २५०)

इतीदं परमं गुह्यं हंसो हयाशिरा हरिः ।
वेदोपदेशसमयं मां विबोध्योपादिष्टवान् ॥
अङ्केनोद्वह्य वाग्देवीमाचार्यकमुपाश्रितः ।
वेदवेदान्तशास्त्रार्थतत्त्वव्याख्यानतत्परः ॥

इति संहितान्तरे हंससहस्रनामाद्ध्याये चतुर्मुखोक्तौ---

तस्मिन्नहनि संप्राप्ते तं हंसं महदक्षरम् ।
सम्भत्रं सर्वलोकस्य विदधाति स वाक्पतिः ॥ (ह. वं. ३ प).

इति हरिवंशे आद्यन्तवचनयोश्च हंसवाक्शब्दयोः हयशिरः तच्छक्ति-परत्वं स्फुटम् । नारायणाख्याने हंसशब्दस्य हयाशिरःपरत्वं व्यास-सम्मतमिति पूर्वमेव (१९२) पुटे निरूपितम् । अहिर्बुध्न्यश्च तैत्तिरीया-रण्यके 'वाचस्पते विधेनामन्' 'वाचस्पते हृद्विधेनामन्' इति दशहोतृसप्तहोतृग्रहभागमन्त्रयोः 'वाङ्नाम वैष्णवी शक्तिः' 'वाच-स्पतिस्तत्पतिस्स्यात्' इत्यनेन---

द्यावापृथिव्यौ पितरौ पितरौ श्रीतदीश्वरौ। (५८- अ.)

इत्यनेन च श्रीपतिपरत्वं प्राचिख्यपत् । अतो वाचस्पतिशब्दस्य यथोक्त एवार्थः ॥

मूले 'द्वितीयां तनु' मित्यनेन तैत्तिरीये 'परो दिवा पर एना पृथिव्या' इत्यनन्तरं 'तमिद्गर्भं---अजस्य नाभौ' इति मन्त्रे अजशब्दार्थभूतअनिरुद्धापेक्षया द्वितीयत्वमेव 'विश्वकर्मा ह्यजनिष्ट

**देवः आदिद्गन्धर्वोऽभवद्द्वितीय' इति मन्त्रघटकद्वितीयपदे विवक्षिता-मिति निर्धारितं भवति। तेन 'विश्वकर्मा ह्यजनिष्ट देव' इत्यत्र जनिमत्त्वेनोक्तश्चतुर्मुखः 'या मध्यमा' इत्युक्तमध्यमशरीरमेव रुद्रादिरप्येवमेव। 'या ते धामानि' इति मन्त्रनिश्चितसर्वशरीरवत्त्वेन देवस्य जनिमत्त्वं पदानां सामानाधिकरण्यं च 'यो देवानां नामध-एक एव' इति वाक्येन दृढीकृतं भवति।**

---

होतारमर्णे' इत्यादिदशहोतृहृदयमन्त्राणां 'स हरिर्वस्सुवित्तमः' 'शतं शता अस्य युक्ता हरीणाम्' इत्यादिसप्तहोतृहृदयमन्त्राणां 'युक्ता ह्यस्य हरयश्शतादश' इत्यादि बृहदारण्यकैकार्थ्यं तेन हयशिरसो मधुब्राह्मणप्रति-पाद्यत्वं च सिद्धम्। 'विद्यासहायवान्देवः' इत्यादौ पूर्वमुक्तं विष्णोरप्सु शयनं चतुर्मुखस्य पद्मजत्वादिकञ्च श्रुतिसिद्धमिति मत्स्यपुराणहरिवंशयोर्व्यक्तम्। मात्स्ये हंसस्यारण्यकप्रतिपाद्यत्वं हरिवंशे (३-प.) हंसवाक्पतिशब्दयोरैकार्थ्यं च व्यक्तम्। मात्स्ये—

कथं पाद्मे महाकल्पेऽभवत्पद्ममयं जगत्।
जलार्णवगतस्येह नाभौ जातं जनार्दन ॥ (१६३-४)
प्रभावात्पद्मनाभस्य स्वपतस्सागराम्भसि।
पुष्करे तु कथंभूता देवास्सर्षिगणाः पुरा ॥

इति मनुप्रश्नस्य—

पराशरसुतश्श्रीमान् गुरुद्वैपायनोऽब्रवीत्।
तत्तेऽहं कथयिष्यामि . . . . . ॥ १६३-१७ ॥

इत्युपक्रम्य श्रीमत्स्यप्रतिवचने—

एवमेकार्णवीभूते शेते लोके महाद्युतिः।
प्रच्छाद्य सलिलेनोर्वीं हंसो नारायणस्तदा ॥ १६६-१-२ ॥

इत्युपक्रम्य—

याथातथ्यं परं ज्ञानं यथावद्ब्रह्मणो मतम् ।
रहस्यारण्यकोद्दिष्टं यथोपनिषदि श्रुतम् ॥
पुरुषो ब्रह्म इत्येतद्यत्परं परिकीर्तितम् ।
यत्रान्यः पुरुषो न स्यात्स एव पुरुषोत्तमः ॥

इति—मधुकैटभवधनिरूपणानन्तरं—

न रेमेऽथ ततो ब्रह्मा प्रभुरेकस्तपश्चरन् ॥
शरीरार्धं ततो भार्यां समुत्पादितवान् शुभाम् ॥ १७०-२१ ॥
तपसा तेजसा चैव वर्चसा नियमेन च ।
सदृशीमात्मना देवीं समर्थां लोकसर्जने । इति चभिहितम् ।

अत्र रहस्यपदमेकायनीयशाखापरपर्यायं रहस्याम्नायं तन्मूलकसंहिताः परमात्मतत्त्वप्रतिपादकविश्वकर्मसूक्तनासदासीयादिसूक्तादिकं सर्वमर्थं सङ्गृह्णाति । आरण्यकपदं बृहदारण्यकैतरीयतैत्तिरीयारण्यकपरम् । उपनिषत्पदं श्वेताश्वतरपरम् । हरिवंशे 'तस्य सुप्तस्य शुशुभे नाभीपद्मात्समुत्थितम्' (१-५-५०-११) इत्यादिना चतुर्मुखादिसृष्टिं 'न तं वेदस्वयं ब्रह्मा' इत्यादिना अब्धिशायिनो निद्रायोगमुपागतस्य भगवतो ब्रह्मादिदेवैरपि दुर्ज्ञेयत्वञ्चाभिधाय—

जागर्ति कोऽत्र कश्शेते कश्च शक्तश्च नेङ्गते ।
न चैनं शेकुरन्वेष्टुं कर्मतो जन्मतोऽपि वा ॥ इति ॥
यच्चास्य देवदेवस्य चरितं स्वप्रभावजम् ।
तेनेमाश्श्रुतयो व्याप्ता वैदिक्यो लौकिकाश्च याः ॥ २१ ॥

इति चोक्तम् । हंसवाक्यतिपदघटिततृतीयपर्ववचनानि प्रथमपर्ववचनान्यप्येकार्थानीति पूर्वं निरूपितम् । एतेन बृहदारण्यकप्रवर्ग्यार्थवादापातप्रतीतिमवलम्बमानानां मोहोऽपास्तः ॥

**'विद्यासहायवान्' इत्यत्र विद्याशब्देन 'द्वितीयां, तनुम्' इति पदद्वयेन च विश्वकर्मसूक्तद्वयप्रत्याभिज्ञापनमुखेन याज्ञवल्क्याय शुक्लयजुर्वेदमुपदेष्टुरादित्यस्य हयरूपस्य वाग्देवीस्वरूपस्य च निर्धारणं बृहादारण्यकैतरीयोपनिषत्प्रघट्टकयोः हयशिरोऽवतारमूलप्रमाणत्वव्यञ्जनं च कृतं भवति[1] ॥**

---

[1] अत्रेदमवधेयम् । बृहदारण्यकं शुक्लयजुर्वेदान्तर्गतं शुक्लयजुर्वेदश्च हयशिरोरूपधारिणाऽऽदित्येन याज्ञवल्क्यायोपादिष्ट इति घर्मसूक्तानन्तरसूक्ते 'स इदग्निः कण्वतमः कण्वसखा, 'वाजिन्तमाय' इत्यादि मन्त्रद्वयोपज्ञेषु—

'मत्स्यकूर्मवराहाश्व सिंहरूपादिभिस्स्थितिम्' 'विवस्वतेऽश्वशिरसे' 'अत्रादित्यो हयशिराः' इति वचनसहकृतेषु 'सुर्योश्वस्सोऽभवद्यतः' (३-५-२९) 'वाजिरूपधरो हरिः' (१२-६) इत्यादि विष्णुपुराणभागवतवचनेषु स्पष्टम् । एवमेवाचार्यपादानामभिमतमिति 'व्यक्ताव्यक्ते वाजिनां संहितान्तेव्याख्यामित्थं वाजिवक्त्रप्रसादात्' इति सूक्तिपर्यालोचनेन निर्णीतमीशावास्यभाष्याविवरणे ॥

मोक्षधर्मे जनकयाज्ञवल्क्यसंवादे तु 'सरस्वतीह वाग्भूत्वा शरीरं ते प्रवेक्ष्यति' 'प्रतिभास्यति ते वीरसाखिलस्सोत्तरोद्विज । कृत्स्नं शतपथं चैव' इति याज्ञवल्क्यतपःप्रसन्नादित्यवचनेन —

ततो विचिन्तयमहं भूयो देवीं सरस्वतीम् ।
तत्रोपनिषदश्चैव परिशेषञ्च पार्थिव ।
मथ्नामि मनसा तात दृष्ट्वा चान्वीक्षिकीं शुभाम् ॥

इति याज्ञवल्क्यवचनेन च सरस्वतीप्रसादेन याज्ञवल्क्यश्शुक्लयजुर्वेदमजानादित्युक्तम् । इयञ्च सरस्वती नारायणस्य पत्नी वागधिष्ठातृतया वाग्देवी न तु

चतुर्मुखस्य पत्नी लक्ष्मीतन्त्राहिर्बुध्न्यसंहितादौ वाक्सरस्वतीशब्दयोर्विष्णुपत्नीवाचित्वनिर्णयमनुसृत्य विष्णुस्मृतौ—

त्वमेव निद्रा जगतः प्रधाना लक्ष्मीर्धृतिश्श्रीर्विरतिर्जया च।
कान्तिः प्रभाकीर्तिरथो विभूतिस्सरस्वती वागथ पावनी च॥ ९९-४.

इति लक्ष्मीं प्रति भूमिवचनात्। एवं तत्रैव प्रक्रमे 'ध्रुवं वाचस्पतिं प्रभुम्' 'वासुदेवं महात्मानम्' इत्यत्र लक्ष्मीपतित्वाभिप्रायेण वाचस्पतिशब्दस्य वासुदेवे प्रयोगाच्च। अत एव 'कीर्तिश्श्रीर्वाक्च नारीणामिति गीतावचनमपि स्वरसतस्सङ्गच्छते। पुराणवचनेष्वपि वाक्शब्दस्य नारायणपत्नीपरत्वं व्यक्तम्। यथा प्राचीनगोपालतापनीयोपबृंहणे ब्रह्मवैवर्ते—

आविर्बभूव तत्पश्चान्मुखतः परमात्मनः।
एका देवी शुक्लवर्णा वीणापुस्तकधारिणी॥ १-२-५४.
कोटिपूर्णेन्दुशोभाढ्या शरत्पङ्कजलोचना।
श्रेष्ठा श्रुतीनां शास्त्राणां विदुषां जननी परा॥
वागधिष्ठातृदेवी सा कवीनामिष्टदेवता।
शुद्धसत्त्वस्वरूपा च शान्तरूपा सरस्वती॥ इति।
अथ कृष्णो महालक्ष्मीं सादरञ्च सरस्वतीम्।
नारायणाय प्रददौ रत्नेन्द्रं मालया सह॥ इति।
नारायणप्रिया लक्ष्मीस्सर्वसम्पत्स्वरूपिणी।
वागधिष्ठातृदेवी या सा च पूज्या सरस्वती॥ १-३०-२० इति।
शक्तिर्द्वितीया कथिता वेदोक्ता सर्वसम्मता।
सर्वपूज्या सर्ववन्द्या चान्यां मत्तो निशामय॥ २-१-३०.
वाग्बुद्धिविद्याज्ञानाधिदेवता परमात्मनः।
सर्वविद्यास्वरूपा या सा च देवी सरस्वती॥
सुबुद्धिकविता मेधा प्रतिभा स्मृतिदासताम्।

नानाप्रकारसिद्धान्तभेदार्थकल्पनाप्रदा ॥
व्याख्या बोधस्वरूपा च सर्वसन्देहभञ्जनी ।
विचारकारिणी ग्रन्थकारिणी शक्तिरूपिणी ॥
सर्वसङ्गीतसन्धानकालकारणरूपिणी ।
विषयज्ञानवाग्रूपा प्रतिविश्वञ्च जीविनाम् ॥
यया विना च विश्वौघो मूको मृतसमस्सदा ।
व्याख्यामुद्राकरा शान्ता वीणापुस्तकधारिणी ॥
शुद्धसत्त्वस्वरूपा या सुशीला श्रीहरिप्रिया ।
हिमचन्दनकुन्देन्दुकुमुदाम्भोजसन्निभा ॥ इति च ॥
तत ऊर्ध्वे च वैकुण्ठो ब्रह्माण्डाद्बहिरेव सः ।
स च सत्यस्वरूपश्च शश्वन्नारायणो यथा ॥ २-३-१० ॥
तदूर्ध्वे चैव गोलोकः पञ्चाशत्कोटियोजनात् ।
नित्यस्सत्यस्वरूपश्च यथाकृष्णस्तथाप्ययम् ॥ ११.
नित्यौ गोलोकवैकुण्ठौ सत्यौ शश्वदकृत्रिमौ ॥ इति ।
द्विभुजो राधिकाकान्तो लक्ष्मीकान्तश्चतुर्भुजः ।
गोलोके द्विभुजस्तस्थौ गोपैर्गोपीभिरावृतः ॥ २-३५-१४ ॥
चतुर्भुजश्च वैकुण्ठं प्रययौ पद्मया सह ।
सर्वांशेन समौ तौ द्वौ कृष्णनारायणौ परौ ॥ १५ ॥

इति वाग्देवीपतेस्स्थानमप्युक्तम्—लक्ष्मीतन्त्रे—

महाविद्या महावाणी भारती वाक्सरस्वती ।

इत्यादिलक्ष्मीनामपाठेन—

अक्षमालाङ्कुशधरा वीणापुस्तकधारिणी ।

इत्यादि तद्रूपप्रतिपादनेन भगवच्छास्त्रे बहुषु स्थलेषु वाक्शब्देन वासुदेवानिरुद्धहयग्रीवशक्तीनां निर्देशेन च ब्रह्मवैवर्तवचनार्थोऽप्यादरणीयः ॥

एवं—

आदौ सरस्वतीपूजा श्रीकृष्णेन विनिर्मिता ।
यत्प्रसादान्मुनिश्रेष्ठ मूर्खो भवति पण्डितः ॥ २-४-११.

इत्युपक्रम्य—

माघस्य शुक्लपञ्चम्यां विद्यारम्भेषु सुन्दरि ।
मानवा मनवो देवा मुनीन्द्राश्च मुमुक्षवः ।
सन्तश्च योगिनस्सिद्धा नागगन्धर्वकिन्नराः ॥
मद्वरेण करिष्यान्ति कल्पे कल्पे यथाविधि ।
भक्तियुक्ताश्च दत्वा वै चोपचारांश्च षोडश ॥
काण्वशाखोक्तविधिना ध्यानेन स्तवनेन च ।
ततस्तत्पूजनं चक्रुर्ब्रह्मविष्णुमहेश्वराः ।
इदन्ते काण्वशाखोक्तं कथितं कवचं मुने ।
स्तोत्रं पूजाविधानं च ध्यानं वै वन्दनं तथा ॥ इति ।

पूजाक्रममभिधाय—

वाग्देवतायास्तवनं श्रूयतां सर्वकामदम् ।
महामुनिर्याज्ञवल्क्यो येन तुष्टाव तां पुरा ॥
गुरुशापाच्च स मुनिर्हतविद्यो बभूव ह ।
तदा जगाम दुःखार्तो रविस्थानं च पुण्यदम् ॥
संप्राप्य तपसा सूर्यं कोणार्के दृष्टिगोचरे ।
तुष्टाव सूर्यं शोकेन रुरोद च पुनः पुनः ॥
सूर्यस्तं पाठयामास वेदवेदाङ्गमीश्वरः ।
उवाच स्तुहि वाग्देवीं भक्त्या च स्मृतिहेतवे ॥
तमित्युक्त्वा दीननाथो ह्यन्तर्धानं जगाम सः ॥

इति ब्रह्मवैवर्तवचनैः उदाहृतमोक्षधर्मोक्तार्थ उक्तः। अत्र पूर्वोक्तप्रकारेण सूर्यस्याश्वशिरोरूपेणोपदेशाद्वाग्देवी तच्छक्तिरिति बोध्यम्। ब्रह्मवैवर्ते याज्ञवल्क्यकृतवाग्देवीस्तोत्रे—

ब्रह्मस्वरूपा परमा ज्योतीरूपा सनातनी।
सर्वविद्याऽधिदेवी या तस्यै वाण्यै नमोनमः ॥ १० ॥

इत्युक्तार्थ एव 'विद्यासहायवान् देवः' इत्यादौ विवक्षितः एतेन वाचस्पतिवाक्शब्दघटिताश्श्रुतयः हयशिरस्तच्छक्तिपरा इति व्यासेन व्यञ्जितम्। एवं ब्र. वै. वाग्देवीस्तोत्रे—

व्यासः पुराणसूत्रं च समपृच्छत वाल्मिकिम्।
मौनीभूतस्स सस्मार त्वामेव जगदम्बिकाम् ॥
तदा चकार सिद्धान्तं त्वद्वरेण मुनीश्वरः।
पुराणसूत्रं श्रुत्वा स व्यासः कृष्णकलोद्भवः।
त्वां सिषेवे च दध्यौ च शतवर्षं च पुष्करे ॥
तदा त्वत्तो वरं प्राप्य स कवीन्द्रो बभूव ह।
तदा वेदविभागं च पुराणानि चकार ह ॥

इति कृष्णकलोद्भवेन व्यासेन वेदविभागपुराणसूत्रादि सर्वं वग्देवताऽनुग्रहेणैव रचितमिति स्फुटमुक्तम् ॥

माघशुक्लपञ्चमी श्रीपञ्चमी तदुक्तं हेमाद्रौ वाराहे—

माघशुक्लचतुर्थ्यां तु वरामाराध्य च श्रियम्।
पञ्चम्यां कुन्दकुसुमैः पूजां कुर्यात्समृद्धये ॥

इति निर्णयसिन्धूक्तश्रीपञ्चमीव्रतमपि 'माघस्य शुक्लपञ्चम्याम्' इत्यादिब्रह्मवैवर्तवचनानुसारेण वाग्देवीविषयकमिति बोध्यम् ॥

एतेन—

'नारायणं नमस्कृत्य नरं चैव नरोत्तमम्।

देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥

इति ब्रह्मवैवर्ते महाभारते हरिवंशे चोपक्रमे—

अतः प्रातस्समुत्थाय चिन्तयेदात्मनो हितम् ।
निर्गुणं निरहंकारं नारायणमनामयम् ॥
सगुणं च श्रिया युक्तं देवं देवीं सरस्वतीम् ॥

इत्याश्वलायनस्मृतौ च सरस्वती नारायणपत्न्यैवेति सिद्धम् ।

भारती या तु कलया सरिद्रूपा च भारतम् ।
अर्धांसा(शा)ब्रह्म सदनं स्वयं तिष्ठतु मद्गृहे ॥२–६–८५॥

इति ब्रह्मवैवर्ते नारायणेनोक्तम् । अत्र उदाहृतब्रह्मवैवर्तवचनानि सर्वाण्यपि देवीभागवते नवमस्कन्धे उपलभ्यन्ते तेन देवीभागवतस्यापि शक्तिविशिष्टस्य नारायणाभिन्नस्य कृष्णस्य परत्व एव परमतात्पर्यमुक्तदिशा विद्वद्भिरवसेयम् । एतेन ऋग्वेदमन्त्रसमुदायरूपा आश्वलायनदशश्लोकी नारायणपत्नीपैरवेति निर्णीयेत । तत्र 'अम्बितमे नदीतमे देवितमे सरस्वति !' (२–४१–१६) इति श्रुत्युक्तातिशयिताम्बात्वातिशयितदेवीत्वयोः नारायणपत्न्यामेव संभवात् । 'त्वेविश्वा सरस्वति' 'इमाब्रह्म सरस्वति' इत्यत्तरश्रुतिद्वयं 'पावका नस्सरस्वति' (१–३–१०) इत्यादिश्रुति (द. श्लो.) त्रयमपि एतद्विषयकमेव । सरस्वातीशब्दघटितचतुर्दशर्चसूक्ते (६–६१–५) 'प्रणोदेवीसरस्वती' इति श्रुतिरप्येवमेव ॥

सायणीये—

इयमित्येतदाद्यन्तु सूक्तं सारस्वतं जपेत् ।
द्विजः प्रातश्शुचिर्भूत्वा वाग्मी भवति बुद्धिमान् ॥

इति, एतत्सूक्तस्य शौनकोक्तविनियोगः प्रदर्शितः । आश्वलायनेन स्मृतौ नारायणपत्न्यास्सरस्वत्याः प्रातश्चिन्तनीयत्वोक्त्या एतत्सूक्तस्य नारायणपत्नी-परत्वं तस्याभिमतमिति स्फुटम् । वृत्रहननलिङ्गादपि यथोक्त एवार्थ इति व्यक्ती

भविष्यति। एवं 'आनो दिवः' (५-४३-११) 'चत्वारि वाक्' (१-१६४-४५) 'यद्वाग्वदन्ति' 'देवींवाचम्' (८-१००-१०-११) 'उतत्वः पश्यन्' (१०-७१-४) इति (द.श्लो.) मन्त्रपञ्चकमपि चतुर्मुखपत्नीपरत्वसाधकाभावान्नारायणपत्नी परमेवेति सिद्धम्। एवं--

वाचं प्रपद्येद्वाक्कामो हुनेदाशुजपन्निमाः।
अहं रुद्रेभिरित्येता वाग्मी भवति पूजितः॥ (ऋ. चि)
अहं रुद्रेभिरित्येतद्वाग्मी भवति मानवः॥ (वि. धर्मोत्तरे)
(२-१२४-१३३)

इति विनियुक्तं (ऋ. १०-१२५) वागाम्भृणी सूक्तम्—
वागिन्द्रियप्रमूढो यो न विद्यां प्रतिपद्यते।
इन्द्रियार्थान्यथार्थान्वा यो न वेत्ति कथं च न॥
विद्यावाऽधिगता यस्य प्रणश्येत पुनः पुनः।
ससर्परी ऋचो जप्त्वा द्वौ मासौ प्रतिपद्यते। (ऋ-वि.)
नास्ति विद्यागमो यस्य सुयुक्तस्यापि भार्गव।
ससर्परीरिति जपन्मासात्तं प्रतिपद्यते॥ (वि. ध.) १२४-५२.

इति विनियुक्तं ऋग्द्वयमपि (३-५३-१५-१६) नारायणपत्नीविषयकमेव। अत्र 'ससर्परीः' इति ऋचि 'आसूर्यस्य दुहिता' इत्यत्र अश्वरूपसूर्यस्य संबन्धिनी याज्ञवल्क्यकामपूरयित्री इत्यर्थः॥

पराशरसंहितायां हयग्रीवमनुत्वेनोक्तं 'प्रातरग्निम्' २-४-१ इति सूक्तं अथर्वणवेदपठितं प्रस्तुत्य संहिताविधिनामकसूत्रेषु 'पूर्वस्य मेधाजननानीति' तस्य सूक्तस्य मेधाजननार्थत्वं वदता कौशिकेन 'अहं रुद्रेभिः' (अथ. ४-६) इतिवागाम्भृणीसूक्तस्यापि उपनयनं प्रस्तुत्य 'मेधाजननायुष्यैर्जुहुयात्' इति मेधाजननार्थत्वप्रतिपादनेन क्रमाद्धहयशिरस्तच्छक्तिपरत्वं स्फुटीकृतम्॥

एवं एतदुपाख्यानफलश्रुतिमूलतया स्थापयिष्यमाणं 'येत्रिषप्ताः परियन्ति' इत्यादि वाचस्पतिशब्दघटितं अथर्वणवेदोपक्रम चतूऋचसूक्तमपि कौशिकेन 'पूर्वं त्रिषप्तीयम्' इति परिभाषापूर्वकं 'पूर्वस्य मेधा जननानि' इति मेधाजननार्थत्व प्रतिपादनेन वाग्देवीपति हयशिरःपरमिति स्थापितम् ॥

एवं च वाचस्पतिशब्दघटितं विश्वकर्मसूक्तं (ऋग्वे. (१०-८१) सपत्नाशनसूक्तं १०-११६ च एतद्विषयकमेवेति सिद्धम् ॥

एवं घर्मसूक्ते (१०-११६) 'यावद्ब्रह्मविष्ठितं तावती वाक्' इति मन्त्रे तैत्तिरीयारण्यके स्वाध्यायब्राह्मणशान्तिमन्त्रे 'नमो वाचे नमो वाचस्पतये नमो विष्णवे बृहते करोमि' इत्यत्राप्यर्थोऽवसेयः ॥

(तै. आ.) प्रवर्ग्यमन्त्रप्रपाठकोपक्रमे 'नमो वाचेयाचेदिताय चानुदिता तस्यैवाचे नमो नमो वाचे नमो वाचस्पतये' इत्यादिशान्तिमन्त्रेऽपि अनुदितावाक् वागभिमानिनीश्रीः वाचस्पतिश्च हयशिरोरूपधारी वासुदेव एवेति बोध्यम्॥

आनन्दतीर्था अपि बहुषु प्रदेशेषु वाक्शब्दं विष्णुपत्नीपरतया व्याचक्रुः ॥

श्रीहर्षोपि नैषधे—

पद्माङ्कसद्मानमवेक्ष्य लक्ष्मीमेकस्य विष्णोःश्रयणात्सपत्नीम् ।
आस्येन्दुमस्या भजते जिताब्जं सरस्वती तद्विजिगीषया किम् ॥

॥ ७-४९ ॥

कण्ठे वसन्ती चतुरा यदस्या स्सरस्वती वादयते विपञ्चीम् ।
तदेव वाग्भूय मुखे मृगाक्ष्याः श्रोतुश्श्रुतौ याति सुधा रसत्वम् ॥

॥ ७-५० ॥

इत्यादौ सरस्वती विष्णुपत्नीति स्फुटमुभ्यधात् ।

अत्र मल्लिनाथः सरस्वत्या विष्णुपत्नीत्वं पुराणप्रसिद्धम्। तथाऽर्चास्वपि दृश्यते यथा पुरुषोत्तमस्य जगन्नाथस्य पार्श्वे लक्ष्मीसरस्वत्यौ इति व्याचख्यौ। अत्र ब्रह्मवैवर्तपुराणं विवक्षितम् ॥

चतुश्श्लोकीभाष्ये 'श्रद्धासूक्तमेधासूक्तादितिसूक्तवाक्सूक्तादिष्वेतद्विभूतिविशेषप्रतिपादकेषु विशेषतश्श्रीसूक्ते च विचित्रा एतन्महिमानस्तत्तद्भाष्यकारैः प्रपञ्चिताः प्रतिपत्तव्या' इत्यत्र वाक्सूक्तस्य लक्ष्मीपरत्वं 'कीर्तिः श्रीर्वाक्चनारीणाम्' इति गीताभाष्यतात्पर्यचन्द्रिकायां ब्रह्मवैवर्ताद्यनुसारेण—

वाचं निजाङ्करसिकां प्रसमीक्षमाणो वक्त्रारविन्दविनिवेशितपाञ्चजन्यः।
वर्णत्रिकोणरुचिरे वरपुण्डरीके बद्धासनो जयति वल्लवचक्रवर्ती ॥

इति स्वस्तुत्युक्तवाचो भगवदसाधारणशक्तित्वञ्च प्रतिपादयतामाचार्यपादानामप्ययमेवाभिप्रायः ॥

एवं च 'सरस्वतीहवाग्भूत्वा' इत्यादि—उदाहृतमोक्षधर्मवचने सरस्वती परा नारायणपत्न्येवेति सिद्धम् ॥

अतश्च यदनुग्रहायत्तं शुक्लयजुर्वेदसर्वस्वं सैव वाग्देवी तदुपनिषद्भूतबृहदारण्यकगतपरमात्मप्रकरणस्थवाक्छब्दार्थ इति सिद्धम्। एतच्च सर्वव्याख्यानाधिकरणे व्यासार्यैर्व्यञ्जितम्। तत्र हि बृहदारण्यककाण्डे 'देवा हवै सत्रं निषेदुरग्निरिन्द्रस्सोमोमखोविष्णुर्विश्वे च देवा अन्यत्रैवाश्विभ्याम्' इत्यादि प्रवर्ग्याध्यायसमनन्तरमुपनिषद्रूपत्वेनाङ्गीकृते 'उषा वा अश्वस्य' इत्यादि तृतीयाध्याये 'नैवेह किञ्चनाग्र आसीत्' इत्यादि द्वितीयब्राह्मणघटकार्कशब्दस्य परमात्मपरत्वं 'अर्कशब्दश्च परस्मिन् प्रीणनगुणयोगाद्वर्तते' अत एव हि भगवन्नामसहस्रे पठ्यते 'अर्को वाजसनिश्शृङ्गी' इति ग्रन्थेन बोधितम् ॥

अर्को वाजसनिश्शृङ्गी जयन्तस्सर्वविज्जयी।
सुवर्णबिन्दुरक्षोभ्यस्सर्ववागीश्वरेश्वरः ॥

इति पूर्णश्लोकः। अत्र वाजसनिशब्दो हयग्रीवपर इति (ई-भा-वि) उपपादितम्। सर्ववागीश्वरेश्वरशब्दश्च तत्र सुप्रसिद्ध एव॥

पाण्डित्यवीरो यथा—

अपि वक्ति गिरां पतिस्स्वयं यदितासामधिदेवताऽपि वा।
अयमस्मि पुरा हयानन स्मरणोल्लङ्घितवाङ्मयाम्बुधिः॥

(र-ग-घ) इति पण्डितजगन्नाथेनाप्युक्तेः। अत्र वाचस्पतिशब्दघटितं (१०-१६६) सपत्ननाशनसूक्तमाभिप्रेतमिति प्रतिभाति। एवञ्च बृहदारण्यकप्रकरणगतवाक्शब्दस्यापि तच्छक्तिपरतेति व्यसार्याणामाशयः प्रतीयते। अयमत्र श्रुतिक्रमः 'नैवेह किञ्चनाग्र आसीन्मृत्युनैवेदमावृतमासीदशनायया अशनाया हि मृत्युस्तन्मनोऽकुरुतात्मन्वीस्यामिति। सोऽर्चन्नचरत्तस्यार्चत आपो जायन्तार्चते वैमेकमभूदिति तदेवार्कस्यार्कत्वम्। कगूँ ह वा अस्मै भवति य एवमेतदर्कस्यार्कत्वं वेद॥१॥ आपो वा अर्कस्तद्यदपागूँ शर आसीत्तत्समहन्यत। सा पृथिव्यभवत्तस्यामश्राम्यत्तस्य श्रान्तस्य तप्तस्य तेजो रसो निरवर्ततााग्निः॥२॥ स त्रेधाऽऽत्मानं व्यकुरुतादित्यं तृतीयं वायूं तृतीयग् स एष प्राणस्त्रेधा विहितः। तस्य प्राचीदिक्छिरोऽसौ चासौ चेर्मौ अथाऽस्य प्रतीचीदिक्पुच्छमसौ चासौ च सक्थ्यौ दक्षिणा चोदीची च पार्श्वे द्यौःपृष्ठमन्तरिक्षमुदरमियमुरस्स एषोऽप्सु प्रतिष्ठितो यत्र क्वचैति तत्तदेव प्रतितिष्ठत्येवं विद्वान्॥३॥ सोऽकामयत द्वितीयो म आत्मा जायेतेति स मनसा वाचं मिथुनग् समभवदशनायामृत्युस्तद्यद्रेत आसीत्ससंवत्सरोऽभवत्। न ह पुराततस्संवत्सर आसतमेतावन्तं कालमबिभः। यावान् संवत्सरस्तमेतावतःकालस्य परस्तादसृजत। तं जातमभिव्याददात्सभाणकरोत्सैव वागभवत्॥४॥ स ऐक्षत यदि वा इममभिमगूँ स्येकनीयोऽन्नं करिष्ये इति स तया वाचा तेसात्मनेदगूँ सर्वमसृजत यदिदं किञ्चर्चो यजूगूँषि सामानि च्छन्दागूँसि यज्ञान् प्रजाःपशून्। स यद्यदेवासृजत तत्तदत्तुमध्रियत सर्वं

वा अत्तीति तददितेरदितित्वगँ् सर्वस्यैतस्यात्ताभवति सर्वमस्यान्नं भवति य एवमेतददितेरदितित्वं वेद ॥५॥ सोऽकामयत भूयसा यज्ञेन भूयो यजेय "इत्यादि अत्र प्रथममन्त्रे मृत्युशब्दो मृत्युशरीरकपरमात्मपरः, आशनाया सञ्जिहीर्षा, इति व्यासार्योक्त्या सञ्जिहीर्षाश्रयस्सङ्कर्षणोऽत्र विवक्षित इति सिद्धम्, तन्मनोऽकुरुतात्मन्वीस्यामित्यस्य अनिरुद्धस्स्यामिति प्रद्युम्नमकुरुतेत्यर्थः, अवशिष्टः प्रथममन्त्रः द्वितीयमन्त्रोपि व्यासार्यैरेव विवृतः, तृतीयमन्त्रे च अग्न्यादित्यवायूनां क्वचिदुपनिषदि अकारोकारमकारार्थत्वोक्तेः, सङ्कर्षण-प्रद्युम्नानिरुद्धा अग्न्यादित्यवायव इति त्रिधा व्यूहकरणमेव विवक्षितं, यद्वा "अग्ने ऋग्वेदः वायोर्यजुर्वेदः आदित्यात्सामवेद" इति वेदत्रयप्रवर्तकत्वे-नोक्तानामग्निवाय्वादित्यानां भगवदात्मकत्वकथने वाक्यतात्पर्यम्। एतेन "स मनसा वाचम्मिथुनगँ् समभवत्" इत्यत्र वाक्छब्देनवागभिमानिदेवताया लक्ष्म्या निर्देशावश्यकत्वं बोधितम्। अनन्तरं 'तस्य प्राचीदिक्' इत्यादिना विग्रहसंबन्धमभिधाय 'स एषोऽप्सु प्रतिष्ठित, इति तस्य नारायणत्वं दृढीकृतम्। तदुक्तं वाराहे—

"सृष्ट्वा नारं तोयमन्तस्थितोऽहं येन स्यान्मेनामनारायणेति। कल्पे कल्पे तत्र शयामि भूयस्सुप्तस्य मेनाभिजं स्याद्यथाऽब्जम्" ॥ इति द्वितीयब्राह्मण घटकचतुर्थमन्त्रे 'सोऽकामयत द्वितीयो म आत्मा जायेतेति स मनसा वाचम्मिथुनगँ् समभवदशनायामृत्युः" इत्यत्र वाक्छब्दो वागभिमानिभगव-च्छक्तिपरः। चतुर्थब्राह्मणे "आत्मैवेदमग्र आसीत्पुरुषविधस्सोऽनुवीक्ष्य नान्यदात्मनोऽपश्यत्सोऽहमास्मीत्यग्रे व्याहरत्ततोऽहन्नामाभवत्" "स वै नैव रेमे तस्मादेकाकी न रमते स द्वितीयमैच्छत्। सहैतावानास यथास्त्रीपुमागँ् सौसंपरिष्वक्तौ स इममेवात्मानं द्वेधापातयत्ततःपतिश्च पत्नी चाभवताम्" "सोहेयमीक्षाञ्चक्रे कथन्नुमात्मन एव जनयित्वासंभवति हन्त तिरोऽसानीति सा गौरभवदृषभ इतरः" इत्युपक्रमस्य "आत्मैवेदमग्र आसीदेक एव सोऽकामयत जाया मे स्यादथ प्रजायेय" "मन एवास्यात्मा वाग्जाया

प्राणऽप्रजा" इत्युपसंहारस्यचानुगुण्यात् । द्वितीयब्राह्मणे चतुर्थमन्त्रे मनऽपदं प्रद्युम्नपरं, समभवत् समभावयत्, 'तद्यद्रेत आसीत्ससंवत्सरोऽभवत्' इत्यादिना चतुर्मुखसृष्टिरुच्यते । पञ्चममन्त्रे 'स तया वाचा तेनात्मना इदगँ् सर्वमसृजत यदिदं किञ्चर्चो यजूगँ्षि सामानि छन्दागँ्सि" इत्यत्र आत्मन्-शब्दः अनिरुद्धपरः, वाक्छब्दश्च वागभिमानितच्छक्तिपरः, "सभाणकरोत्सैव वागभवदिति मध्ये वाक्छब्देन बोधितस्य वेदस्याभिमानिनी देवतैव "स मनसा वाचं मिथुनगँ् समभवत्" इति पूर्वत्र "स तया वाचा तेनात्मनेदगँ् सर्वमसृजत" इति परत्र च वाक्छब्दस्यार्थः, अत्र च शब्दा-न्तरमनुपादाय वाक्छब्दोपादानं अनिरूद्धकर्तृकव्यष्टिसृष्टौ, अनिरुद्धशक्ते-रिव द्वारभूतचतुर्मुखशक्त्यास्सरस्वत्या अपि द्वारतयाऽन्वयसत्त्वेन तदुभयस-ङ्ग्रहार्थं । एवं वासुदेवानिरुद्धहयग्रीवशक्तीनां भगवच्छास्त्रप्रसिद्धं वागित्येकमेव नामेति त्रयाणां यथासंभवं विवक्षाबोधनार्थञ्च । तत्र आद्यं प्रयोजनं, अत्रैव चतुर्थब्राह्मणे "स वै नैव रेमे" इत्यत्र द्वितीयश्च चतुर्थाध्याये मधुब्राह्मणे विवक्षितमिति व्यक्तीभविष्यति । अत्रैव षष्ठमन्त्रे "सोऽकामयत भूयसा यज्ञेन भूयो यजेय" इत्यत्र चतुर्मुखकृतो हयग्रीवदेवताको यज्ञो विवक्षितः

अहं हयशिरा भूत्वा समुद्रे पश्चिमोत्तरे ।
पिबामि सुहुतं हव्यं कव्यञ्च श्रद्धयाऽन्वितम् ।
मया सृष्टऽपुरा ब्रह्मा मद्यज्ञमयजत्स्वयम् ।

इति नारायणाख्याने,

"सत्रेममास भगवान् हयशीर्ष एव साक्षात्स यज्ञपुरुषस्तपनीयवर्णः"

इति श्रीभागवते (२-७-११) च हयशिरसश्चतुर्मुखयज्ञाराध्यत्वं स्पष्टमुक्तम् । "आत्मैवेदमग्र आसीत्" इत्यादि तृतीयचतुर्थब्राह्मणं प्रस्तुत्य सर्वव्याख्या-नाधिकरणे "अहमिति हिरण्यगर्भनाम, अहमभिमानाश्रयव्यष्टिपुरुषाणां प्रथमत्वाद्धिरण्यगर्भस्य, तथा मोक्षधर्मे चतुर्मुखस्याहङ्कारसंज्ञत्वमवगम्यते ।

मया सृष्टऽपुरा ब्रह्मा मद्यज्ञमयजत्स्ययम् ।

ततस्तस्मै वरान्प्रीतो ददावहमनुत्तमान् ।
मत्पुत्रत्वञ्च कल्पादौ लोकाध्यक्षत्वमेव च ।
अहङ्कारकृतञ्चैव तथा पर्यायवाचकम् ॥ इति ।

इति व्यासार्यैरुक्तम् । तदनन्तरं "सोऽबिभेत्तस्मादेकाकी बिभेति सहायमीक्षाञ्चक्रे यन्मदन्यन्नास्ति कस्मान्नु बिभेमीति तत एवास्य भयं वीयाय कस्माद्ध्यभेष्यद्द्वितीयाद्वै भयं भवति" इत्यन्तिवाक्यस्य 'अहङ्कारस्ततो जातो ब्रह्मा शुभचतुर्मुखः' इत्याद्येतदुपाख्यानवचनैर्व्यासेन निर्णीतोऽर्थः तथाहि सः अहंनामा चतुर्मुखः अबिभेत् मधुकैटभाभ्यां वेदेष्वपहृतेषु तदाहरण सहायाभावादिति भावः तदाह 'तस्मादेकाकी' इत्यादि एकाकी 'एकादाकिनिच्चासहाये' ॥ ५ ॥ ३ ५५ ॥ इत्यनुशासनादसहायः, 'सहायमीक्षाञ्चक्रे' इत्यस्य वेदाहरणे सहायभूतं हयशिरसं साक्षात्कृतवानित्यर्थः अत्र सहायपदप्रयोगेण अर्जुनस्य सारथित्वेनावस्थाय शरणागतिधर्मोपदेष्टुस्सुलभस्य सुशीलस्य शरणागतपरित्राणेऽप्यनुचरवदेव वृत्तिरिति व्यञ्जितं एतदर्थमेव रक्षकादिपदाप्रयोगः यद्वा 'निजात्मीयात्मसुहृदस्सहायस्सध्रुचिस्सखा' इति वैजयन्त्यां मित्रपर्यायेषु पाठात्सहायशब्दो मित्रवचनः 'मित्रमौपायिकं कर्तुम्' 'तेन मैत्रीभवतु ते' इत्यादाविवात्रापि शरणागतिविवक्षा बोध्या, मदन्यत् मत्प्रातिद्वन्द्वि, द्वितीयात् प्रतिद्वन्द्विनः, भयं वीयायेति । हयग्रीवसाक्षात्कारसमनन्तरमेव वेदलाभस्य प्रतिद्वन्द्विमधुकैटभसंहारस्य च निष्पत्तेरिति भावः ।

न रमेऽथ ततो ब्रह्मा प्रभुरेकस्तपश्चरन् ।
शरीरार्धमथो भार्यां समुत्पादितवान् शुभाम् ।
तपसा तेजसा चैव वर्चसा नियमेन च । सदृशीमात्मनो भार्यां समर्थां लोकसर्जने ॥ १७० ॥ २२ ॥ इति, मात्स्यवचनोपबृंहितायां "स वै नैव रेमे" "पतिश्च पत्नी चाभवताम्" इति श्रुतौ चतुर्मुखतत्पत्न्योर्द्वारभूतयोर्नारायणतत्पत्न्योश्च द्वारिभूतयोर्विवक्षितत्वेन वाक्छब्देन पूर्वं लक्ष्म्या निर्देशस्य प्राथमिकं प्रयोजनमुपपादितम् । एवमैतरेयारण्य-

कोपनिषद्धटकसंहितोपनिषद्रूपतृतीयारण्यके द्वितीयाध्यायान्तिमखण्डे "अथ हास्मा एतत्कृष्णहारीतो वाग्ब्राह्मणमिवोपोदाहरतीति प्रजापतिः प्रजास्सृष्ट्वा व्यस्रंसत संवत्सरस्सच्छन्दोभिरात्मानं समदधाद्यच्छन्दोभिरात्मानं समदधा-त्तस्मात्संहिता इति तस्यैवा एतस्यै संहितायै णकारो बलं षकारः प्राण आत्मा इति स यो हैतौ णकारषकारावनुसंहितमृचो वेद सबलां सप्राणां संहितां वेदायुष्यमिति विद्यादिति स यदि विचिकित्सेत्सणकारं ब्रवाणी३ अणकारा३ इति सणकारमेव ब्रूयात्सषकारं ब्रवाणी३ अषकारा३ इति सषकारमेव ब्रूयादिति । तेयद्वयमनुसंहितमृचोऽधीमहे यच्च माण्डूकेयीयमध्यायं प्रब्रूमस्तेन नो णकारषकारावुपाप्राप्ताविति हस्माह ह्रस्वो माण्डूकेयः इति—अथ यद्वयमनु-संहितमृचोऽधीमहे यच्च माण्डूकेयीय मध्यायं प्रब्रूमस्तेन नोणकारषकारा-वुपाप्ताविति हस्माहस्थविरश्शाकल्य इति एतद्धस्म वै तद्विद्वांस आहु ऋषय-कावषेयाः किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे वाचि हि प्राणं जुहुमः प्राणे वा वाचं यो ह्येव प्रभवस्स एवाप्यय स्ता एतास्संहिता नानन्तेवासिने प्रब्रूयान्नासंवत्सरवासिने नाप्रवक्त्रे इत्याचार्या आचार्या इति' एतच्छ्रुतिविवरणानन्तरं सायणीये चतुर्थारण्यकभाष्यारम्भे यस्य निश्वसित-मिति श्लोकात्प्राक् (ज पुस्तके)

तुरगाननमाश्रयाम्यहं सुरगन्धर्वशिवेन्द्रकीर्त्यमानम् ।
उरगाधिपवाग्विलासलक्ष्मीं तरसैकेन मुखेन लज्जयन्तम् ॥

इति दृश्यते इति मुद्रितकोशे दृश्यते । अत्र तुरगाननमित्यादिकं पूर्वखण्डाभि-प्रायकमिति बोध्यम् । एतत्प्रकरणं हयशिरःपरम् एतत्पूर्वखण्डश्च हयशिर-श्शक्तिरूपवागीश्वरीपरः । तत्र "अथ खल्वियं सर्वस्यैवाच उपनिषत् । सर्वांह्येवेमास्सर्वस्यै वाच उपनिषद इमां त्वेवाचक्षते' इत्युपक्रम्य "स्पर्शादिषु पृथिव्यादिदर्शनं । अथ खल्वियं दैवी वीणा भवति तदनुकृतिरसौ मानुषी वीणा" इत्यादिना वाग्देवीवीणाया उपासनञ्चाभिधाय "अथातो वाग्रसः

यस्यां संसद्यधीयमानो वा भाषमाणो वा न विरुरुचुषेत तत्रैतामृचं जपेत्" इति ।

ओष्ठपिधाना नकुलीदन्तैः परिवृता पविः ।
सर्वस्यै वाच ईशाना चारुमामिह वादयेदिति वाग्रस इति"

इत्युक्तम् ।

"ओष्ठपिधाना" इत्यादिऋगेव वाक्सूक्तमिति कश्चित्, वस्तुतस्तु वसिष्ठस्मृतौ "सर्ववेदपवित्राणि वक्ष्याम्यहमतःपरम् ।" इत्युपक्रम्य "वाक्सूक्तं मध्वृचं तथा ।" इत्युक्तौ वाक्सूक्तं "अहं रुद्रेभिर्वसुभिः" इत्यष्टर्चमिति स्मृतिचन्द्रिकारत्नाकरादिनिबन्धनकारैरुक्तम् । अस्यैव "वागांभृणीसूक्तं वाक्सूक्तम्" इत्यपि बह्वृचानां समाख्या, इदमेवानन्दतीर्थीया लक्ष्मीसूक्तमित्यपि व्यवहरन्ति, अस्मदाचार्याश्श्रीनिवासपरकालमहादेशिका लक्ष्म्युपायत्वनिर्णये लक्ष्मीपरत्वे प्रमाणतयैतत्सूक्तवाक्यान्युदाहार्षुः, यजुर्वेदिनान्तु वाक्सूक्तं "देवीं वाचमजनयन्त" इत्यादीति सारविवरणीकृतः । तत्र यद्वाग्वदन्ति" इत्यादिमन्त्रः हयग्रीवोपनिषदि हयग्रीवमन्त्रानुमन्त्रतया पठितः, अयं "देवीं वाचमजनयन्त" "चत्वारि वाक्" इत्यादि मन्त्रौ चेतित्रयः बह्वृचसमाख्यया प्रसिद्धाश्वलायनदशश्लोकी पठिताः तत्र चतुर्मुखपत्नीत्वग्राहकप्रमाणाभावेन नारायणपत्न्यामेव तत्प्रतिपाद्यलिङ्गान्वयेन च नारायणपत्न्येव तदुपनिषद्धटकयावन्मन्त्रप्रतिपाद्या वाक्सूक्तप्रतिपाद्याऽपीति सारविवरणीकृतामाशयः . . . . . . . . एवञ्च ऋग्वेदिनाम् "अहं रुद्रेभिः" इत्यष्टर्चस्य, यजुर्वेदिनाम् "देवीं वाचमजनयन्त" इत्यादेश्च वाक्सूक्तत्वे संप्रतिपत्तावपि "ओष्ठपिधाना" इत्यस्य वाक्सूक्तत्वे सर्वेषां न संप्रतिपत्तिरित्यन्यदेतत् ॥ . . . . . . . . . . . . . . . . "ओष्ठपिधाना" इत्यादिमन्त्रस्य—

ओष्ठापिधानामन्त्रञ्च जपेद्दशदिनं प्रति ।

एकबुद्धिस्सदा तस्य महाविष्णौ प्रवर्तते ॥ ३५१ ॥

इति शौनकीये ऋग्विधाने विनियोग उक्तः ।

अत्र महाविष्णुशब्दघटकमहच्छब्दस्य—

मेतिलक्ष्मीर्मता देवी तां जिहीतेऽभिगच्छति ।

दिव्यं नित्यपरिष्वक्तं मिथुनं तन्महानतः ॥ ५४ ॥ २४ ॥

इत्यहिर्बुध्न्यनिर्वचनानुसारेणार्थोऽवसेयः—

एवमयं मन्त्रः हयग्रीवमन्त्रानुमन्त्रतया हयग्रीवोपनिषदि श्रुतः । ततो वाग्रूपहयग्रीवशक्तिपरः, वाग्देव्याश्च हयग्रीवशक्तित्वं भगवच्छास्त्रे प्रसिद्धम्, यथाहंसापरनामहयग्रीवसहस्रनामपाठे—

अङ्केनूद्य वाग्देवीमाचार्यकमुपाश्रितः ।

इति, एवं विष्णुतिलकसंहितादिष्वपीति पूर्वमेव निरूपितम्—एवञ्च " अथ खल्वियं सर्वस्यै वाच उपनिषत् " इत्यादि पूर्वखण्डस्य वाग्देवीरूपहयग्रीवशक्तिपरतया " अथ हास्मा एतत्कृष्णहारीतोवाग्ब्राह्मणमिवोपोदाहरति " इत्यादौ वाक्छब्दो हयग्रीवशक्तिवचनः, " प्रजापतिःप्रजास्सृष्ट्वा व्यस्रंसत संवत्सरः, सच्छन्दोभिरात्मानं समदधाद्यच्छन्दोभिरात्मानं समदधात्तस्मात्संहिता " इत्यादेरयमर्थः प्रजापतिश्चतुर्मुखः, विस्रंसननिमित्तञ्च वेदापहार एव । सः चतुर्मुखः, छन्दोभिः, वेदैः, " छन्दः पद्ये च वेदे च स्वैराचाराभिलाषयोः " इति मेदिनी, वागीश्वरानुगृहीतैरिति शेषः, आत्मानम्; स्वम्, " आत्मा यत्नो धृतिर्बुद्धिः " इति कोशात् । धृतिं बुद्धिं वा, समदधात् सम्यग्धारितवान् । वेदापहारदशायाञ्च ब्रह्मा सन्नपि—

अन्धकारा हि मे लोका जाता वेदैर्विना कृताः ।
वेदानृते हि किङ्कुर्यां लोकानां सृष्टिमुत्तमाम् ॥
अहो बत महद्दुःखं वेदनाशनजं मम ।

इत्युक्तप्रकारेणासत्कल्प एव—वेदलाभानन्तरञ्च—

ततस्तयोर्वधेनाशु वेदानां हरणेन च ।

शोकापनयनञ्चक्रे ब्रह्मणः पुरुषोत्तमः ॥

इति वक्ष्यमाणप्रकारेण आत्मानमलभतेति भावः । तस्मात् चतुर्मुखात्मधारणसाधनत्वादित्यर्थः, संहिता, विष्णुसंहिता जिष्णुसंहिता वाक्प्राणसंहिता चेत्यर्थः, तत्र प्रथमं विष्णुसंहितां जिष्णुसंहिताञ्चाह "तस्यै वा एतस्यै संहितायै णकारो बलं षकारः प्राण आत्मा" इत्यादिना, वृद्धहारीतश्च स्मृतौ कृष्णहारीतोपज्ञश्रुतेरिममेवार्थं व्यनक्ति, यथा—

णकारो बलमित्युक्तं षकारः प्राण उच्यते ।
तयोस्तु सङ्गतिर्यत्र तद्वात्मेत्युच्यते श्रुतौ ॥
तस्माण्णकारषकारानुसंहितमनुत्तमम् ।
सप्राणां सबलाञ्चैव संहितामुत्तमां विदुः ॥
तस्यैवायुषमित्युक्तं नेतरस्येति तच्छ्रुतेः ।
एतदेव हि विद्वांसो वक्ष्यन्ते ये महर्षयः ॥
यक्ष्यामहे वयं किं वा किमध्येष्या (मुन्याख्या) महेवयम् ।
इमौ णकारषकारावनुसंहितमेवयत् ॥
तदेव विष्णुः कृष्णेति जिष्णुरित्यभिधीयते ॥ ६ ॥ २१९ ॥

इति, अत्र विष्णुकृष्णसंहिताया मस्यवामसूक्त मूलम्। व्यक्तीभविष्यति चेदमुपरिष्टात् । एतेन हयग्रीवरूपधारिणाऽनिरुद्धेन वेदाहरणानन्तरं विष्णुजिष्णुरूपद्वयधारणपूर्वकं मधुकैटभवधः कृत इति यदुक्तं विष्णुधर्मोत्तरप्रथमखण्डषोडशाध्याये—

तेनाश्वशिरसा गत्वा वेदानादाय शाश्वतान् ।
पितामहाय प्रददौ भूय एव जगद्गुरुः ॥
ततो हयशिरोधारी गतोऽन्तर्धानमीश्वरः ।
आजग्मतुस्ततो देशं दानवौ मधुकैटभौ ॥

विष्णुश्चकार देहौ द्वौ विष्णुर्जिष्णुरिति स्मृतौ ।
मधुना युयुधे जिष्णुर्विष्णुर्वै कैटभेन च ॥

इत्यादिना, तत्रेयमेव श्रुतिर्मूलभूतेति ज्ञापितम् ॥

"एतदेव हि विद्वांसः" इत्यादिना "एतद्धस्म वै तद्विद्वांस आहु र्ऋषयऽकावषेयाऽकिमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे वाचि हि प्राणं जुहुमऽप्राणेवा वाचं यो ह्येव प्रभवस्स एवाप्ययः" इति तदुत्तर-श्रुत्यभिप्राय उक्तः, अत्र सनत्सुजातीयशङ्करभाष्ये—

किमध्यनश्चाध्येनेन कार्यं किमर्थवन्तश्च मखैर्यजामः ।
प्राणं हि वाच्यनलेजोहवीमि प्राणानले जुहवीमीति वाचम् ॥

इति ब्रह्माण्डपुराणे कावषेयगीतोक्तिरप्यनुसन्धेया, कौषीतकिनोऽपि समा-मनन्ति "अथातस्सांयमनं प्रातर्दनमान्तरमग्निहोत्रमिति चाचक्षते । यावद्वै पुरुषो भाषते न तावत्प्राणितुं शक्नोति प्राणं तदा वाचि जुहोति, यावद्वै पुरुषऽप्राणिति न तावद्भाषितुं शक्नोति, वाचं तदा प्राणे जुहोति एते अनन्ते अमृताहुती जाग्रच्च स्वपंश्च सन्ततमव्यवच्छिन्नं जुहोति । अथ या अन्या आहुतयोऽन्तवत्यस्ताऽकर्ममय्यो हि भवन्त्येतद्ध वै पूर्वे विद्वांसो न जुहवाञ्चक्रुः ।" इति, अत्रैतरेयकौषीतकि ब्राह्मण वाक्ययोरैककण्ठयं सुगमं विदुषाम् ॥

"अथातस्सांयमनम्" इत्यादेरयमर्थः, अथ "प्राणो ब्रह्म" इत्यादि-प्रतीकोपासनानन्तरम्, "वाङ्नामदेवताविरोधिनी" इत्याद्युक्तहोमानन्तरञ्च, अतः—"एते अनन्ते" इत्यादिना वक्ष्यमाणमोक्षफलकत्वात्, सांयमनम्—सम्यक् अन्तऽप्रविश्य यमनं—नियमनं तत्सम्बन्धिवाक्प्राण शब्दबोध्य-वाक्प्राणान्तर्यामिभूत तत्तदभिमानि लक्ष्मीनारायणसम्बन्धीति यावत्, प्रातर्दनं प्रतर्दनानुष्ठिततया प्रातर्दनमिति ख्यातम्—अयञ्च प्रतर्दन इन्द्रप्राणविद्या-मध्यगमदिति "प्रतर्दनो ह वै दैवो दासिरिन्द्रस्य प्रियं धामोपजगाम" इत्यादिनाऽत्रैव तृतीयाध्याये वक्ष्यते, आन्तरं—मानसमुपासनात्मकमिति यावत्,

भाषितुं—वाग्व्यापारं कर्तुं, प्राणिति—वागनधीनसत्ताश्रय इत्यर्थः, अन्यत्सुगमम्। अनधात्वर्थस्सत्ता प्रकर्षश्च वागनधीनत्वम्। तच्च वाग्व्यापाराव्यङ्ग्यत्वमिति, एवञ्च "जाग्रत्स्वपंश्च" इत्युत्तरवाक्यमपि सङ्गतम्, जागरणकाले वागधीना सत्ता सुषुप्तिकाले तु तदनधीनेति, भाषणकाले वागभिमानिन्या अभाषणकाले च प्राणाभिमानिनः प्राधान्यात्परस्परसंश्लेषानुचिन्तनरूपौ होमावत्र विवक्षितौ, जीवस्तु नात्र विवक्षितः स्वरूपतो जीवस्य होमकर्मत्वासम्भवात्, ऐतरेयके तत्स्थाने "यो ह्येव प्रभवस्स एवाप्यय" इत्युक्तेश्च, जाग्रत्स्वपन्निति पदद्वयेन जुहोतिकर्मभूतः सृष्टिकर्ता प्रलयकर्ता च प्राण एव परमात्मा विवक्षितः सृष्टिप्रलयकालयोर्भगवतोऽहोरात्ररूपता पुराणेषु प्रसिद्धा, अत्र "सांयमनं प्रातर्दनम्" इत्यस्य स्थाने "सायन्तनं प्रातस्तनम्" इति क्वचित्पाठो दृश्यते "सांयमनं प्रातर्दनम्" इति पाठ एव साधीयान्, अत एव "सन्ततमव्यवाच्छिन्नं जुहोति" इत्यस्य साङ्गत्यमौचित्यञ्च, अन्यच्चैतत्सजातीयमैतरेयवाक्यमन्यत्र विवृतं तत्रैव द्रष्टव्यम् . . . .

अनयोरेव वाक्प्राणयो रूपान्तरेण संहिता ऐतरेयारण्यक एव ३–२–६ पूर्वमुक्ता, "बृहद्रथन्तरयो रूपेण संहिता सन्धीयते इति ताक्ष्र्य इति वाग्वै रथन्तरस्य रूपं प्राणो बृहत उभाभ्यामुखल्वसंहिता सन्धीयते वाचा च प्राणेन च" इति उपक्रम्य "तदप्येतदृषिणोक्तं रथन्तरमाजभारा वसिष्ठः भरद्वाजो बृहदाचक्रे अग्नेरिति" इति, एतेन—

कीर्तिश्श्रीर्वाक्च नारीणां स्मृतिर्मेधाधृतिः क्षमा ।
बृहत्साम तथा साम्नां गायत्री छन्दसामहम् ॥

इति गीताभाष्यतात्पर्यचन्द्रिकायामुदाहृते "बृहच्च वा इदमग्रे रथन्तरञ्चास्तां वाक्च वै तन्मनश्चास्तां वाग्वै रथन्तरं मनो बृहत् बृहत्पूर्वं ससृजानं रथन्तरमत्यमन्यत तद्रथन्तरं गर्भमधत्त" इति वाङ्मनसो रथन्तरबृहत्त्वप्रतिपादकश्रुतिवाक्ये मनःपदं तदभिमानि प्रद्युम्नपरमिति सिद्धम्। . . . .

ऐतरेयारण्यके "तदप्येतदृषिणोक्तम्" इत्युक्तमन्त्रद्वयञ्च "प्रथश्च यस्य

सप्रथश्च नामानुष्टुभस्य हविषो हविर्यत्। धातुर्द्युतानात्सवितुश्च विष्णोरथन्तर-माजभारा वसिष्ठः। अविन्दन्ते अतिहितं यदासीद्यज्ञस्य धाम परमं गुहा यत्। धातुर्द्युतानात्सवितुश्च विष्णोर्भरद्वाजो बृहदाचक्रे अग्नेः" इति संहितायामाम्नातम्, इदं मन्त्रद्वयं "तेऽविन्दन्" इत्यादिमन्त्रश्चेति त्यृचं सूक्तं (१०-१८१) प्रवर्ग्ये अभिष्टवे विनियुक्तम्। तत्र प्रथममन्त्रे यस्य प्रथश्च यस्य सप्रथश्च नाम ते आनुष्टुभस्य हविषो हविर्यत् तद-विन्दन्निति पूर्वार्धे योजना, प्रथसप्रथनामानौ राजानाविति आनन्दतीर्थाः। ऋषी इति सायणाचार्यः, चकारद्वयमनुक्तसमुच्चये, अत एव "अविन्दन्ते" इत्युत्तरमन्त्रे ते इति बहुवचननिर्देश उपपद्यते, हविषः–"ब्रह्मार्पणं ब्रह्महविः" इत्यादौ हविष्ट्वेन प्रसिद्धस्य, आनुष्टुभस्य–हयग्रीवानुष्टुप्प्रतिपाद्यस्य लक्ष्मी-हयग्रीवस्य, यथोक्तं द्वितीयारण्के "तदुक्तमृषिणा अनुष्टुभमनुचर्चूर्यमाण-मिन्द्रन्निचिक्युः कवयो मनीषा" इति "वाचि वैतदैन्द्रं प्राणं न्यचाय्य-न्नित्येतदुक्तं भवतीति" तत्र हयशिरा एव प्रतिपाद्यः, तथा हि स च मन्त्रस्संहितायां (१०-१२५) वाक्सूक्ताव्यवहितपूर्वपठिते "इमन्नो अग्ने" इत्यादिनवर्चसूक्ते (१०-१२४) "भिभत्सूनां सयुजं हंसमाहुरपां दिव्यानां सख्ये चरन्तम्। अनुष्टुभमनुचर्चूर्यमाणमिन्द्रं निचिक्युः कवयो मनीषा" इति समग्रः पठितः, तत्र "इमन्नो अग्ने उपयज्ञमेहि पञ्चयामं त्रिवृतं सप्ततन्तुम्। असो हव्यवाळुत नः पुरोगा ज्योगेव दीर्घं तम आशयिष्ठाः" इति प्रथममन्त्रेण प्राकृतप्रलये तमोऽवस्थापन्नप्रकृतिसंश्लिष्टस्य "साक्षादप्य-विरोधं जैमिनिः" इति सूत्रोक्तन्यायेनाग्निशब्दवाच्यस्य भगवतो वासुदेवस्यैव यज्ञाराध्यत्वं "अयज्ञियाद्यज्ञियं भागमेमि" (२) इत्यनेन वासुदेवोद्देश्यकहवि-श्शून्यक्रतावेवाग्नयादेर्हविर्भागार्हत्वं "अग्निस्सोमो वरुणस्ते च्यवन्ते" इत्यनेन वासुदेवस्याच्युततत्वव्यञ्जनपूर्वकमग्न्यादिदेवानामनित्यत्वमप्स्राष्टिं तत्रा-निरुद्धस्य शयनञ्चाभिधाय "बीभत्सवो अपवृत्रादातिष्ठन्" इत्यनेन हयग्रीव-सम्बन्धेच्छावतां हयग्रीवानुग्रहेण वृत्रहनने सति भयाभावञ्चोक्त्वा अनन्तर-

मयं पठितः, अत्र पूर्वोदाहृतमात्स्य हारिवंशतृतीयपर्ववचनाद्यनुरोधेन वाक्पतिर्हयग्रीव एव हंसेन्द्रशब्दवाच्यो हयग्रीवानुष्टुप्प्रतिपाद्यो विवक्षितः, अत एव तदनन्तरवाक्सूक्ते "मम योनिरप्स्वन्तस्समुद्रे" इत्यत्र वाग्देव्या आत्मनस्समुद्रस्थानमिति वक्ष्यते, योनिशब्दश्च "एष ते योनिःप्राणाय त्वा" इत्युपांशुग्रहसादनमन्त्रे स्थानरूपार्थे प्रयुक्तः.

यस्स देवो हृषीकेशः पद्मनाभस्त्रिविक्रमः ।
कृष्णवर्त्मा युगान्ताभो विश्वस्य जगतः प्रभुः ॥ ३ ॥ ४४ ॥ ३५ ॥

समुद्रयोनिर्मधुहाहव्यभुक्क्रतुसत्कृतः ।

इति तदुपब्रृह्मणे हारिवंशवचने योनिशब्दस्थानवाची "योनिष्ट इन्द्रनिषदे अकारि" इति मन्त्रवर्णात्—इति नीलकण्ठोऽपि व्याचख्यौ "इमन्नो अग्न" इत्यादिसूक्तमभिप्रेत्योक्तमाचार्यपादैः—

अग्नौ समिद्धार्चिषि सप्ततन्तोरातस्थिवान्मन्त्रमयंशरीरम् ।
अखण्डसारैर्हविषां प्रदानैराप्यायनं व्योमसदां विधत्से ॥ (ह—स्तो)

इति । एवं व्यासेनापि "अयं हयशिरा भूत्वा" इत्यारभ्य "मत्स्यःकूर्मो वराहश्च" इत्यादिना दशावतारान् प्रक्रम्य अन्ते "हंसः कूर्मश्च मत्स्यश्च" इत्यादिना मोक्षधर्मे नारायणाख्याने उपसंहृतमिति पूर्वमेवोक्तम् । अतश्च "आनुष्टुभस्य" इत्यादेर्यथोक्त एवार्थः- . . . . एतेन "पतङ्गमक्तम-सुरस्य मायया हृदा पश्यन्ति मनसा मनीषिणः । समुद्रे अन्तः कवयो विचक्षते मरीचीनां पदमिच्छन्ति वेधसः । पतङ्गो वाचं मनसा बिभर्ति । तां गन्धर्वोऽवदद्गर्भे अन्तः । तां द्योतमानाग्ँ स्वर्यं मनीषा । ऋतस्य पदे कवयो निपान्ति" इति प्रवर्ग्याभिष्टवविनियुक्त (१०-१७७) त्र्यृचसूक्त-घटकमन्त्रद्वयैकरस्यमपि सङ्गच्छते । इमौ च मन्त्रौ तैत्तिरीयारण्यके सप्त-होतृहृदयपठितौ । तत्तात्पर्यञ्च (२३८) पूर्वमेवोक्तम् । विश्वकर्मसूक्तैककंठ्ये-नानयोर्मन्त्रयोरर्थोनिर्णेयः । अतश्च "प्रथश्च यस्यसप्रथश्च नामानुष्टुभस्य हविषो हविर्यत्" इति ऋक्पूर्वार्धस्य यथोक्त एवार्थः । उत्तरार्धस्यायमर्थः

ऐतरेयारण्यके "वाग्वैरथन्तरम्" इति पूर्वोक्तार्थो वसिष्ठोपक्रमम् इत्याह "धातुः" इत्यादिना उत्तरार्धेन, धातुः-सर्वाधारत्वेन सर्वधारकाद्वासुदेवात्, द्युतानात् "द्युरग्नौ दिवसेऽपिस्यात्" इति विश्वकोशात् द्युम् अग्निम् विश्वसंहारार्थं तनोति विस्तारयतीति द्युतानात्सङ्कर्षणात्, सवितुः ऐश्वर्यशालिनः प्रद्युम्नात् "षुप्रसवैश्वर्ययोः" इति वैयाकरणाः विष्णोः—अनिरुद्धात्।

"प्रद्युम्नादनिरुद्धं त्वं यं विदुर्विष्णुमव्ययम्।
अनिरुद्धोऽसृजन्मां वै ब्रह्माणं लोकधारिणम्॥ ६५॥७१॥

इति भीष्मपर्ववचने अनिरुद्धस्य विष्णुत्वं स्पष्टम्, वसिष्ठः—रथन्तरं, स्वेनैव स्मृतौ वाक्सूक्तवत्सर्ववेदपवित्रेषु परिगणितमिति भावः, आजभार—आजहार आहृतवान्? यत एवं वसिष्ठश्चतुर्मूर्तिधरादनिरुद्धाद्रथन्तरवैभवमजानादत एव वृत्रयुद्धे इन्द्रमेतत्प्रत्यबोधयत्। एतच्च "तस्य वृत्रगृहीतस्य मोहस्समभवन्महान्। रथन्तरेण तं साम्ना वासिष्ठः प्रत्यबोधयत्" ११-१८ इत्याश्वमेधिके "तस्य वृत्रार्दितस्याथमोह आसीच्छतक्रतोः। रथन्तरेण तं तत्र वसिष्ठस्समबोधयत् (२८७-२१)" इति मोक्षधर्मे च व्यास एव स्पष्टमाह॥

(ऋ) सारस्वतसूक्ते—सरस्वति देवनिदोनिबर्हय प्रजां विश्वस्य बृसयस्यमायिनः॥ ३॥ वृत्रघ्नीवष्टिसुष्टुतिम्॥ ७॥

इत्यत्र बृसयस्य—त्वष्टुः प्रजारूपवृत्रस्य वधो वाग्देव्यनुग्रहणेति व्यक्तम्—यद्यपि—

सखे विष्णोवितरं विक्रमस्वद्यौर्देहि लोकं वज्राय विष्कभे।
हनाव वृत्रं रिणाचावसिन्धूनिन्द्रस्य यन्तु प्रसवेविसृष्टाः॥
(८ मं-१०० सू-१२)

अथाब्रवीद्वृत्रमिन्द्रो हनिष्यन् सखे विष्णोवितरं विक्रमस्व।
(४-१८-११) (तै—सं)

त्रीन्लोकानभिवृत्यैतान् वृत्रस्तस्थौ स्वयात्विषा।
तं नाशकद्धन्तुमिन्द्रो विष्णुमभ्येत्य सोऽब्रवीत्॥

वृत्रं हनिष्ये तिष्ठस्व विक्रम्याद्यममान्तिकम् ।
उद्यतस्य तु वज्रस्य द्यौर्ददातु ममान्तरम् ।
तथेति विष्णुस्तच्चक्रे द्यौश्चास्य विवरं ददौ ।
तदेतदखिलं प्रोक्तं सखे विष्णो इति त्वृचा ।
(८–१००–११ सायणीये) (बृहत्–६–१११–१२४ शौ)

वृत्रे विवर्धमाने तु कश्मलं महदाविशत् ।
कालेयभयसंत्रस्तो देवस्साक्षात्पुरन्दरः ।
जगाम शरणं शीघ्रं तं तु नारायणं प्रभुम् ॥ ९ ॥
तं शक्रं कश्मलाविष्टं दृष्ट्वा विष्णुस्सनातनः ।
स्वतेजो व्यदधच्छक्रे बलमस्य विवर्धयन् ॥ १० ॥
(भा–व–प–१०९––८)

इत्यत्र विष्णोरनुग्रहेण वृत्रवध उक्तः, तथापि प्रमाणद्वयाविरोधाय उभयानुग्रहमूलकत्वं वृत्रवधस्याङ्गीकरणीयम् । ऋग्वेदे वाग्देव्या विष्णुपत्नीत्वबोधनाय 'यद्वाग्वदन्ति' 'देवींवाचम्' इति (आ. द श्लो)मन्त्रद्वयानन्तरं 'सखे विष्णो' इति मन्त्रपाठेनाप्ययमर्थस्सूच्यते । अत एव (शां–मो) उदाहृतवचनोत्तरं ।

विष्णुश्च भगवान् देव स्सर्वलोकाभिपूजितः ।
ऐन्द्रं समाविशद्वज्रं लोकसंरक्षणे रतः ॥ २८७ ॥ ३१ ॥

इत्युक्तिस्सङ्गच्छते, तैत्तिरीयके ऋग्वेदे च वृत्रवधजात ब्रह्महत्यापनोदनार्थ-विश्वकर्मसूक्ते वाचस्पतिशब्देनाप्युक्तार्थस्थिरीकृतः—

ऋक्संहितायां वाक्सूक्ताव्यवहितपूर्वसूक्ते "बीभत्सवो अपवृत्रा-दतिष्ठन्" इत्यनन्तरं पठितं "बीभत्सूनां सयुजं हंसमाहुः" इत्यादि मन्त्रं प्रस्तुत्य ऐतरेयारण्यके "वाचि वैतदैन्द्रं प्राणं न्यचाय्यन्" इति विवरण-मप्यत्र मूलं बोध्यम् । अतो–रथन्तरमाजभारा वसिष्ठ—इत्यत्र यथोक्त एवाशयः—

अविन्दन्नित्यादि—यज्ञस्य परमन्धाम अतिहितं गुहायत्तत्ते अविन्द-

न्निति योजना यज्ञस्य "यज्ञो वै विष्णुः" इति प्रसिद्धस्य, परमं उत्कृष्टम्, धाम तेजः वपुर्वा अतिहितं देवानामप्यतिशयेनोपकारकम्, अग्नेरित्यस्य धातुरित्यादिनासामानाधिकरण्येनान्वयः, धातुरित्यादे ऽऽपूर्ववदेवार्थः । आचक्रे आकारयामास, चतुर्मूर्तिधरस्य वासुदेवस्याग्नित्वं—

यो यज्ञैरिज्यते देवो वासुदेवस्सनातनः ।
स सर्वदैवततनुऽऽपूज्यते परमेश्वरः ॥

अ ॥ २० ॥ इति कूर्मपुराणे भरद्वाजेनैवोक्तम् । एवं "चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य । त्रिधा बद्धो ऋषभो रोरवीति महो देवो मर्त्याँ॒ आविवेश" (तै. ना. उ.) इत्यग्निप्रार्थनालङ्करणमन्त्रे प्रसिद्धेऽप्ययमर्थस्फुटः, मन्त्रञ्चेममधिकृत्येत्थमुक्तं सेश्वरमीमांसायामाचार्यपादैः "अस्य मन्त्रस्यायमर्थः "यज्वभिर्यज्ञपुरुषो वासुदेवश्च सात्त्वतैः" इत्यादि-प्रसिद्धः" इत्युपक्रम्य "रोरवीति—श्रुतिमुखरमुखत्वात्, तथा च श्रूयते "तस्य ह वा एतस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेद" इत्यादि महाभारते यज्ञा-नुबन्धिरूपान्तरप्रादुर्भावे पठ्यते "ओङ्कारमुद्गिरन्वक्त्रात्सावित्रीञ्च तदन्वयात्" इति नन्वपांसूक्ते पठितोऽयं मन्त्रोऽब्दैवत्यऽऽप्राप्तः "समुद्रादूर्मिः" इत्यपांसूक्त-मेकादशर्चकमिति स्नाने शौनकेन विनियुक्तश्चेति नैतादृशार्थपर इति चेन्न पुरुषस्यैवापांपतित्वात् । यथोक्तं स्नानयाज्ञवल्क्ये—

प्रणवं वा त्रिरभ्यस्येत्स्मरेद्वा विष्णुमव्ययम् ।
विष्णोरायतनं ह्यापस्सह्यपांपतिरुच्यते ॥

इति अतस्स्नानेऽस्य विनियोगोऽप्युपपन्नः, अपाञ्च विष्णुना सनाथतया पावन-तमत्वादिलक्षणाप्रशस्तिर्दर्शिता भवति । नचान्यस्य कस्यचिदप्स्वरूपानुबन्धिन एवंरूपमस्ति । अतोऽत्र रूपविशेषवत्परमात्मप्रतिपादकत्वं नानुपपन्नाम्" इति अत्र "रोरवीति श्रतिमुखरमुखत्वात्" इति व्याकुर्वतामाचार्यपादानां "यो देवानां प्रथमं पुरस्ताद्विश्वाधिको रुद्रो महर्षिः । हिरण्यगर्भं पश्यत जाय-मानगँ॒ स नो देवश्शुभया स्मृत्या संयुनक्तु" इति मन्त्रे रुद्रशब्दस्य रुत्—

वेदः, तं द्रवति अभिगच्छतीति व्युत्पत्या हयग्रीव एवार्थ इति विवक्षितमिति प्रतीयते योगरूढशब्दानां योगार्थस्य पूर्वमुपस्थितिर्यत्र तत्र योगस्यैव रूढ्यपेक्षया प्रबलतया यौगिकत्वमेवेत्यपशूद्राधिकरणन्यायरक्षामणौ दीक्षितैरेव सिद्धान्तितत्वात् तैत्तिरीयोपनिषद्विद्यारण्यव्याख्याने पूर्ववदेव रुद्रशब्दयोगमात्रप्रदर्शनाच्च । एवं ऋग्वेदे घर्मसूक्तानन्तरसूक्ते "स इदग्निऽ कण्कतमऽ कण्वसखार्यऽपरस्यान्तरस्य तरुषः । अग्निऽपातुगृणतोऽग्निस्सूरीनग्निर्ददातु तेषामवो नः" इति मन्त्रे अग्निशब्देन निर्दिष्टस्य शब्दायमानस्य कण्वप्राचार्यस्य अनन्तरमन्त्रे "वाजिन्तमाय" इत्यनेन प्रतिपादितमतिशयितवाजित्वं हयशिरोरूपमेव, किञ्च श्वेताश्वतरषष्ठाध्याये "एको हगँसो भुवनस्य मध्ये स एवाग्निस्सलिले सन्निविष्टः इत्यारभ्य "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै इत्यन्तसन्दर्भेऽप्ययमर्थोऽवसेयः । ऋग्वेदे वाक्सूक्ताव्यवहितपूर्वसूक्ते "इमन्नो अग्न उपयज्ञमेहि "बीभत्सूनां सयुजं हंसमाहुरपां दिव्यानां सख्ये चरन्तम् इत्युपक्रमोपसंहराभ्यामयमर्थो दृढीकृत इति पूर्वमेवोपपादितम् । एवञ्च "अग्नौ समिद्धार्चिषि, इति सूक्ते स्तैत्तिरीयश्वेताश्वतरश्रुतयोऽपि मूलभूता इति बोध्यम् अतश्च द्वितीयमन्त्रोत्तरार्धे चतुर्मूर्तिधरो वासुदेव एवाग्निरिति सिद्धम् । "अविन्दन्ते अतिहितं यदासीद्यज्ञस्य धाम परमं गुहायत् इति पूर्वार्धे "यज्ञस्य धाम परमं गुहायत् —इत्यनेन अवरं कर्मपरतन्त्रमन्यदेवप्रवृत्तिधर्मभागीति प्रतीयते । एतच्च श्रुतितात्पर्यं मोक्षधर्मयज्ञाग्रहाराध्यायवचनैर्व्यञ्जितम्—

नमो भगवते तुभ्यं वासुदेवाय धीमहि ।
प्रद्युम्नायाऽनिरुद्धाय नमस्सङ्कर्षणाय च ॥ १-५-३७ ॥
इति मूर्त्यभिधानेन मन्त्रमूर्तिममूर्तिकम् ।
यजते यज्ञपुरुषं ससम्यग्दर्शनः पुमान् ॥ ३८ ॥
इति श्री भागवतवचनैरपि तद्दृढीकृतम् ।

ब्रह्मवैवर्तेऽपि प्रकृतिखण्डे—

विष्णुयज्ञः प्रधानं हि सर्वयज्ञेषु सुन्दरि ।
ब्रह्मणा च कृतः पूर्वं महासम्भारसम्भृतः ॥ १७ ॥ १२५ ॥
देवानाञ्च यथा विष्णुर्वैष्णवानां यथा शिवः ।

इत्यारभ्य—

विष्णुयज्ञस्तथा वत्से यज्ञेषु च महानिति ॥ १३२ ॥

इत्युक्तम्—यथा हि श्रूयते ऋग्वेदेऽपि "य इमा विश्वा भुवनानि जुह्वत्" इत्यादिप्रथमविश्वकर्मसूक्ते "या ते धामानि परमाणि यावमायामध्यमा विश्वकर्मन्नुतेमा । शिक्षा सखिभ्यो हविषि स्वधावस्स्वयं यजस्व तन्वं वृधानः ॥ ५ ॥ विश्वकर्मन् हविषा वावृधानस्स्वयं यजस्व पृथिवीमुतद्याम् । मुह्यन्त्यन्ये अभितो जनास इहास्माकं मघवासूरिरस्तु ॥ ६ ॥ वाचस्पतिं विश्वकर्माणमूतये मनोजवं वाजे अद्याहुवेम । स नो विश्वानि हवनानि जोषद्विश्वशंभूरवसे साधुकर्मा" ॥ ७ ॥ इति अत्र प्रथममन्त्रस्यायमर्थः स्वधावः— हे स्वधावन् "वाचस्पतिं विश्वकर्माण"मिति मन्त्रानुसारेण श्रीमन्नित्यर्थः, व्यासार्यसूक्त्या स्वधाशब्दस्य, विष्णुस्मृतौ लक्ष्मीं प्रति भूम्याः "सरस्वती वागथ पावनी च" इति वचनेन वाक्छब्दस्यापि लक्ष्मीपरतायाः पूर्वमेवोपपादनात् वाचस्पतिशब्दस्य विष्णुस्मृतौ ॥

तथा विदितवेद्यानां गतिस्त्वं पुरुषोत्तम ।
प्रपन्नाऽस्मि जगन्नाथ ध्रुवं वाचस्पतिं प्रभुम् ॥ १५८ ॥
वासुदेवं महात्मानं पुण्डरीकाक्षमच्युतम् ।
सुरासुरगुरुं देवं विभुं भूतमहेश्वरम् ॥ ६० ॥
एकव्यूहं चतुर्बाहुं जगत्कारणकारणम् ।

इत्यत्र वासुदेवे प्रयोगाच्च विश्वकर्मन्—सृष्टिस्थितिलयकारक, या यानि, ते परमाणि धामानि—शरीराणि, अप्राकृतलोकवर्तीन्यप्राकृतानि परव्यूहरूपाणि प्राकृतलोकवर्तीन्यप्राकृतानि विभवरूपाणि जीवासंसृष्टानि पद्मनाभहयग्रीव-

मत्स्यकूर्मादिरूपाणि च, या मध्यमा यानि मध्यमानि कर्मपरवशजीवसंसृष्टानि प्राकृतानि भगवतश्शक्त्यावेशावतारगौणप्रादुर्भावपदवाच्यानि ब्रह्मरुद्रादिरूपाणि, अवमा अवराणि पूर्वकोटिद्वयव्यतिरिक्तानि, शरीराणि सन्ति, उत अपि च, इमानि तानि सर्वाणि, हविषि तत्तदधिकारिणां हविर्भागार्थं, देहि उपदिश वा, एकान्तियज्ञे तु वृधानः वर्धमानः, स्वयं तन्वं यजस्व जीवा संसृष्टमेव वासुदेवहयग्रीवादिरूपं याजय यजस्वेत्यन्तर्भावितणिच्, यद्वा सर्वत्रान्तर्यामिण एवाराध्यतया स्वशरीरमेव पूजयेत्यर्थः, अत्र "यो देवानां नामधा एक एव" इति विश्वकर्मसूक्तस्थप्राक्तनश्रुत्यैव ब्रह्मरुद्रादिशब्दैरपि भगवानेव बोध्यते, इति सिद्ध्यति तत्र च, प्रकारद्वयम्, "साक्षादप्यविरोधं जैमिनिः" इति सूत्रोक्तेन निगमनिरुक्तव्याकरणादिमूलयोगेन बोधप्रकारः एकः, "शास्त्रदृष्ट्यातूपदेशो वामदेववत्" इति सूत्रोक्तया श्रुतिस्मृतिपुराणयुक्त्यादिसिद्ध्याऽपर्यवसानवृत्त्या बोधप्रकारोऽपरः जीवलिङ्गानन्यथासिद्धिस्थल एव द्वितीयसरणिः, पक्षद्वयेऽपि न पारमैकान्त्यविरोध इत्यादिकमाचार्यसूक्तिनिष्णातानां सुगमम्, . . . . . . . .

द्वितियमन्त्रे "पृथिवीमुत द्याम्" इत्यस्य द्यावापृथिव्योरित्यर्थः, दिवि पृथिव्याञ्च विद्यमानानि शरीराणीति वार्थः, ये च लौकिका भगवन्तमन्तर्यामिणं विहाय देवतान्तराण्यनुसन्दधते तेऽभितो मुह्यन्तु अस्माकन्तु मघवा आथर्वणाद्दधीचर्षेः बृहदारण्यकादिश्रुत्युक्तप्रकारेण हयशिरस्तत्त्वं सम्यग्जानान इन्द्रः, सूरिः ज्ञानी, अस्तु इति, तृतीयस्यायमर्थः मनोजवं मनोवेगगामिनं, विश्वकर्माणं वाचस्पतिं वाग्देवीपतिं हयग्रीवं, वाजे यज्ञे हुवेम, सः वाचस्पतिः, विश्वानि सर्वाणि, हवनानि हवींषि, जोषत् सेवताम्, विश्वशंभुः विश्वस्य सुखोत्पादकः, साधुकर्मा अस्मदनुकूलव्यापारवान्, अवसे रक्षसि, इति । अतः 'प्रथश्च' इत्यादिसूक्ते 'यज्ञस्य धाम परमम्' इत्यत्राप्युक्त एवार्थः, यद्यपि ऋक्संहितायां "प्रथश्च"इत्यादि पूर्वमन्त्रद्वयानन्तरं "तेऽविन्दन्मनसादीध्यानायजुष्कन्नं प्रथमा देवयानम् ।

धातुर्द्युतानात्सवितुश्च विष्णोरासूर्यादभरन् घर्ममेतम्" इति मन्त्रःसूक्ते पठितः, तथाऽप्यारण्यके संहितोपासनानुपयोगात्तदेकदेशोनोदाहृतः, । अत्र ऐतरेय-ब्राह्मणं "प्रथश्च यस्य सप्रथश्च नामेति घर्मतन्वः स तनुमेवैनं तत्सरूपं करोति । रथन्तरमाजभारा वसिष्ठः भरद्वाजो बृहदाचक्रे अग्नेः इति बृहद्रथन्तरमेवैनं तत्करोति" इति अत्र वासुदेवादिशरीराणां घर्मशरीरत्व-मभिधाय तेन प्रवर्ग्यस्य सशरीरत्वप्रतिपादनेन 'या ते धामानि परमाणि' 'यज्ञस्य धाम परमम्' इत्युक्तां विष्णोस्तनुमप्राकृतां ये न जानन्ति तेषामेव मन्दमतीनां "विष्णोश्शिरःप्रचिच्छिदतुः" इत्यस्यापातप्रतीत्या धनुष्कोट्या त्रिमूर्तिमध्यगतस्य विष्णोर्यज्ञपुरुषस्य शिरच्छेदेनाशिरस्कता-प्रतीतिरिति सिद्धम् ॥

विष्णोः परमतनुस्थापकं परत्वं कण्ठत एव प्रतिपादयति ऐतरेय-ब्राह्मणोपक्रम एव दीक्षणीयेष्टिब्राह्मणम् "अग्निर्वैदेवानामवमो विष्णुःपरमस्त-दन्तरेण सर्वा अन्या देवताः । आग्नावैष्णवं पुरोडाशं निर्वपन्ति । दीक्षणी-यमेकादशकपालं, सर्वाभ्य एवैनं देवाताभ्योऽनन्तरायं निर्वपन्ति, अग्निर्वै सर्वा देवता विष्णुस्सर्वा देवताः एते वै यज्ञस्यान्त्यै तन्वौ यदग्निश्च विष्णुश्च तद्यदाग्नावैष्णवं पुरोडाशं निर्वपान्ति अत एव तद्देवानुध्नुवन्ति । तदाहुर्य-देकादशकपालः पुरोडाशो द्वावग्नाविष्णूकैनयोस्तत्रक्लृप्तिः कावाविभक्तिः, इति अष्टाकपाल आग्नेयोऽष्टाक्षरा वै गायत्री गायत्रमग्नेश्छन्दः । त्रिकपालो वैष्णवस्त्रिर्हीदं विष्णुर्व्यक्रमतसैनयोस्तत्र क्लृप्तिस्सा विभक्तिः" इति । अत्र शब्दान्तरं विहाय परमशब्दप्रयोगादुक्तपरमशरीरं विष्णोरिति विवक्षितिमिति-प्रतीयते अवमः निकृष्टः. परमः उत्कृष्टः, अग्नेरवमत्वं सकलदेवतार्थहविर्भाग-वाहित्वात् । तत्तद्भागरहितत्वाच्च, वैशब्दः "अग्निर्मुखं प्रथमो देवतानाम्" "अग्निरेतुप्रथमो देवतानाम्" "अग्निमुखा वै देवाः" इत्यादिश्रुतिप्रसिद्धिं सूचयति, सर्वदेवतार्थहविःप्रक्षेपाधिकरणत्वमेवाग्नेर्मुखत्वं, प्राथम्यमपि हविर्नि-बन्धनमेव, विष्णोः परमत्वं सर्वव्यापकत्वेन सकलदेवतान्तर्यामितया

तत्तदर्थहविर्भागित्वात् । विष्णुशब्देनैवायमर्थस्सुप्रसिद्धो ज्ञायत इति वैशब्दाप्रयोगः, एवमेव शतपथब्राह्मणम् "स वा एतमाग्नावैष्णवमेकादशकपालं पुरोडाशं निर्वपति दक्षिणीयं तद्यदेतदाग्नावैष्णवं दीक्षणीयग्ँ हविर्भवत्यग्निर्वै सर्वा देवता अग्नौ हि सर्वाभ्यो देवताभ्यो जुहृत्यग्निरुवा अवरार्द्ध्यो यज्ञस्य विष्णुः॒ परार्ध (र्द्ध्य) स्तत्सर्वाश्च देवता इति सर्वञ्च यज्ञं परिगृह्य दीक्ष इति तस्मादाग्नावैष्णवा भवति" इति ॥ ४ ॥ का. अ. ३, ब्रा. इति काण्वपाठे "आग्नावैष्णवमेकादशकपालं पुरोडाशं निर्वपत्यग्निर्वै सर्वादेवता अग्नौ हि सर्वाभ्यो देवताभ्यो जुहृत्यग्निर्वै यज्ञस्यावरार्द्ध्यो विष्णु॒ःपरार्द्ध्यस्तत्सर्वाश्चैतद्देवता॒ः परिगृह्य सर्वञ्चयज्ञं परिगृह्य दीक्षा इति तस्मादाग्नावैष्णवा एकादशकपाल॒ःपुरोडाशो भवति" ॥ ३ । १ । ३ ॥ इति माध्यन्दिनपाठे, अत्र अवरार्द्ध्यः, परार्द्ध्यः, इत्यत्र "परावराधमोत्तमपूर्वाच्च" (४–३–५) इति यत्, "परार्द्ध्याग्रप्राग्रहार" इत्याद्युत्तमपर्यायेष्वमरः "आग्नौ हि सर्वाभ्यो देवताभ्यो जुहोति" इति सर्वदेवतार्थहविर्भागवाहित्वेनाग्नेर्विष्ण्वपेक्षया निकर्ष उक्तः, विष्णोरुत्कर्षस्य प्रसिद्ध्या अनुक्तिः, अयमेवार्थः "एते वै यज्ञस्यान्त्ये तन्वौ" इत्यैतरेयवाक्यात्सङ्गृहीतः एवं तैत्तिरीयेऽपि यथा सौमिके काण्डे "देवासुरास्संयत्ता आसन् तेदेवाबिभ्यतोऽग्निं प्राविशन् तस्मादाहुरग्निस्सर्वादेवता इति" पौरोडाशिकेऽपि काण्डे "ते देवा अग्नौ तनूस्सन्यधत्त तस्मादाहुरग्निस्सर्वादेवता इति" अतश्चैतरेयब्राह्मणे अग्नेरवमत्वं यथोक्तमेव ॥ ननु ऐतरेयब्राह्मणोपक्रमे "अग्निर्वै सर्वा देवताः विष्णुस्सर्वादेवताः" इति, आग्निविष्ण्वोरविशेष एव वक्ष्यते इति आदावपि, अवमपरमशब्दौ न निकृष्टोत्कृष्टवाचिनौ, किन्तु यष्टव्यदेवतासु प्रथमान्तिमपरावेव तौ, अत एव "अग्निरग्रे प्रथमो देवतानां संयातानामुत्तमो विष्णुरासीत्, यजमानाय परिगृह्य देवान्" इति दीक्षणीयानुवाक्यामन्त्रैकार्थ्यमिति (शि–त–वि) शङ्कामपाकर्तुं चोदयति, ऐतरेयब्राह्मणे "तदाहुः" इत्यादिना "कावा विभाक्तिः" इत्यन्तेन ॥ परिहरति "अष्टा कपालः" इत्यादिना, अत्र सायणीयम् ।

'गायत्र्याख्यं छन्दोऽग्नेस्सम्बन्धि, तयोरग्निगायत्र्योः प्रजापतिमुखजन्यत्व-साम्यात्, एतच्च मुखजन्यत्वं तैत्तिरीयास्सप्तमे काण्डे पठन्ति, "प्रजापतिरकामयत प्रजायेयेति। समुखतस्त्रिवृतं निरमिमीत तमग्निर्देवता अन्वसृजत गायत्रीच्छन्द इति॥" इति, अतश्चाग्नेः प्रजापतिमुखजन्यत्वेन निकर्ष उक्तो भवति, विष्णोस्सर्वोत्कर्षमाह "त्रिर्हीदं विष्णुर्व्यक्रमत इत्यनेन, "त्रिर्हीदं विष्णुर्व्यक्रमत" इत्यस्यार्थः ऋक्संहितायां द्वितीयाष्टके "विष्णोर्नुकं वीर्याणि प्रवोचम्" इति "प्रवःपान्तमन्धसः" इत्यादिवैष्णवषड्टच (१-१५५-१५६) सूक्तद्वये विशदीकृतः॥

"विष्णोर्नुकं जपेत्सूक्तं विष्णुभक्तिर्भविष्यति।
ज्ञानोदयं तपः पश्चाद्विष्णुसायुज्यमाप्नुयात्॥४०॥
प्रवः पान्तं जपेत्सूक्तं सहस्रं विष्णुमन्दिरे।
कृतघ्नान्नं यदा भुङ्क्ते तदा पापात्प्रमुच्यते॥३७९॥"

इति (ऋग्विधाने)

शौनकोऽहं प्रवक्ष्यामि नित्यं विष्ण्वर्चनं परम्।
प्रवः पान्तमन्धस इत्यर्धर्चविधानतः।

इति च शौनकेन विनियोग उक्तः। तदनन्तर पञ्चर्चवैष्णव सूक्ते—

भवामित्रोजपेन्मन्त्रं शतवारं दिने दिने।
आधिर्नसंस्पृशेत्सत्यं विद्यया सहतिष्ठति॥३६४॥

इति शौनकेन विनियुक्ते "भवामित्रोनशेव्योघृतासुतिर्विभूतिद्युम्न एवया उसप्रथाः। अधा ते विष्णो विदुषाचिदर्ध्यस्तोमो यज्ञश्चराध्यो हविष्मता।" इति प्रथममन्त्रे स्तोमयज्ञयोर्विष्णुसम्बन्धादेवातिशय उक्तः। एतच्स्तुत्यर्थ एव "विष्णुयज्ञःप्रधानं हि सर्वयज्ञेषु सुन्दरि।" इति ब्रह्मवैवर्तवचनेनोक्तः अनन्तरं "यःपूर्व्याय वेधसे" "तमुस्तोतारःपूर्वम्' इत्यादिमन्त्रद्वयं पठितम्॥

यःपूर्व्याय जपेन्मन्त्रं शतवारं दिनेदिने।

जीवबुद्धिस्सदा नास्ति स्वात्मन्येव स्थिता ततः ॥ ३६५ ॥
तमुस्तोतारो मन्त्रं दिनं प्रति जपेद्दश ।
मूलाऽविद्या न संस्पृष्टा जीवन्मुक्तो न संशयः ॥ ३५५ ॥

इति शौनकीये ऋग्विधाने विनियोगः कथितः ॥ एवं "तव श्रिये मरुतो मर्जयन्ति" इत्यादिषु च विष्णुप्रसादेन रुद्रस्योत्कर्षादिकमिति स्पष्टम्, इति स्मृतिरत्नाकरकृतः । "तव श्रिये" इति मन्त्रस्य यथा त्रिविक्रमावतार-महिमपरत्वं तथा पाराशर्यविजये जिज्ञासाधिकरणे स्पष्टमुक्तम् । एवं "अस्य देवस्य मीढुषो वया विष्णोः" इत्यादि ऋचस्तोत्रभाष्योदाहृताविष्णूत्कर्षपराः। 'अस्य देवस्य' इति श्रुत्यर्थः गीतार्थसङ्ग्रहरक्षायामुक्तः—श्रुत्यन्तराण्यपि "अग्निर्वै" इत्यादेर्यथोक्तमर्थं द्रढयन्ति, यथा कठवल्ल्याम्, प्राप्य निरूपणा-वसरे "सोध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्" "पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः" इति अत्र—तद्विष्णोः व्यापनशीलस्य ब्रह्मणः परमात्मनो वासुदेवाख्यस्य परमं प्रकृष्टं स्थानम्—इत्यादि (शं) उपनिषद्भाष्यम्— अस्य विष्णूत्कर्षपरत्वमेव न तु विष्णुप्राप्यपरम-शिवोत्कर्षपरत्व मितिशङ्कराचार्यैस्सहस्रनामाभाष्यादौ स्थापितमिति पूर्वमेव (१५४) निरूपितम् । एवं सुबालोपनिषदिषष्ठखण्डे सर्ववेदेषु च पठिते "तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् । इति मन्त्रे तद्विप्रासो विपन्यवो जागृवाग्ंसस्समिन्धते । विष्णोर्यत्परमं पदम् ।" इति मन्त्रेऽपि विष्णोरुत्कर्षस्सिद्धः । तदुक्तं व्यासेनैव स्मृतौ ॥

नविष्ण्वाराधनात्पुण्यं विद्यते कर्म वैदिकम् ।
तस्मादनादिमध्यान्तं नित्यमेवार्चयेद्धरिम् ।
तद्विष्णोरिति मन्त्रेण सूक्तेन पुरुषेणवा ।
नैवाभ्यां सदृशो मन्त्रो वेदेषूक्तश्चतुर्ष्वपि ॥ इति ।
"अतो देवेति वर्गं वै जपं कुर्यादतन्द्रितः ।
ब्रह्माद्यैर्वन्दितः पश्चाद्विष्णोस्सायुज्यमाप्नुयात् ॥"

इति शौनकीये ऋग्विधाने विनियुक्ते ऋग्वेदे ॥ १ ॥ २ ॥ ७ ॥ अतो देवेतिवर्गे " अतो देवा अवन्तु नः " " इदं विष्णुर्विचक्रमे " " त्रीणिपदा विचक्रमे " " विष्णोः कर्माणि पश्यत " " तद्विष्णोः परमं पदम् " " तद्विप्रासो विपन्यवः " इति मन्त्रषट्कं पठितं, तत्र ऋग्वेदे " तद्विष्णो " रिति मन्त्रसहपठितानाम्मन्त्राणां शौनकीये ऋग्विधाने पृथगपि विनियोग उक्तः ॥

" तद्विप्रासोजपेन्मन्त्रं शतवारं दिने दिने ।
अन्तकाले महाविष्णुं स्मरेत्किञ्चिन्नसर्वधा ॥ २३७ ॥
अतो देवा इति मन्त्रं दिनं प्रति जपेच्छतम् ।
वासं याति महाविष्णोर्विष्वक्सेनादिभिस्सह ॥ २३८ ॥
इदं विष्णुर्जपेन्मन्त्रं शतवारं दिनेदिने ।
जयादिभिश्च (दीनाज्ञ) संयुक्त स्ततस्सारूप्यमेति सः ॥ २३९ ॥
त्रीणिपदा जपेन्मन्त्रं शतवारं दिनेदिने ।
सान्निध्यमेति विष्णोश्च वैनतेयादिभि स्सह ॥ २४० ॥
विष्णोः कर्माणि मन्त्रञ्च दिनं प्रति जपेच्छतम् ।
सायुज्यादि महाविष्णोर्विष्वक्सेनादिभिस्सह ॥ २४१ ॥

इति एवं ऋग्वेदे द्वितीयाष्टके ' अस्यवामस्य ' इत्यादि सूक्तेऽपि विष्णोः परत्वमवसेयम्—

अस्य वामस्य सूक्तं तु जपेच्चान्यत्र वा जले ।
ब्रह्महत्यादिकं दग्ध्वा विष्णुलोकं च गच्छति ॥

इति ऋग्विधाने शौनकेनास्य सूक्तस्य विनियोग उक्तः—वृद्धहारीतेन स्मृतौ कृष्णार्चने च । सूक्ते कृष्ण विष्णुशब्दद्वय मुभयत्र मूलम् ॥

इन्द्रं मित्रं वरुणमग्निमाहुरथोदिव्यस्स सुपर्णो गरुत्मान् ।
एकं स द्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः ॥ ४६ ॥

इति मन्त्रे एकः—' कृष्णं नियानम् ' ४७ ' विष्णोस्तिष्ठन्ति ' ३६ इति मन्त्रोक्तः विष्णुः कृष्ण इति सिद्धम् ।

एतेन "तद्विष्णोरिति मन्त्रे अप्पयदीक्षितानां विष्णुकर्तृकप्राप्ति कर्मशिवपरतया विवरणप्रयासो दुराग्रहमूलक इति निर्णीयते । एवञ्च "सोऽध्वन ःपारमाप्नोति तद्विष्णो ः परमम्पदम् । " "पुरुषान्न परं किञ्चित्सकाष्ठा सा परा गतिः" इत्यत्र कठवल्ल्यां विष्णुपुरुषशब्दयोरैकार्थ्यं विष्णोःपरत्वञ्च सिद्धम् ।

अथर्वशिखायां "चतुष्पादिदमक्षरम्" इति प्रणवं प्रस्तुत्य द्वितीया विद्युमती कृष्णा विष्णुदैवत्या" "याऽवसानेऽस्य चतुर्थ्यर्धमात्रा विद्युमती सर्ववर्णा पुरुषदैवत्या" इति पादद्वय एव विद्युमतीति पदप्रयोगे-णोपक्रम एव विष्णुपुरुषयोरैक्यबोधनेन "सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रास्ते सर्वे सम्प्रसूयन्ते" इत्युत्तरत्र वक्ष्यमाणा विष्णोरुत्पत्तिरकर्मकृतशरीरसम्बन्धरूपै-वेति सिद्ध्यतीति पूर्वमेवोपवादितम् ॥

एवं "अग्निर्वायुरादित्य ः कालो य ः प्राणोऽन्नं ब्रह्मा रुद्रो विष्णुः इत्यारभ्य "कृत्स्नक्षय एकत्वमेति पुरुषस्य" इत्युदाहृतमैत्रायणीय चतुर्थ-प्रपाठकश्रुतिवाक्येऽपि पुरुषविष्ण्वोरेकत्वेन विष्णोरुत्कर्षसिद्धिः ।

अतएव "तस्मात्सर्गस्वर्गापवर्गहेतुर्भगवानसावादित्यः" "हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम् । तत्त्वं पूषन्नपावृणु सत्यधर्माय विष्णवे । योऽसावादित्ये पुरुषस्सोऽसावहमिति" (मैत्रा) इत्याद्युक्तिश्च सङ्गच्छते ॥

इत्थञ्च मनुस्मृत्यन्ते—

"एनमेके वदन्त्यग्निं मनुमन्येप्रजापतिम् ।
इन्द्रमेके परे प्राणमपरे ब्रह्म शाश्वतम् ॥

इत्यत्र शाश्वतं ब्रह्म तत्रैव पूर्वं 'विद्यात्तु पुरुषं परम्' "क्रान्ते विष्णुम्" इत्यत्रोक्तो विष्णुरेव पुरुषो विवक्षितः । "आसीदिदं तमोभूतम्" इत्यादि "तेन नारायणस्स्मृतः" इत्यन्त तत्स्मृत्युपक्रमानुरोधात्—

विष्णुरेव परं ब्रह्म त्रिभेदमिह पठ्यते ।
वेदसिद्धान्तमार्गेषु" इत्यादि वराहपुराणाद्यैकरस्याच्च ॥

एवञ्च मनुस्मृतौ 'तेन नारायणस्स्मृतः' इत्युपक्रमवचनस्य—

प्रशासितारं सर्वेषामणीयांसमणीयसाम् ।
रुक्माभं स्वप्नधीगम्यं विद्यात्तु पुरुषं परम् ॥

इत्यन्तवचनैकरस्यञ्च । मनुस्मृतौ तदनन्तरं ।

एष सर्वाणि भूतानि पञ्चभिर्व्याप्य मूर्तिभिः ।
जन्मवृद्धिक्षयैर्नित्यं संसारयति चक्रवत् ॥"

इत्यत्रोक्तं मूर्तिपञ्चकञ्च—

अनिरुद्धं पृथिव्यंशे यजेत भवमुक्तये ।
अबंशे पूजयेद्योगी नारायणमुदग्रधीः ॥
प्रद्युम्नमग्नौ वाय्वंशे सङ्कर्षणमतःपरम् ।
व्योमांशे परमात्मानं वासुदेवं समर्चयेत् ॥ ४ ॥ ११५ ॥

इति विष्णुतिलकसंहितायां स्पष्टम् । इत्थञ्च विष्णोस्सर्वोत्कृष्टत्वेन "अग्निरग्रे प्रथमो देवतानाम्" इति दीक्षणीयापुरोऽनुवाक्यामन्त्रेप्यग्नेः प्राथम्यं पूर्वोपपादितरीत्यैव । विष्णोरुत्तमत्वञ्च हविरुद्देश्यदेवतात्वसङ्गमनार्हा याया-देवतास्तत्तदवधिकं विवक्षितमिति "अग्निर्वै देवानामवमो विष्णुःपरमः" इत्यैतरेयब्राह्मणोपक्रमवाक्यस्य यथोक्त एवार्थः । तदिदं सकलमभि-सन्धायैवाचार्यपादास्स्तोत्रभाष्येनारायणस्यपरत्वे "अग्निर्वै देवानामवमो-विष्णुःपरमः" इति श्रुतिं प्रमाणतयोदाहार्षुः "वासुदेवार्जुनाभ्यां वुन्" (पा. सू. ४-३-९८) इति सूत्रे "संज्ञैषा तत्र भगवतः" इति महाभाष्यम् । "सर्वव्यापी स भगवान्" (श्वे. उ. ३—११) इत्यत्र "सर्वव्यापी" इति वासुशब्दार्थोक्त्या, एवं स देवो भगवान्" (श्वे. उ. ५-४) इत्यत्र देवशब्द-प्रयोगेण च वासुदेवशब्दार्थो भगवानिति श्रुतितात्पर्यनिर्णयेन वासुदेवशब्दः भगवत्संज्ञेत्युक्तम् ।

सर्वत्रासौ समस्तं च वसत्यत्रेति वै यतः ।
ततस्स वासुदेवेति विद्वद्भिः परिपठ्यते ॥

तद्ब्रह्म परमं नित्यम् । (वि १-२-१४) इत्युपक्रमे,
शुद्धे महाविभूत्याख्ये परे ब्रह्मणि शब्द्यते ।
मैत्रेयभगवच्छब्दस्सर्वकारणकारणे ॥ (६-५-७२)
एवमेष महान् शब्दो मैत्रेय भगवानिति ।
परमब्रह्मभूतस्य वासुदेवस्य नान्यगः ॥ (७६)
ज्ञानशक्तिबलैश्वर्य वीर्यतेजांस्यशेषतः ।
भगवच्छब्दवाच्यानि विनाहेयैर्गुणादिभिः ॥ (७९)

इत्युपसंहारेचोदाहृतश्रुत्युपबृंहणभूतपराशरवचनान्यपि महाभाष्यकृतामभिप्रेतानि । वासुदेवभगवच्छब्दयोः प्रवृत्तिनिमित्तभेदेऽपि एकव्यक्तिबोधकत्वेन वासुदेवशब्दस्य भगवत्संज्ञात्वकथनमुपपन्नम् । एवं—

भगवान्वासुदेवश्च कीर्त्यतेऽत्र सनातनः ।
स हि सत्यमृतं चैव पवित्रं पुण्यमेव च ॥ (महा. आ. प. १-२८२)

शाश्वतं ब्रह्म परमं ध्रुवं ज्योतिस्सनातनम् ॥ इति व्यासोक्तिरपि भाष्यकृदभिप्रेता । उदाहृतश्वेताश्वतरश्रुत्योः पूर्वं 'गिरिशन्त' (श्वे. उ. ३-५) इति 'यद्वनड्वान्' (श्वे. उ. ५-४) इति च गोवर्धनगिरिणा गोपानां क्षेमं विस्तारयतो यदुवृषभस्य (श्रेष्ठस्य) कृष्णस्य प्रतिपादनेन तस्य परवासुदेवाभिन्नतायाः स्फुटतया कृष्णार्जुनयोः नरनारायणावतारताया महाभारते बहुत्रोक्तावपि कृष्णस्यैव मुख्यप्रादुर्भावत्वम् , अर्जुनस्य गौणप्रादुर्भावत्वम् । तेन—

'एवमुक्त्वा महात्मानमात्मा कृष्णस्य पाण्डवः ।
तूष्णीमासीत्ततः पार्थमित्युवाच जनार्दनः ॥ (महा. अ. प. १२-४५)
ममैव त्वं तवैवाहं येमदीयास्तवैवते ।
यस्त्वां द्वेष्टि स मां द्वेष्टि यस्त्वामनु स मामनु ॥ (अ. प. १२-४६)
नरस्त्वमसि दुर्धर्षो हरिर्नारायणो ह्यहम् ।
काले लोकमिमं प्राप्तौ नरनारायणावृषी ॥ (अ. प. १२-४७)

अनन्यः पार्थमत्तस्त्वं त्वत्तश्चाहं तथैव च ।
नावयोरन्तरं शक्यं वेदितुं भरतर्षभ ॥ (अ. प. १२-४८)

इत्यत्र अर्जुनस्य कृष्णाभेदोक्तिरपि गौणप्रादुर्भावाभिप्रायिकैव, न तु तात्त्विका भेदपरा, इति महाभाष्यकृता निर्धारितं भवति ।

एतेन कैलासयात्राप्रकरणे बाणयुद्धप्रकरणादौ च रुद्रस्य नारायणाभेदोक्तिरपि गौणप्रादुभावाभिप्रायेणैवेति व्यञ्जितम् ।

पाणिनेरपि वासुदेवस्य परत्वमभिप्रेतमिति महाभाष्यकृता व्यवस्थापितम् । एतेन पाणिनिना मध्ये मङ्गळमप्यनुष्ठितं भवति । "अ इ उण्' इत्यादि सूत्रेषु अकारं विष्णुवाचकं मङ्गळपरमभिप्रयन् पाणिनिः 'वृद्धिरादैच्' इत्युपक्रमे आत् विष्णोः, वृद्धिरित्यर्थसूचनेन मङ्गळम्, 'अ अ' इत्युपसंहारे विष्णुवाचकशब्दोच्चारणेन च मङ्गळमभिसंदधानः 'मङ्गळादीनि मङ्गळमध्यानि मङ्गळान्तानि च शास्त्राणि प्रथन्ते इत्यपि शिक्षयति ।

इममर्थमभिप्रेत्यानन्दवर्धनो ध्वन्यालोके—

'भगवान्वासुदेवश्च कीर्त्यतेऽत्र सनातनः' इत्युपक्रम्य निर्णीतश्चायमंशश्शब्दतत्त्वविद्भिरेवेत्याचरुयौ ।

शङ्कराचार्या अपि "स्मृत्यधिकरणे (शा. सू. २-१-१) 'यत्तत्सूक्ष्ममविज्ञेयम्' इति परंब्रह्मप्रकृत्य ।

'सह्यन्तरात्मा भूतानां क्षेत्रज्ञश्चेति कथ्यते' । इति चोक्त्वा 'तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम' इत्याह । तथान्यत्रापि 'अव्यक्तं पुरुषे ब्रह्मन्निर्गुणे(न्निष्क्रिये) संप्रलीयते' इत्याह ।

अतश्च संक्षेपमिमं श्रुणुध्वं नारायणस्सर्वमिदं पुराणः ।
ससर्गकाले च करोति सर्वं संहारकाले च तदत्ति भूय इति पुराणे ।

भगवद्गीतासु च 'अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा, (भ. गी. ७-६) इति । परमात्मानमेव प्रकृत्यापस्तंबः पठति 'तस्मात्कायाः प्रभवन्ति सर्वे समूलं शाश्वतिकस्स नित्यः, (ध. सू. १-८-२३-२) इति' इति निरूपयन्ति ।

"'उत्पत्त्यसंभवात्' (शा. सू. २-२-४२) इति सूत्रे भगवानेवैको वासुदेवो निरञ्जनज्ञानस्वरूपः परमार्थतत्त्वं स चतुर्धात्मानं प्रविभज्यप्रतिष्ठितःइति- योसौ नारायणः परोऽव्यक्तात्प्रसिद्धः परमात्मा सर्वात्मा स आत्मनात्मान- मनेकधा व्यूह्यावस्थित इति तन्न निराक्रियते' इति च कथयन्ति । अत्र नारायणाख्याने प्रथमाध्यायगतवचनेषु 'सह्यन्तरात्मा' इत्यत्र (पृ. ३७) क्षेत्रज्ञः परवासुदेव इति, एकोनविंशेऽपि एवमेवेति (पृ. ९७) 'अव्यक्तं पुरुषेब्रह्मन्निष्क्रिये संप्रलीयते । (ना. ६) इत्यत्र, पुरुषशब्दार्थो नित्यो वासुदेव इति च (पृ. ५१) पूर्वमेव निरूपितम् ॥

सूर्यसिद्धान्ते—

वासुदेवः परं ब्रह्म तन्मूर्तिः पुरुषः परः ।
अव्यक्तो निर्गुणश्शान्तः पञ्चविंशात्परोऽव्ययः ॥ १२ ॥
प्रकृत्यन्तर्गतो देवो बहिरन्तश्च सर्वगः ।
सङ्कर्षणोऽयं सृष्ट्वादौ तासु वीर्यमपासृजत् ॥ १३ ॥
तदण्डमभवद्धैमं सर्वत्र तमसावृतम् ।
तत्रानिरुद्धः प्रथमं व्यक्तीभूतस्सनातनः ॥ १४ ॥
हिरण्यगर्भो भगवानेष छन्दसि पठ्यते ।
आदित्यो ह्यादिभूतत्वात्प्रसूत्या सूर्य उच्यते ॥ १५ ॥
परंज्योतिस्तमःपारे सूर्योऽयं सवितेति च ।
पर्येति भुवनान्येष भावयन्भूतभावनः ॥ १६ ॥
प्रकाशात्मा तमोहन्ता महानित्येष विश्रुतः ।
ऋचोऽस्य मण्डलं सामान्युस्रामूर्तिर्यजूंषि च ॥ १७ ॥
त्रयीमयोऽयं भगवान्कालात्मा कालकृद्विभुः ।
सर्वात्मा सर्वगस्सूक्ष्मः सर्वमस्मिन्प्रतिष्ठितम् ॥ १८ ॥
रथे विश्वमये चक्रं कृत्वा संवत्सरात्मकम् ।
छन्दांस्यश्वास्सप्तयुक्ताः पर्यटत्येष सर्वदा ॥ १९ ॥

त्रिपादममृतं गुह्यं पादोऽयं प्रकटोऽभवत्।
सोऽहङ्कारं जगत्सृष्ट्यै ब्रह्माणमसृजत्प्रभुः ॥ २० ॥
तस्मै वेदान् वरान् दत्वा सर्वलोकपितामहम्।
प्रतिष्ठाप्याण्डमध्येऽथ स्वयं पर्येति भावयन् ॥ २१ ॥ इति ।

ब्रह्मसिद्धान्ते—

नारायणस्सुरश्रेष्ठो वेदाकारेण वर्तते ।
छन्दश्शास्त्रं तस्य पादौ कल्पः पाणीमुखं तथा ।
शब्दशास्त्रं श्रोत्रयुग्मं निरुक्तं घ्राणमेव च ।
शिक्षाशास्त्रं ज्योतिषं तु नयनं पृष्ठमेव च ॥ ७ ॥
एतैरङ्गैरसावङ्गी राजते वेदविग्रहः ।
प्रधानमङ्गमेवेदमङ्गेष्वेष्वेव षट्सु च ॥ ८ ॥ इति चोक्तम् ॥

"ऋग्वेदपाठपठितं व्रतमेतत्सुदुश्चरम्" 'कथितो हरि-गीतासु — सात्वतैर्धार्यते सदा —' 'एकव्यूह विभागो वा—चतु-र्व्यूहश्च दृश्यते' इति "ये यजन्ति पितॄन् देवान्—विष्णुमेव यजन्ति ते । अन्तर्गतस्स भगवान्—नारायण इति श्रुतिः ॥" इति "मज्जन्ति पितरस्तस्य—ज्ञेयो विष्णुरिति श्रुतिः । इति च पूर्वोदाहृतनारायणाख्यान-वचनैः ॥

'येकेचित्सर्वलोकेषु दैवं पित्र्यं च कुर्वते ।
दानानि च प्रयच्छन्ति तप्यन्ते च तपोमहत् ॥
सर्वेषामाश्रयो विष्णुरैश्वरं विधिमास्थितः ।
सर्वभूतकृतावासो वासुदेवेति चोच्यते ॥

इति व्याख्यास्यमानैतदुपाख्यानवचनैश्च 'यज्वभिर्यज्ञपुरुषो वासुदेवश्च सात्वतैः । वेदान्तवेदिभिर्विष्णुः प्रोच्यते यो नतोऽस्म्यहम् । (५–१७–१५ वि. पु.) इति वचने सात्त्वत वेदान्तवेदि सम्मत एवार्थो युक्त इति निर्णीतं भवति एवं 'ऐश्वरेणसयोगेन 'विष्णुरैश्वरं विधिमास्थितः' इत्युक्त्या परमशरीरव्यतिरिक्तदेहवान् यज्ञपुरुषः विष्णुरन्य इति सूचितम् 'या ते

धामानि परमाणि' इत्यादि श्रुत्या 'इन्द्रो मायाभिः पुरुरूपः' इत्यादा (वृ) वपि मुख्यगौणरूपाणि विवक्षितानीति प्रतीयते श्रुतीनां चासामेतत्प्रघट्टक-मूलता प्रागेव निरूपिता—एतेन "विष्णोश्शिरः प्रचिच्छिदतुः" इति शतपथ-ब्राह्मण प्रपर्ग्यार्थवादवाक्यस्याप्यर्थः निर्धारितः "देवाहवैसत्रं निषेदुरग्नि-रिन्द्रस्सोमो मखोविष्णुर्विश्वेदेवा अन्यत्रैवाश्विभ्याम्" इति तत्रैवोपक्रमे "मखो विष्णुः" इत्यत्र मखपदेन यज्ञाभिमानी विष्णुरेव प्रक्रान्तः न तु त्रिमूर्ति-मध्यग इति तस्यैव गौणप्रादुर्भावस्य यज्ञाभिमानिनश्शिरश्छेदस्ततः प्रतीयते इति। तत्र विष्णुशब्दः कथमिति चेत् 'यज्ञो वै विष्णुः' इत्यत्र तस्यापि ग्रहणात् किं च माध्यन्दिनशतपथब्राह्मणे "स प्रोर्णुते विष्णोश्शर्मासि शर्मयजमानस्येत्युभयं वा एषोऽत्रभवति यो दीक्षते विष्णुश्च यजमानश्च यदुह दीक्षते तद्विष्णुर्भवति यद्यजते तद्यजमानः" इत्यनेन विष्णुशब्द-प्रयोगस्य दीक्षानिबन्धनत्वकथनात् 'विष्णोश्शिरः' इत्यत्र न त्रिमूर्तिमध्य-गतनिर्णयसम्भवः अत्र सायणीयम् "विष्णुशब्दः पुरुषोत्तमे प्रसिद्धः अत्राभिमतमर्थमाह "उभयं वा एष" इति, दीक्षणीयेष्टौ आग्नावैष्णवे हविषि विष्णुर्देवतेति, तत्संस्कारसंस्कृतो यजमानोऽपि विष्णुरित्यभिप्रायः" इति। अत्र पुरुषोत्तमशब्देन श्रुतार्थापत्त्या यजमान एव विवक्षित इति बोधितम्।

ऐतरेयब्राह्मणेऽपि "अग्निर्मुखम्" इत्यादि याज्यानुवाक्यामन्त्रौ प्रस्तुत्य "अग्निश्च ह वै विष्णुश्च देवानां दीक्षापालौ तौ दीक्षाया ईशाते तद्यदाग्ना-वैष्णवं हविर्भवति यौ दीक्षाया ईशाते तौ प्रीतौ दीक्षां प्रयच्छतां यौ दीक्ष-यितारौ तौ दीक्षयेतामिति" इति विष्णोर्दीक्षापालत्वोक्त्या तदनुग्रहलब्ध-दीक्षावति यजमानेऽपि विष्णुशब्दो भाक्तः। एतदेवाभिप्रेत्य "देवा वै सत्रमासत" इत्यादितैत्तिरीयारण्यकप्रवर्ग्यार्थवादव्याख्याने सायणीये, "तस्मिन् सत्रे विष्णुशब्दवाच्यो यज्ञाभिमानी देवो गृहपतित्वेन दीक्षितः अतो विष्णुस्सत्रं कृतवानित्येवं विष्णुनाम्ना यश आसीत्" इत्युक्तम्।

"विष्णोऽक्रमोऽस्यभिमातिहा" इत्यादि व्याख्यानेऽपि सायणीये "यज्ञप्रयोगं कृत्स्नं व्याप्नोतीति विष्णुर्यजमानः, यद्वा विष्णुना परमेश्वरेणाभेदोपचारं कृत्वा विष्णुरित्युच्यते" इति च। अनेन "यद्विष्णुक्रमान् कुरुते विष्णुरेव भूत्वा यजमानः" इति श्रुतिरपि व्याख्याता। एतेनेयं श्रुतिस्त्रिमूर्तिमध्यगतस्य विष्णोर्विष्णुत्वं कर्ममूलमिति भावेन प्रवृत्तेत्युत्प्रेक्षयन्तश्शिक्षिताः।

वस्तुतस्तु यज्ञाभिमानिदेवस्त्रिमूर्तिमध्यगतस्य विष्णोश्शक्त्यावेशावताररूपगौणप्रादुर्भाव इत्यभिप्रेत्य "देवा वै सत्रं निषेदुरग्निरिन्द्रस्सोमो मखो विष्णुः" इत्यत्र मखविष्णुपदप्रयोगः। तथा च "यज्ञो वै विष्णुः" इति स्वरसतस्सङ्गच्छते "विष्णोश्शिरःप्रचिच्छिदतुः" इत्यादिकमपि तस्यैव शिरश्छेदानुसन्धानपरम्। एवं "अथेमं विष्णुं यज्ञं त्रेधा व्यभजन्त वसवः-प्रातस्सवनम्" इत्यादिकमपि तत्परम्।

दर्शे च पौर्णमासे च यस्येह हविरुच्यते।
विष्णुर्नामे ह्ययोग्निस्तु धृतिमान्नाम नामतः॥

इत्यरण्यपर्वणि विष्णुशब्दोऽग्नावपि प्रयुक्तः यज्ञाभिमानी विष्णोःप्रादुर्भाव इति हरिवंशे स्पष्टम्। यथा प्रथमपर्वणि।

"स गत्वा ब्रह्मणो लोकं दृष्ट्वा पैतामहं पदम्।
ववन्दे तानृषीन्त्सर्वान्विष्णुरार्षेण कर्मणा॥ ४९॥ १२॥
सोऽग्निं प्राक्सवने दृष्ट्वा हूयमानं महर्षिभिः।
अवन्दत महातेजाः कृत्वा पौर्वाह्णिकीं क्रियाम्॥ १३॥
स ददर्श मखेष्वाज्यैरिज्यमानं महर्षिभिः।
भागं यज्ञियमश्नानं स्वदेहमपरं स्थितम्"॥ १४॥ इति।

तृतीयपर्वण्यपि—

"विष्णुर्विष्णुत्वमापन्नो देहान्तरविसृष्टवान्।
संरक्षति महायोगी सर्वांस्तान्त्सहचारिणः॥ २८॥ ७१॥

पुष्करे रमते विष्णुर्विष्णुरेव द्विधाकृतः ।
दीप्यमानस्स्वतेजोभिर्विधूम इव पावकः ॥ ७२ ॥
सोऽग्निर्मिनस्समुद्भूतःपृथिवीं तापयन्निव ।
अथ दीक्षां समास्थाय सर्वे विष्णुमया गणाः ।
पुष्करादग्निमुद्धृत्य प्रणीय च यथाविधि ।
जुहुवुर्मन्त्रविधिना " इत्यादि ।
" ब्रह्माऽपि वैष्णवन्तेजो वेदोक्तैर्वचनैर्नृप ।
व्यतिरिक्तेन्द्रियो विष्णुर्योगात्मा ब्रह्मसम्भवः ।
दक्षःप्रजापतिर्भूत्वा सृजते विपुलाःप्रजाः ॥ २१ ॥ ८ ॥
विष्णुरेव महायोगी कर्मणामन्तरङ्गतः । "
इत्यादिना गौणप्रादुर्भावोऽप्युक्तः ॥

'अग्निरवमो देवतानाम्' इत्यादिश्रुतौ विष्णोः गौणप्रादुर्भावताग्नेरिति अवमत्वाभिधानेन सिध्यति 'अग्निमीडे पुरोहितम्' इत्युपक्रम्य तत्र तत्र संहितायां विष्णोः परत्वं ब्राह्मणेऽग्नेरवमत्वं चोक्त्वा उपनिषदन्ते विष्णोः परत्वोपसंहारात्—एतेन पारिजातापहरणप्रसङ्गे—

" धनुर्ज्यायाम्मुनिश्रेष्ठ भिन्नायां हि पुराऽनघ ।
धन्वीभिरमराणाञ्च वरदानान्महामुने ॥ २ ॥ ७० ॥ ३० ॥
उत्कृत्तशिरसो विष्णोःपुरा देहो धृतो मया ।
सन्धिते च शिरो यत्नाच्छिन्नं रौद्रेण तेजसा ॥ ३१ ॥
अहं विशिष्टो देवानामित्युक्त्वा पुनरच्युतः ।
धनुष्यारोप्य दर्पेण स्थितो नारद केशवः ॥ ३२ ॥
इति नारदम्प्रतीन्द्रवचनान्यपि व्याख्यातानि ।

अत एव तदनन्तरम्—

" महेन्द्रवचनं श्रुत्वा नारदो वदतां वरः ।
विविक्ते देवराजानमिदं वचनमब्रवीत् ॥ २ ॥ ७१ ॥ १ ॥

कामं प्रियाणि राजानो वक्तव्या नात्र संशयः ॥
प्राप्तकालं तु वक्तव्यं हितमप्रियमप्युत ॥ २ ॥"

इत्युपक्रम्य—

"य एको विश्वमध्यास्ते प्रधानं जगतो हरिः ।
प्रकृत्यायं परं सर्वे क्षेत्रज्ञं वै विदुर्बुधाः ॥ १३ ॥
तस्याव्यक्तस्य यो व्यक्तो भागस्सर्वभवोद्भवः ।
तस्यात्मा परमो देवो विष्णुस्सर्वस्य धीमतः ॥ १४ ॥
नारायणो महातेजास्सर्वकृल्लोकभावनः ।
भोक्ता महेश्वरो देवः कर्ता विष्णुरधोक्षजः ॥ १८ ॥
एवं पुराणपुरुषो विष्णुर्वेदेषु पठ्यते ।
अचिन्त्यश्चाप्रमेयश्च गुणेभ्यश्च परस्तथा ॥ २० ॥
तेनोक्तं भुवने नास्ति मत्समः पुरुषोऽपरः ।
अंशेन तु भविष्यामि पुत्रः खल्वहमेव ते ॥ २३ ॥

इत्यादिना सकलश्रुतितात्पर्यमाविष्कृत्य—

"यथा पललपिण्डस्स्याद्व्याप्तस्स्नेहेन मानद ।
तथा जगदिदं व्याप्तं विष्णुना प्रभविष्णुना" ॥ २७ ॥

इत्यनेन "अथ कस्मादुच्यते महाविष्णुमिति, यस्सर्वान् लोकान्व्याप्नोति व्यापयति स्नेहो यथा पललपिण्डमोतप्रोतमनुप्राप्तं व्यतिषक्तो व्याप्यते व्यापयते यस्यान्नजातः परोऽन्योऽस्ति य आविवेश भुवनानि विश्वा प्रजापतिः प्रजया संविदानस्त्रीणि ज्योतींꣳषि स च ते स षोडशीति तस्मादुच्यते महाविष्णुमिति" इति नृसिंहपूर्वतापनीयश्रुत्यर्थमभिधाय—श्रुतार्थापत्त्या 'उत्कृत्ताशिरसो विष्णोः' इति (२-७०-३१) पूर्वत्र महाविष्णुर्न विवक्षित इति व्यञ्जयित्वा—

यज्ञ इत्यपि सद्भिश्च कथ्यते वेदवादिभिः"।

इत्यनेन—"यज्ञो वै विष्णुः" इति श्रुत्यर्थकथनमपि सङ्गच्छते ॥

अत्र "अंशेन तु भविष्यामि पुत्रस्खल्वहमेव ते" इतिवत् अंशादिपदाप्रयोगेण उपेन्द्रावतारवत् यज्ञाभिमानीनांशावतारः, अपि तु कर्म-परवशश्शक्त्यावेशावताररूपगौणप्रादुर्भावोऽपि इति सूचितम् ॥

एवं प्रथमपर्वण्यपि—

"आश्चर्यमपरं विष्णुर्देवैर्दैत्यैश्च कथ्यते ।
विष्णोरुत्पत्तिमाश्चर्यं ममाचक्ष्व महामुने ॥ ४० ॥
कर्म चाश्चर्यभूतस्य विष्णोस्तत्वमिहोच्यताम् ।"

इति प्रश्नप्रतिवचने—

"सहस्राक्षं सहस्रास्यं सहस्रभुजमव्ययम् ।
सहस्रशिरसं देवं सहस्रकरमव्ययम् ॥ ४१ ॥
आहुर्वेदविदो विप्रा यं यज्ञे शाश्वतं विभुम् ।
तस्य विष्णोस्सुरेशस्य श्रीवत्साङ्कस्य धीमतः ॥ १० ॥
प्रादुर्भावसहस्राणि अतीतानि न संशयः ।
भूयश्चैव भविष्यन्तीत्येवमाह प्रजापतिः ॥ ११ ॥
प्रादुर्भावांश्च वक्ष्यामि पुण्यान्दिव्यगुणैर्युतान् ।
छान्दसीभिरुदाराभिश्श्रुतिभिस्समलङ्कृतान् ॥ १५ ॥
तस्य ह्येका महाराज मूर्तिर्भवति सत्तमा ।
नित्यं दिविष्ठा या राजन् तपश्चरति दुश्चरम् ॥ १८ ॥
द्वितीया चास्य शयने निद्रायोगमुपाययौ ।
प्रजासंहारसर्गार्थं तमध्यात्मविचिन्तकम् ॥ १९ ॥
सुप्त्वा युगसहस्रं तत्प्रादुर्भवति कार्यतः ।
पूर्णे युगसहस्रे तु देवदेवो जगत्पतिः ॥ २० ॥
पितामहो लोकपालः" इत्यादिना प्रलये सर्वेषां विष्णोर्देहप्रवेशम्,
"पुराणदेवोऽथ पुराणि चक्रे प्रदीप्तवैश्वानरतुल्यतेजाः ।
येन चार्णवमध्यस्थौ" इत्यादिना ब्रह्मादिसृष्टिं मधुकैटभवधञ्चाभिधाय—

एष पौष्करको नाम प्रादुर्भावो महात्मनः ।
पुराणे कथ्यते यत्र वेदश्रुतिसमाहितः ॥ २७ ॥
एते चान्ये च बहवो दिव्या देवगणैर्युताः ।
प्रादुर्भावाः पुराणेषु गीयन्ते ब्रह्मवादिभिः ॥ १७० ॥
यत्र देवापि मुह्यन्ति प्रादुर्भावानुकीर्तने ।
पुराणं वर्तते यत्र वेदश्रुतिसमाहितम् ॥ १७१ ॥

इत्युक्तम् । अत्र विष्णोः परत्वस्य स्फुटमुक्त्या प्रादूर्भावेष्वेव गौणानामपि विवक्षाऽवसेया । तृतीयपर्वण्यपि—

ब्रह्मसम्बन्धसम्बद्धमबद्धं कर्मभिर्नृप ॥ १६ ॥ २ ॥
अव्यक्तं कारणं यत्तन्नित्यं सदसदात्मकम् ।
निष्कलः पुरुषस्तस्मात्सम्बभूवात्मयोनिजः ॥ १६ ॥ ३ ॥
दिव्यो दिव्येन वपुषा सर्वभूतपतिर्विभुः ।" इत्युपक्रम्य—
"अपदात्सपदो जातस्तस्मान्नारायणोऽभवत् ॥ १६ ॥ १० ॥
अहन्त्विति सहोवाच प्रजास्स्रक्ष्यामि भारत ।
प्रभवस्सर्वभूतानां यस्य तन्तुरिमाः प्रजाः ॥ १२ ॥
अथ मूर्तिं समाधाय स्वभावाद्ब्रह्मचोदितः ।
ससर्ज सलिलं ब्रह्मा येन सर्वमिदं ततम् ॥ १६ ॥
यत्र विष्णुमयं तेजस्सर्वत्र समताङ्गतम् ॥ १७ ॥ १४ ॥
यत्तद्ब्रह्मेति वै प्रोक्तं ब्राह्मणैर्वेदपारगैः ॥ १७ ॥ १५ ॥
एतद्धितमिति प्रोक्तं ब्राह्मणैर्वेदपारगैः ।
यदेकं ब्रह्मणः पादं दिष्टत्वं गमितं पदम् । १७ ॥ २८ ॥
बहुत्वाद्विश्वभावानां विश्वशब्दः प्रयुज्यते ॥
ब्राह्मणैर्ब्रह्मभूतात्मा सत्यव्रतपरायणैः ॥ १७ ॥ १९ ॥
विश्वरूपं मनोरूपं बुद्धिरूपञ्च मानयन् ।
एवं द्वन्द्वं स भगवान् प्रथमं मिथुनं सृजन् ॥ १७ ॥ २० ॥

स एव भगवान्विश्वो देव्या सह सनातनः ।
विधाय विपुलान् भोगान् ब्रह्माचरति सानुगः ॥ १७ ॥ २१ ॥
स एष भगवान् ब्रह्मानित्यं ब्रह्मविदां वरः ॥ १७ ॥ २२ ॥
मूर्ध्नि ब्रह्मा समुत्क्षिप्य मनसाऽपि पितामहः ॥
असृजन्मनसा विष्णुं योगाद्योगेश्वरस्य च ॥ १७ ॥ ३६ ॥
व्यतिरिक्तेन्द्रियो विष्णुर्बिम्बाद्बिम्बमिवोद्धृतः ।
तेजोमूर्तिधरो देवो नभसीन्दुरिवोदितः ॥ ३७ ॥
ब्राह्मणा वेदविद्वांसस्सत्यव्रतपरायणाः ।
नेतरे जातु पश्यन्ति अध्यात्मं नावबुध्यते ॥ १७ ॥ ४२ ॥
चन्द्रमण्डलसंस्थानाज्योतिश्चान्द्रं महत्तदा ॥ १७ ॥ ४४ ॥
प्रविश्य हृदयं क्षिप्रं गायत्र्या नयनान्तरे ॥
गर्भस्य सम्भवो यस्य चतुर्धा पुरुषात्मकः ।
ब्रह्मतेजोमयो युक्तश्शाश्वतोऽथ ध्रुवोऽव्ययः ॥
चन्द्रांशुविमलप्रख्यो भ्राजिष्णुर्वर्णसंस्थितः ।
नेत्राभ्यां जनयद्देवो ऋग्वेदं यजुषा सह ॥
सामवेदञ्च जिह्वाग्रादथर्वाणञ्च मूर्धतः ।
जातमात्रास्तु ते वेदाः क्षेत्रं विन्दन्ति तत्त्वतः ॥ ४८ ॥
तेन वेदत्वमापन्ना यस्माद्विन्दन्ति तत्पदम् ।
ते सृजन्ति तदा वेदा ब्रह्मपूर्वं सनातनम् ॥
पुरुषं दिव्यरूपाभं स्वैस्वैर्भावैर्मनोभवैः ।
अथर्वणस्तु यो योगश्शीर्षं यज्ञस्य तत्स्मृतम् ॥
ग्रीवाबाह्वन्तरञ्चैव ऋग्भागस्स भवेत्ततः ।
हृदयञ्चैव पार्श्वञ्च सामभागस्तु निर्मितः ।
बस्तिशीर्षं कटीदेशं जङ्घोरुचरणैस्सह ।
एवमेष यजुर्भागस्सञ्जातो यज्ञकल्पितः ॥

पुरुषो दिव्यरूपाभस्सम्भूतो ह्यमरात्पदात् ।
स हि वेदमयो यज्ञस्सर्वभूतसुखावहः
उभयोर्लोकयोस्तात हिंसावर्ज्यस्सनातनः ॥ ५२ ॥
योगारम्भं कर्मसाध्यं ब्रह्मचर्ये सनातनम् ।
प्रभवं सर्वभूतानां यो विन्दति स वेदवित् ॥
स सिद्धः प्रोच्यते लोके सिद्धिरेव न संशयः ।
निर्मुक्तैस्सर्वकर्मभ्यो मुनिभिर्वेदपारगैः ॥
वैष्णवं यज्ञमित्येवं ब्रुवन्ते वेदपारगाः ।
ब्राह्मणा नियमश्रान्ता वेदोपनिषदे पदे ॥ ५६ ॥
तद्ब्रह्म चक्षुषोर्मध्ये सुसूक्ष्मः पुरुषो विराट् ।
तयोरन्यान् बहून् सूक्ष्मान् सृजते पुरुषोत्तमः ॥ १८ ॥ १८ ॥
स एव भगवान्विष्णुर्व्यक्ताव्यक्तस्सनातनः ।
आधारस्सर्वविद्यानां प्रलये प्रलयान्तकृत् ॥ १९ ॥
तं मूर्ध्नि धातुभिर्नद्धं विशन्ति ब्रह्मचोदिताः ।
तेऽन्तरा पुरुषास्सर्वे ज्ञातारस्सुखदुःखयोः ॥ २० ॥
अव्यक्ताद्व्यक्तिमापन्नं स्वेन भावेन भारत ।
अन्तस्थं सर्वभूतेषु चरन्तं विद्यया सह ॥ २८ ॥
स्तूयमानश्च विबुधैस्सिद्धैर्मुनिवरैस्तथा ।
सस्मार विपुलं देहं हरिर्हयशिरो महान् ॥ २६ ॥ ४९ ॥
कृत्वा वेदमयं रूपं सर्ववेदमयं वपुः ।
शिरोमध्ये महादेवो ब्रह्मानु हृदये स्थितः ॥ ५० ॥
आदित्या रश्मयो लालाचक्षुषी शशिभास्करौ ।
जङ्घे तु वसवस्साध्यास्सर्वसन्धिषु देवताः ॥ ५१ ॥
जिह्वा वैश्वानरो देवस्सत्या देवी सरस्वती ।
मरुतो वरुणश्चैव जानुदेशे व्यवस्थिताः ॥ ५२ ॥

एवं कृत्वा तथा रूपं सुराणामद्भुतं महत् ।
असुरं पीडयामास क्रोधाद्रक्तान्तलोचनः ॥ ५२ ॥
ये तु विष्णुमधीयन्ते बहुधा कामविग्रहैः इत्यादि च ।

अत्र वचनेषु यथार्हं बृहदारण्यकश्रुत्यर्थोऽनुसन्धेयः । अतश्च "देवा-. ह वै सत्रं निषेदुः" इत्यादि काण्वशाखीयबृहदारण्यकप्रथमाध्यायप्रघट्टकस्य "नैवेह किञ्चनाग्रे" इत्यादेः "आत्मैवेदमग्रे" इत्यादेश्च पूर्वोक्त एवार्थः । अनन्तरञ्च जगतो ब्रह्माभिन्नत्वेन श्रुत्या प्रमितस्य "आत्मैवेदमग्र आसीत्" इति ब्रह्माभेदनिर्देशोपपादनाय प्रवृत्ते "तद्धेदं तर्ह्यव्याकृतमासीत्, तन्नाम-रूपाभ्यां व्याक्रियत" इत्यादिसन्दर्भे, आत्मनस्सर्वान्तःप्रवेशेन सर्वनाम-रूपभाक्त्वं चिदचिद्विशिष्टस्यैवात्मत्वं तद्वेदिनःपूर्णत्वं विशेषणविशेष्यमात्र-वेदिनोऽपूर्णत्वं सर्वान्तर्यामिण एव निरतिशयप्रीतिविषयत्वमित्यादिकमुक्त्वा "त्रयं वा इदं नामरूपं कर्म" इत्यादि तृतीयाध्यायान्तिमब्राह्मणे प्रागुक्तान्येव नामरूपकर्माण्यनुक्रम्य "एतत्त्रयं सदेकमयमात्माऽऽत्मो एकस्सन्नेतत्त्रयं तदेतदमृतँ सत्येन च्छन्नं प्राणो वा अमृतं नामरूपे सत्यं ताभ्यामयं प्राणश्छन्नः" इति नामरूपसत्यत्वकथनपूर्वकमात्मनो नामरूपभाक्त्वमुपसंहृतम् ॥

चतुर्थाध्याये च प्रथमब्राह्मणे "य एष विज्ञानमयः पुरुषस्तदैषां प्राणानां विज्ञानेन विज्ञानमादाय यएषोन्तर्हृदय आकाशस्तस्मिञ्छेते तानि यदा गृह्णात्यथहैतत्पुरुषस्स्वपितिनाम तद्गृहीत एव प्राणो भवति गृहीता-वाक् गृहीतं चक्षुः गृहीतँ श्रोत्रं गृहीतं मनः" 'स यथा महाराजो जानपदानि गृहीत्वा स्वे जनपदे यथाकामं परिवर्तते एवमेवैष एतत्प्राणान् गृहीत्वा स्वे शरीरे यथाकामं परिवर्तते' 'हितानामनाड्योद्वासप्ततिसहस्राणि हृदयात्पुरीततमभिप्रतिष्ठन्ते ताभिःप्रत्यवसृप्य पुरीतति शेते स यथा कुमारो वा महाराजो वा महाब्राह्मणोत्राऽतिघ्नीमानन्दस्य गत्वा शयीतैवमेवैष एत-च्छेते" इति प्रत्यगात्मनो बाह्यविषयसङ्गनिबन्धनदुःखविगमपूर्वकस्वात्म-सुखानुभवहेतुभूतं प्रासादभूतासु नाडीषु खट्वावदवस्थिते पुरीतति पर्यङ्कवत्सौ-

षुप्तिकविश्रमस्थानं परमात्मानं प्रस्तुत्य "स यथोर्णनाभिस्तन्तुनोच्चरेद्यथाऽग्नेः क्षुद्राविष्फुलिङ्गा व्युच्चरन्ति एवमेतस्मादात्मनस्सर्वे प्राणास्सर्वे लोकास्सर्वे देवास्सर्वाणि च भूतानि सर्वे एत आत्मानो व्युच्चरन्ति" (मा३।१) इति तस्यैव सकलचेतनाचेतनोपादानकारणत्वम् "तस्योपनिषत्सत्यस्य सत्यं प्राणा वै सत्यं तेषामेष सत्यम्" इत्यनेन चेतनानां कर्मवशाद्धर्मभूतज्ञानद्वारा परिणामित्वेन स्वरूपेणावस्थावत्वेन कार्यत्वेऽपि स्वरूपतो निर्विकारत्वं, परमात्मनस्तु प्रकृतिद्वारा परिणामित्वेन स्वरूपतोऽवस्थावत्त्वेन चोपादानकारणत्वेऽपि जीववत्कर्मकृतज्ञानसङ्कोच विकासात्मक परिणामविरहेण ततोऽपि निर्विकारत्वमित्युक्तम् सर्वलोकादि स्रष्टृत्वं व्यष्टिसृष्टिकर्तुरुत्तर ब्राह्मणे वक्ष्यमाणस्यशिशोरनिरुद्धस्य विवक्षितम्—

अत्र—विज्ञानमयशब्देन जीवं प्रस्तुत्य सुषुप्ताविन्द्रियजन्यज्ञानविरहस्योक्त्या सुषुप्तौ ज्ञानसङ्कोचाविकासात्मकविकारोऽपि नास्तीति जागरवैलक्षण्यं आत्मानोवैसत्यमित्यनभिधाय 'प्राणावैसत्यम्' इत्युक्त्या प्राणशब्दस्य योगादिना इन्द्रिय जन्य प्रसरयोग्यज्ञानवत्परतया विज्ञानविशिष्टस्य नित्यत्व विवक्षया इन्द्रियव्यापाराभावेऽपि विज्ञान नित्यत्वं—प्राणशब्दस्य सवृत्तिकप्राणसहचरित परत्वे प्रबोधे तेषां व्युच्चरणोक्तेरयोगेण विष्फुलिङ्गदृष्टान्तेन च प्राणवृत्तेस्सद्भावेनसुषुप्तावपि व्युच्चरणं न प्राणवृत्तिविशिष्टस्य किं तु विज्ञानप्रसरविशिष्टस्यैवेति च विवक्षितमितिबोध्यम्—

कथं त्वयं शिशुश्शेते लोके नाशमुपागते ।
तपसा चिन्तयंश्चापि तं शिशुं नोपलक्षये ॥

अ.—प.—१९१—९४ ॥

अहं नारायणो नाम शङ्खचक्रगदाधरः ।
अशिशुश्शिशुरूपेण यावद्ब्रह्मा न बुध्यते ॥ १९२—४१६ ॥

इत्युक्तानिरुद्धरूप शिशुपरे शिशुब्राह्मणे "योहवैशिशुꣳ साधानꣳ स प्रत्याधानꣳ सस्थूणꣳ सदामं वेदसप्तहद्विषतो भ्रातृव्यानवरुणाद्धि. अयं वाव

शिशुर्योऽयं मध्यमः प्राणस्तस्येदमेवाधानमिदं प्रत्याधानं प्राणस्स्थूणान्नंदाम ” इत्यत्र “ प्राणस्स्थुणा ” इति व्यूहस्य स्थूणात्वं अनिरुद्धस्य वटपत्रशायिनो हयशिरसाश्शिशुत्वं हृदयशरीरयोराधानप्रत्याधानरूपत्वं, एतद्वेदितुः ज्ञानेन्द्रियमनोबुद्धिजयः फलमिति चाभिधाय “ तमेतास्सप्ताक्षितयः ” इत्यादिना हयशिरसि पूर्वोक्तेन्द्रियदेवतानामवस्थानमुक्त्वा “ इदं तच्छिर एषह्यर्वाग्बिलश्चमस ऊर्ध्वबुध्नः ” इत्यश्वशिरसइतरशिरोवैलक्षण्यं “ वाग्घ्यष्टमी ब्रह्मणासंविता ” इति वागिन्द्रियाधिदेवताया हयास्यशक्तिरूपायाश्श्रियो हयशिरोरूपेण ब्रह्मणा संश्लेषविशेषश्चोक्तः । तदुक्तं “ शरीरभूतभृत् ” इति नाम विवरणावसरे भट्टपराशरपादैः “ शरीरभूतं तत्त्वजातं बिभर्तीति शरीरभूतभृत् “ तच्छिरः ” “ तस्य मूर्धासमभवद्द्यौस्सनक्षत्रदेवता ” इत्यारभ्य “ एतद्धयशिरः कृत्वा नानामूर्तिभिरावृतम् ” इत्यन्तम् ” इत्यादि । अत्र “ तच्छिर ” इति बृहदारण्यकश्रुतिरेव विवक्षिता । हयशिरोनिरूपणेषु सर्वत्र शिरश्शब्दघटितानेव हयशिरोऽश्वशिर आदिशब्दान् प्रयुञ्जानोव्यासोऽपीमामेव श्रुतिमभिप्रैतीति भट्टपराशर पादानामाशयः ।

“ वाग्घ्यष्टमीब्रह्मणासंविता ” इति पूर्वब्राह्मणोक्तस्य ब्रह्मणः तृतीये “ द्वेवावब्रह्मणोरूपे ” “ तस्य हैतस्य पुरुषस्य रूपम् ” इत्यादिना चिदाचिच्छरीरकत्वं वासुदेवस्य पुरुषस्य सर्ववर्णदिव्यमङ्गलविग्रहवत्त्वं चतुर्थे श्रवणमनन विषयस्यात्मनस्स्वाभाविक निरतिशयानन्दत्वादिकं दर्शनसमानाकारध्यानविषयत्वं वेदादि सर्वस्रष्टृत्वादिकञ्चोक्तम् । अध्यायद्वयोक्तार्थेषु संशयपरिहारार्थं पञ्चमं मधुब्राह्मणमारब्धम् । तथा हि प्रथमाध्याये “ सतयावाचा तेनात्मना इदगँ सर्वमसृजत किञ्चर्चोयजूगूँषिसामानि ” इत्यत्रात्मनो व्यष्टिसृष्टिकर्तृत्वम् “ आत्मैवेदमग्र आसीत्पुरुषविधः ” इत्यादौ तस्यैव प्रलयेसत्त्वम् नामरूपभाक्त्वं सर्वान्तरत्वेन निरतिशयप्रियत्वम्, “ ब्रह्मवा इदमग्र आसीत् ” इत्यत्र ब्रह्मणः प्रलयेसत्त्वादिकञ्चोक्तम् । एवञ्च सतया

वाचातेनात्मना " "आत्मैवेदमग्रआसीत्पुरुषविधः" ब्रह्मवा इदमग्र आसीत्" "वाग्घ्यष्टमीब्रह्मणासंवित्ता" "द्वेवावब्रह्मणोरूपे" "तस्य हैतस्य पुरुषस्य रूपम्" "आत्मावा अरे द्रष्टव्यः" इत्यादौ पुरुषात्म ब्रह्म-शब्दाः किमेकां व्यक्तिं बोधयन्ति, उत नानाव्यक्तीरिति संशये तन्निवृत्तये मधुब्राह्मणे त्रयाणामैक्यं निर्धार्य 'स वा अयमात्मा सर्वेषां भूतानमधिपति-स्सर्वेषां भूतानां राजा तद्यथारथनाभौ च रथनेमौ चारास्सर्वेसमर्पिता एव मेवास्मिन्नात्मनि सर्वाणि भूतानि सर्वेदेवास्सर्वे लोकास्सर्वेप्राणास्सर्व एत आत्मानस्समर्पिताः, इति वासुदेवस्य सर्वराजत्वमुपसंहृतम् एतेन वागीशस्य वासुदेवादनिरुद्धाच्चा-भेदास्सिद्धः । 'कीर्तिश्श्रीर्वाक्चनारीणाम्' (भ-गी) 'लक्ष्यावासविद्यावास कीर्त्यावास श्रीवास' (ना-आ) इत्यत्र विद्यावाक्छब्दबोधितानां भगवच्छास्त्रे वासुदेवानिरुद्धहयशिरश्शक्तितया प्रसिद्धानां तिसृणां सङ्ग्रहार्थमेव बृहदा-रण्यके पूर्वं लक्ष्म्यादि शब्दाननादृत्य लक्ष्मीतन्त्राद्युक्तदिशा विद्याशब्दसमा-नार्थक वाक्छब्दप्रयोगस्तत्रतत्रेति ॥ एवं तत्रैव "इदंवैतन्मधुदध्यङ्ङाथर्व-णोऽश्विभ्यामुवाच" इत्यादिना, "देवावैतत्सत्रं निषेदुः" इत्यादिना प्रवर्ग्यविचारे प्रवर्ग्यतत्वोपदेष्टृत्वेनोक्तस्याथर्वणस्य दधीचः नारायणकवचा त्मक त्वाष्ट्रकक्ष्योपदेष्टृत्वकथन पूर्वकं वासुदेवस्य "यातेधामानि परमाणि, इत्याद्युक्त सर्वविधरूपवत्त्वस्य तेन सर्वानुभाव्यत्वस्य च "इन्द्रोमायाभिःपुरु-रूप ईयते" युक्ताह्यस्य हरयश्शतादश," इत्यादिना 'अयमात्मा ब्रह्म-सर्वानुभूरित्यनुशासनम्' इत्यन्तेनोक्तेः, "विष्णोश्शिरः प्रचिच्छिदतुः" इत्या पातप्रतीतिनिबन्धनमूर्खभ्रमोऽप्यपास्त इति ॥ इदमेवमधुब्राह्मणमभिप्रेत्य, नारा-यणाख्यानादौतत्रतत्रवासुदेवानिरुद्धहयशिरसामैक्याभिधानम् हरिशब्दप्रयोगश्च एवं "वागीशमक्षरं ध्यायन्वासुदेवाख्यम्" इति विष्णुधर्मवचनमपि ॥ तदे तत्सर्वमभिप्रेत्योक्तमाचार्यपादैः, "वागीशाख्यावासुदेवस्य मूर्तिः" इति अत्र हयग्रीवमन्त्रानुमन्त्राद्यभिप्रायकं 'अङ्केनोद्वह्यवाग्देवीमाचार्यकमुपाश्रितः' इति वचनमनुसृत्य वाग्देव्या ईशः विवक्षितः इत्यलम् ॥

सुनासिकेति, समानकेनेति क्वचित्पाठः शोभनं मानं परिमाणं यस्य तेनेत्यर्थः, सुनासिकेनेति पाठे तु "मध्ये तु खलु निर्मांसा-घोणा भवति पूजिता। घोणातटे प्रशस्येते अनुपूर्वायते शुभे" (वी.–मि.–ल.–प्र.–४५९) इत्युक्तलक्षणलक्षितनासिकायुक्तेनेत्यर्थः, चन्द्रप्रभो भूत्वा हयशिरः कृत्वा द्वितीयां तनुमास्थित इति योजना चन्द्रप्रभ इत्यनेन "श्वेतो रक्तस्तथा पीतस्सारङ्गःपिङ्ग एव च। नील ः कृष्णोऽथ सर्वेषां श्वेतश्श्रेष्ठतमो मतः" (वी.–मि.–उ.–ल.–प्र.–४४०) इत्युक्तसर्वश्रेष्ठश्वेतवर्णत्वमुक्तम्, एवमाग्नेयपुराणे २८९ अध्यायेऽश्वलक्षणकथनावसरे "शुकेन्द्रगोपचन्द्राभा ये च वायस-सन्निभाः। सुवर्णवर्णास्निग्धाश्च प्रशस्यास्तु सदैव हि" इत्युक्तमपि लक्षणं सूचितम्। "स विबुद्धस्तदा देवःकृत्वा हयशिरो महत् (धरम्)। शशाङ्कशतसङ्काशं नानाभरणशोभितम्"॥ इति विष्णु-धर्मोत्तरेऽप्ययमर्थ उक्तः। तत्र नानाभरणभूषितत्वकथनेन शुक्लवर्ण स्यापि हयशिरसः "सत्रे ममास भगवान् हयशीर्ष एव साक्षात्सयज्ञ-पुरुषस्तपनीयवर्णः" इति श्रीभागवतोक्तं तपनीयवर्णत्वमपि युक्त-मिति सिद्धम्। वेदानामालयमिति क्वचित्पाठः अस्य च हयशिर इत्यत्रान्वयः। अत्र मूलन्तु "चतुष्कपर्दा, युवातिस्सुपेशाः" "चतुश्शि खण्डायुवतिस्सुपेशाः" इत्यादि श्रुतिरिति घर्मसूक्तविवरणे निरूपित-मस्माभिः। आलय इत्येवबहुषु कोशेषु दृश्यते। "आथर्वणस्तुयो योगश्शीर्षं यज्ञस्य" इत्युदाहृत (२८४) हरिवंशवचनैकार्थ्यमस्मिन् पक्षे बोध्यम्।

अत्र मधुकैटभाभ्यां विग्रहधारिणां वेदानामपहारसमयेऽ-वतीर्णस्य हयशिरसो वेदालयत्वकथनेन भगवतो हयशिरसो वेदैर्नित्य एव सम्बन्धः परन्तु चतुर्मुखस्य कर्मवशत्व ख्यापनाय मधुकैटभाभ्यां

वेदविग्रहापहारणं भगवता तदा हरणं चतुर्मुखाय तद्दानञ्च कृतमिति बोधितम् ॥

तस्य मूर्धासमभवद्द्यौस्सनक्षत्रतारका ।
केशाश्चास्या भवन्दीर्घारवेरंशुसमप्रभाः ॥ ४९ ॥
कर्णावाकाशपातालेल्ललाटं भूतधारिणी ।
गङ्गासरस्वती पुण्येभ्रुवावास्तां महाद्युती ॥
चक्षुषीचन्द्रसूर्यौ ते [तु] नासासन्ध्यापुनस्स्मृता ।
ओङ्कारस्त्वथ संस्कारो विद्युज्जिह्वा च निर्मिता ॥५०॥
दन्ताश्च पितरो राजन् सोमपा इति विश्रुताः ।
गोलोको ब्रह्मलोकश्च ओष्ठावास्तां महात्मनः ॥
ग्रीवा चास्याभवद्राजन् कालरात्रिर्गुणोत्तरा ।
एतद्धयशिरःकृत्वा नानामूर्तिभिरावृतम् ॥ ५२ ॥
अन्तर्दधौ स विश्वेशो विवेश च रसां प्रभुः ।
रसां पुनःप्रविष्टश्च योगं परममास्थितः ॥ ५३ ॥
शैक्षं (क्ष्यं) स्वरं समास्थाय उद्गीथं प्रासृजत्स्वरम् ।
सस्वरस्सानुनादी च सर्वशास्स्निग्ध एव च ॥ ५४ ॥
बभूवान्तर्जलगतस्सर्वभूतगुणोदितः ।
ततस्तावसुरौ कृत्वा वेदान् समयबन्धनान् ॥ ५५ ॥
रसातले विनिक्षिप्य यतश्शब्दस्ततो द्रुतौ ।
एतस्मिन्नन्तरे राजन् देवो हयशिरोधरः ॥ ५६ ॥

जग्राह वेदानखिलान् रसातलगतान्हरिः ।
प्रादाच्च ब्रह्मणे भूयस्ततस्स्वां प्रकृतिङ्गतः ॥
स्थापयित्वा हयशिर [रा] उदक्पूर्वे महोदधौ ।
वेदानामालयश्चापि बभूवाश्वशिरास्ततः ॥ ५८ ॥

अथ किञ्चिदपश्यन्तौ दानवौ मधुकैटभौ ।
पुनराजग्मतुस्तत्र वेगितौ पश्यतान्तु तौ ॥ ५९ ॥

यत्र वेदा विनिक्षिप्तास्तत्स्थानं शून्यमेव च ।
तत उत्तममास्थाय वेगं बलवतां वरौ ॥ ६० ॥

पुनरुत्तस्थतुश्शीघ्रं रसानामालयात्तदा ।
ददृशाते च पुरुषं तमेवादिकरं प्रभुम् ॥ ६१ ॥

श्वेतं चन्द्रविशुद्धाभमनिरुद्धतनौ स्थितम् ।
भूयोऽप्यमितविक्रान्तं निद्रायोगमुपागतम् ॥ ६२ ॥

आत्मप्रमाणरचिते अपामुपरि कल्पिते ।
शयने नागभोगाढ्ये ज्वालामालासमावृते ॥ ६३ ॥

निष्कल्मषेण सत्त्वेन सम्पन्नं रुचिरप्रभम् ।
तन्दृष्ट्वा दानवेन्द्रौ तौ महाहासममुञ्चताम् ॥
ऊचतुश्च समाविष्टौ रजसा तमसा च तौ ।
अयं स पुरुषश्श्वेतश्शेते निद्रामुपागतः ॥ ६५ ॥

अनेन नूनं वेदानां कृतमाहरणं रसात् ।
कस्यैष को नु खल्वेष किञ्चस्वपिति भोगवान् ॥ ६६ ॥

इत्युच्चारितवाक्यौ तु बोधयामासतुर्हरिम् ।
युद्धार्थिनौ तु विज्ञाय विबुद्धः पुरुषोत्तमः ॥ ६७ ॥

निरीक्ष्य चासुरेन्द्रौ तौ ततो युद्धे मनो दधे ।
अथ युद्धं समभवत्तयोर्नारायणस्य वै ॥ ६८ ॥

रजस्तमोविष्टतनू तावुभौ मधुकैटभौ ।
ब्रह्मणोऽपचितिं कुर्वञ्जघान मधुसूधनः ॥ ६९ ॥

ततस्तयोर्वधेनाशु वेदापहरणेन च ।
शोकापनयनश्चक्रे ब्रह्मणः पुरुषोत्तमः ॥

ततः परिवृतो ब्रह्मा हरिणावेदसत्कृतः ॥
निर्ममे स तदा लोकान् कृत्स्नान् स्थावरजङ्गमान्
॥ ७१ ॥

दत्वा पितामहायाग्र्यां मतिं लोकविसर्गिकीम् ।
तत्रैवान्तर्दधे देवो यत एवागतो हरिः ॥ ७२ ॥

तौ दानवौ हरिर्हत्वा कृत्वा हयशिरस्तनुम् ।
पुन प्रवृत्तिधर्मार्थं तामेव विदधे तनुम् ॥ ७३ ॥

एवमेष महाभागो बभूवाश्वशिरा हरिः ।
पौराणमेतत्प्रख्यातं रूपं वरदमैश्वरम् ॥ ७४ ॥

यो ह्येतद्ब्रा (ब्र) ह्मणो नित्यं श्रुणुयाद्धारयीतवा ।
न तस्याध्ययनं नाशमुपगच्छेत्कदाचन ॥ ७५ ॥

**आराध्यतपसोग्रेण देवं हयशिरोधरम् ।**
**पाञ्चालेन क्रमःप्राप्तो रामेण पथिदेशिते ॥ ७६ ॥**

**एतद्धयशिरो राजन्नाख्यानं तव कीर्तितम् ।**
**पुराणं वेदसमितं यन्मां त्वं परिपृच्छसि ॥ ७७ ॥**

**यां यामिच्छत्तनुं देवः कर्तुं कार्यविधौ क्वचित् ।**
**तां तां कुर्याद्विकुर्वाणस्स्वयमात्मानमात्मना ॥ ७८ ॥**

"अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ" इतिश्रुतौ "रूपोपन्यासाच्च" इति सूत्रोक्तं स्मारयन् हयशिरसो रूपं विशदयति **तस्य मूर्धेत्यादिना,** ४८ **सनक्षत्र-तारकेति** नक्षत्रतारकयोस्सामान्यविशेषभावादिना न पौनरुक्त्यम् । सनक्षत्र-देवता इति पाठो भगवद्गुणदर्पणे केषु चिन्महाभारतकोशेषु च दृश्यते अत्र मूर्धादीनां द्युप्रभृतिसादृश्ये तात्पर्यम् । इदञ्च केशानां रव्यंशुसमप्रभत्वो-क्तेरवसीयते, यद्वा "सर्वदेवमयं वपुरिति" (२८५) हारिवंशोक्तेः, "चक्षुषी सोमसूर्यौ" "दन्ताश्च पितरः" इत्येतदविरिक्तस्थलेष्वभिमानिदेवतापरत्वं ग्राह्यम् ।

**नानामूर्तिभिः** (५२) नानाशरीरैः, सर्वस्य जगतो ब्रह्मशरीरत्वमन्त-र्यामि ब्राह्मणसुबालोपनिषदादौ प्रसिद्धम् । **योगम्** (५३) वेदापहरणापायम्, (५४) **शैक्षं** (५३) शिक्षासम्बन्धि, कचिच्छैक्ष्यमिति, पाठः "ओमित्येत-दक्षरमुद्गीथमुपासीत" इति छान्दोग्यश्रुत्या उद्गीथमित्यस्य ओङ्कारमित्यर्थः उद्गीथमिति स्थाने ओमितीत्यपि पाठः, **सानुनादी** "बहूनां हेषमाणानां श्रूयते यस्य हेषितम् । सानुनादो हयो नाम भर्तुस्सर्वार्थसाधकः" (वी-मि-उ-ल-प्र-४४९) इत्युक्तलक्षणयुक्तः, **सर्वभूतगुणोदितः** (५५) सर्वभूतानि गुणा यस्य स उदितः—सर्वभूतनीरन्ध्रसम्बन्धेन गुणवत्तै विशिष्ट आविर्भूतः,

सर्वभूतगुणोहित इत्यपि पाठो दृश्यते, **समयबन्धनान्** समये हयशिरस आगमनकाले बन्धनं येषां तान्, तत उदक्पूर्वे महोदधौ हयशिरस्थापयित्वा स्वां प्रकृतिं गत इति योजना, (५७) स्वां प्रकृतिं आनिरुद्धीं मूर्तिम्, अश्वशिरा इति उदक्पूर्वे महोदधौ स्थापित इति शेषः, **श्वेतम्**, (६२) श्वेतो रश्मिः, "श्वेतगँ् रश्मिम्" इति स्वर्णघर्मानुवाकप्रसिद्धम्, एतेन श्वेताश्वतर इति ऋषेर्नाम योगरूढम्, इत्यपि व्यञ्जितम्, **आत्मप्रमाणरचिते** (६३) आत्मा शरीरं आत्मप्रमाणानुरूपं रचिते, **नागभोगाढ्ये** नागस्य आदिशेषस्य, भोगेन फणया शरीरेण वा, आढ्ये, **निष्कल्मषेण** (६४) रजस्तमश्शून्येन, एतेन अनिरुद्धमूर्तेरप्राकृतत्वं सिद्धम्, कृष्णाविग्रहस्याप्राकृतत्वं "न तस्य प्राकृता मूर्तिर्मांसमेदोऽस्थिसम्भवा" इति पूर्वमेवोक्तम्। **कस्यैष इति** (६६) किं सम्बन्धि किं परतन्त्र इति यावत्, **कोनु खलु** स्वतन्त्रः कस्स्यादित्यादिरर्थः, **ब्रह्मणोऽपचितिमिति** (६९) चतुर्मुखस्य वेदस्य वा पूजाम्, **परिवृतः** (७१) वेदसत्कृतस्तैःपरिवृतः, यद्वा "आदिकर्मणि क्तः कर्तरि च" इति क्तः आद्यशरणवरणकर्ता, अथवा हरिणा परिवृतः "यमेवैष वृणुते" इति श्रुत्युक्तरीत्या स्वीकृतभरसम्बन्धीति यावत्; **तावित्यादि** (७३) हरिः हयशिरस्तनुं कृत्वा तौ दानवौ हत्वा प्रवृत्तिधर्मार्थं तामेव तनुं पुनर्विदधे इति योजना, हयशिरसो मधुकैटभहन्तृत्वं पूर्वोदाहृतहरिवंश वचनेषु स्पष्टम्। विष्णुधर्मोत्तराद्युक्तं विष्णुजिष्णुरूपद्वयधारणपूर्वकं मधुकैटभहननन्तु कल्पभेदान्नेयम्। "स्थापयित्वा हयशिर उदक्पूर्वे महोदधौ" (५८) इत्यत्रोक्त एवार्थःपुनःप्रवृत्ति धर्मार्थमित्यनेनोक्तः इत्थञ्च "अहं हयशिराभूत्वा" "सत्रे ममासभगवान् हयशीर्ष एवे" त्युदाहृतवचनैकार्थ्यमपि, **पुनःप्रवृत्ति** मिति क्वचित्पाठः अस्मिन्पाठे अस्य तनुमित्यन्वयः, क्वचिदर्धश्लोक एव नदृश्यते, **महाभागः** (७४) अनिरुद्धस्य महानंशः, शिरोमात्र एव वैलक्षण्यात्। एतेन "शतँग्शता अस्य युक्ताहरीणाम्" "युक्ता अस्य हरयश्शतादश" इत्युक्तानां सर्वेषा

मप्यंशत्वं सूचितम् । **पौराणमिति,** पौराणमेत दाख्यानमिति क्वचित्पाठः **प्रख्यातम्,** उदाहृतश्रुत्यादिप्रसिद्धम् । "ईश्वरो हि जगत्स्रष्टा" "भूतान्तरात्मा वरदः" "ऐश्वरेण स योगेन" इत्युपक्रमद्वये "सर्वेषामाश्रयो विष्णुरैश्वरं विधिमास्थितः । सर्वभूतकृतावासो वासुदेवेति चोच्यते" "रूपं वरदमैश्वरम्" इत्युपसंहारद्वये च पूर्वोक्तं महाभागत्वं दृढीकृतम् । एतेन हयशिरसः कर्मपरवशत्वशङ्काऽपाकृता । **यो हीत्यादि** (७५) ब्रह्मणः हयशिरसः, एतत् उपाख्यानं रूपं वा, यद्वा ब्रह्मणः विप्रात् ब्राह्मण इत्यपि क्वचित्पाठः, "श्रुणुयाद्धारयीतवे" ति श्रवणनिदिध्यासनोक्तेर्मननमप्यर्थतस्सिद्धम् । श्रावयीतवेत्यपि क्वचित्पाठः। **न तस्याध्ययनमित्यादि** आथर्वणसंहितोपक्रमे मेधाजननकर्माणि विनियुक्तवाचस्पति शब्दघटित त्रिषप्तीयसूक्तान्ते "उपहूतो वाचस्पतिरुपास्मान् वाचस्पतिर्ह्वयताम् संश्रुतेन गमेमहि माश्रुतेन विराधिषि" इति मन्त्रे अस्मत्सन्निहितस्य वाग्देवीपतेः हयशिरसोऽनुग्रहेण अधीतवेदशास्त्रार्थस्य सम्यक्प्राप्तेः कदाचिदप्यवियोगस्य च प्रतिपादनादिति भावः ।

**आराध्येत्यादि,** (७६) आराधनमाहत्म्यञ्च "यत्तद्धयशिरः पार्थ" "रामादेशितमार्गेण" ॥ ३५३ । ३६ । ३७॥ इत्यादिना विस्तरेण पूर्वमुक्तम् । **एतद्धयशिर** इत्यादि (७७) "नारायणाभ्यामुपस्थानम्" इत्यापस्तम्बसूत्रे नारायणप्रतिपादकपुरुषसूक्तस्य नारायणशब्देन निर्देशवत् रुद्रप्रतिपादकवेदभागस्य रुद्रत्वेन व्यवहारवच्च हयशिरःप्रतिपादकाख्यानस्य हयशिरोनाम्ना निर्देश इति बोध्यम् । **पुराणं वेदसमितमिति** वेदसमितम् वेदसम्मितमित्यर्थः, "कथयिष्यामि ते सर्वं पुराणं वेद सम्मितमि" त्युपक्रमोक्तेः । उपक्रमोहसंहाराभ्यामन्यविघोपाख्यानस्य (दे. भा. १—५) कल्पितत्वं सिद्धम्; तत्रापि नवमैकार्थ्येन तदुपाख्यानस्य अर्थवादत्वस्यावश्यकत्वाच्च हयशिरसोऽकर्मवश्यत्वदार्ढ्याय भगवद्दिव्यविग्रहसामान्यस्य स्वसङ्कल्पमूलकत्वमाह **यां यामित्यादिना** (७८) आत्मना सङ्कल्पेन, आत्मानं दिव्यमङ्गल-

विग्रहम्, विकुर्वाणस्तां तां तनुं कुर्यात् इति योजना, एतेन भगवद्दिव्य-विग्रहसामान्यस्याकर्मवश्यत्वं सिद्धम्—

**एष वेदनिधिश्श्रीमानेष वै तपसां निधिः ।**
**एष योगश्च साङ्ख्यश्च ब्रह्म चाग्र्यं हरि (हवि) र्विभुः ॥**

"विद्यासहायवान्" इत्याद्युपक्रमाभिहितमर्थं हयशिरस्यऽपि दर्शयति एष वेदनिधिश्श्रीमानित्यनेन वेदनिधिः वेदानामालय इत्युक्तो हयशिराः, श्रीमानिति नित्ययोगे मतुप् श्रिया नित्यसंश्लिष्ट इत्यर्थः, एतेन विद्यासहाय-शब्दार्थ उक्तः "एवं यदा जगत्स्वामी देवदेवो जनार्दनः । अवतारं करोत्येषा-तदाश्रीस्तत्सहायिनी । (वि–पु–१–९–१४२) पुनश्च पद्मासम्भूताद्यादित्यो-भूद्यदाहरिः" । इत्यारभ्य अन्येषुचावतारेषुविष्णोश्श्रीरनपायिनी ॥ १४४ ॥ इत्युक्तेः अत्र पद्मा 'विद्यासहायवन्तं मामादित्यस्थम्' (ना–आ) इत्युक्ता विद्यैव 'हृषीकेशस्सभगवान् पद्मया सह विद्यया । इति लक्ष्मीतन्त्रोक्तेः हरि-वंशे उदाहृतवचनेषु वाक्शब्दोऽपि प्रयुक्तः (२४२ पु) उदाहृत (ल-तं) वचने विद्यावाक् एकैवेतिस्फुटम् एवं च वाक्शब्दघटित (बृ) श्रुतयः नित्ययोगं द्रढ-यन्ति-इत्याभिप्रेत्यपराशरेण 'आदित्योभूद्यदाहरिः' इत्यत्र हरिशब्देन अस्मि-न्नर्थे हरिशब्दघाटिता (बृ) श्रुतिः मूलमिति बोधितम् एतेन याज्ञवल्क्यमनुग्रहीत्री व्याससम्मता वाग्देवी पूर्वोक्तैव नचतुर्मुखपत्नीति पराशरस्यापि सम्मतमितिसि-द्धम् तपश्चात्र "यस्य ज्ञानमयं तपः" इति श्रुत्यादिप्रसिद्ध जगदालोचनरूपं ज्ञानम्, योगसाङ्ख्यशब्दौ योगसूत्रोक्तसमाधिसाङ्ख्योक्तज्ञानविषयपरौ, अग्र्यम् "सदेवसौम्येदमग्र आसीत्" "आत्मा वा इदमेकएवाग्र आसीत्" "ब्रह्मवा इदमग्र आसीत्" इत्यादिष्वग्र्यत्वं प्रसिद्धम् । अग्र्यं उत्कृष्टं ब्रह्मेति वा, एष इत्यस्यानुषङ्गः, हविः होतव्यम्, "ब्रह्मार्पणं ब्रह्महविः" इत्यादिरेत-द्विस्तरः हरिरिति केषुचित्पाठो दृश्यते उदाहृतबृहदारण्यकानुरोधात् अस्मिन्ने-

वाध्याये उपक्रमस्थहरिशब्दानुरोधाच्चायमेव पाठो युक्तः, एतच्छ्लोकमभिप्रत्योक्तमाचार्यपादैः—(श-दू)

संप्रज्ञातस्थितिमधिगते निर्विकल्पे समाधौ
शान्तावद्यं स्तिमितबहुळानन्दसन्दोहमन्तः ।
यत्तद्ब्रह्मस्फुरति यमिनां पूर्णषाड्गुण्यरूपं
स मे नित्यं हृदि हयमुखी देवता सन्निधत्ताम् ॥ इति ।

एतावता "विद्या सहायवान्देव" इत्यादिनोपक्रान्तोऽर्थ उपसंहृतः ॥

नारायणपरा वेदा यज्ञा नारायणात्मकाः ।
तपो नारायणपरं नारायणपरा गतिः ॥ ८० ॥
नारायणपरं सत्यमृतं नारायणात्मकम् ।
नारायणपरो धर्मः पुनरावृत्तिदुर्लभः ॥ ८१ ॥
प्रवृत्तिलक्षणश्चैव धर्मो नारायणात्मकः ।
नारायणात्मको गन्धो भूमेश्श्रेष्ठतमस्स्मृतः ॥ ८२ ॥
अपाश्चापि गुणा राजन् रसा नारायणात्मकाः ।
ज्योतिषाश्च परं रूपं स्मृतं नारायणात्मकम् ॥ ८३ ॥
नारायणात्मकश्चापि स्पर्शो वायुगुणस्स्मृतः ।
नारायणात्मकश्चैव शब्द आकाशसम्भवः ॥ ८४ ॥
मनश्चापि ततो भूतमव्यक्तगुणलक्षणम् ।
नारायणपरःकालो ज्योतिषामयनश्च य(त)त् ॥ ८५ ॥
नारायणपरा कीर्तिःश्रीश्च लक्ष्मीश्च देवताः ।
नारायणपरं साङ्ख्यं योगो नारायणात्मकः ॥ ८६ ॥

**कारणं पुरुषो ह्येषां प्रधानञ्चापि कारणम् ।**
**'स्वभावश्चैव कर्माणि' दैवं येषाञ्च कारणम् ॥ ८७ ॥**
**अधिष्ठानं तथा कर्ता करणञ्च पृथग्विधम् ।**
**विविधा च तथा चेष्टा दैवञ्चैवात्र पञ्चमम् ॥ ८८ ॥**
**पञ्चकारणसंख्यातो (ता) निष्ठा सर्वत्र वै हरि (रे): ।**

अथ "ईश्वरो हि जगत्स्रष्टा" इत्यादिना उपक्रमे परतत्त्वस्वरूपं प्रदर्श्य हयशिरसस्तदवताररूपत्वेन परत्वप्रतिपादनमनुचितम् वेदेषु पुराणेषु च केषांचिदन्यदेवताया अपि परत्वप्रतीतिसत्त्वात् किञ्च सजातीयविजातीय-स्वगतभेदशून्यस्यैव परतत्त्वरूपतायाश्श्रुतिभिर्निर्णयादिति शङ्कायाम् "यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनस्सह प्राणैश्च सर्वैः । तमेवैकं जानथाऽऽत्मानम्" "सर्वभूतस्थमेकं नारायणम्" "नैवेह किञ्चनाग्र आसीदमूल-मनाधारमिमाः प्रजाजायन्ते दिव्यो देव एको नारायणः" "एष सर्वभूतान्त-रात्माऽपहतपाप्मा दिव्यो देव एको नारायणः" इत्यादिश्रुत्युक्तदिशा चिद-चितोर्भगवत्प्रकारतया तद्विशिष्टः प्रकार्येकं तत्त्वं मुमुक्षाभिर्वेद्यं प्राप्यञ्चेति उपसंहारे समाधास्यन्, मध्ये "ब्राह्मीं वाव त उपनिषदमब्रूमेति तस्यै तपो दमः कर्मेति प्रतिष्ठा वेदास्सर्वाङ्गानि सत्यमायतनम्" इति तलवकारादिश्रुतौ नारायण एव ब्रह्मेति सूचयन् तदुक्तानां ब्रह्मज्ञानौपयिकतपआदीनां नारायण-सम्बन्धित्वमाह **'नारायणपरा वेदा'** इत्यादिना अत्र तप आदिषु वेदानां प्राधान्यात्प्रथममुक्तिः वेदानां नारायणपरत्वं प्राधान्येनोपायप्राप्यभूत नारायण-तात्पर्यकत्वं तच्च "सर्वे वेदा यत्पदमामनन्ति" "सोऽध्वनः पारमाप्नोति तद्विष्णोः परमम्पदम्" इति कठवल्लीसन्दर्भे व्यक्तम्, एवं "अन्तः प्रविष्ट-श्शास्ता जनानाम्, एकस्सन् बहुधा विचारः "सर्वे वेदा यत्रैकं भवन्ति" इति श्रीभागवते (११-२७) वासुदेवार्चने विनियुक्ते स्वर्णघर्मानुवाकेऽपि ।

गीतायामपि "वेदैश्च सर्वैरहमेव वेद्यः" इत्युक्तम् । एतेन 'वेदैरनेकैरहमेव वेद्यः' (कै—उ) इति श्रुतिरपि 'परात्परं पुरुषं याति विद्वान्' इत्युपक्रमोक्त-परपुरुषभूतनारायणपरैवेति निर्णयेन नारायणस्यावरत्वभ्रमः केषांचिद्व्युदस्तः एवमेतेन देवीभागवतस्यापि नवमस्कन्धोक्तदिशा नारायणाभिन्नकृष्णस्यैव शक्तिविशिष्टस्य परमत्वे परमतात्पर्यं तच्छक्तौ त्ववान्तरतात्पर्यमेवेति निर्धारितम् । वेदपूर्वभागस्यापि नारायणपरत्वं दर्शयति **'यज्ञा नारायणात्मकाः'** इति वेदपूर्वभागोक्ता यज्ञाः नारायण आत्मा स्वाराधनतया आदाता येषान्ते तथोक्ताः "यच्चाप्नोति यदादत्ते" इत्यात्मशब्दनिर्वचनात् । श्रूयते हि "इष्टापूर्तं बहुधा जातं जायमानं विश्वं बिभर्ति भुवनस्य नाभिः" "चतुर्होतारो यत्र सम्पदं गच्छन्ति देवैः" इत्यादि, एतेन 'ये च वेदविदः—सनातनम्' इति प्राक् (९) उदाहृतवचनैकरस्येन मीमांसाया ऐकशास्त्र्यं व्यञ्जितम् । **तपः** कृच्छ्रचान्द्रायणादिकम्' तप आदिषु नारायणपरत्वं नारायणाराधनरूपत्वम् **गतिः** करणे क्तिन् भक्तिप्रपत्त्युपाय इत्यर्थः तथाच श्रुतिः "तमेव विदित्वा (श्वे—३—८) 'तमेवं विद्वान् (पु-सू) इत्यादि; श्रुतौ तच्छब्दार्थो महापुरुषो नारायण इति (९९ पु) (१०५) पूर्वं निरूपितम् **सत्यमृतमिति** (८१) "ऋतन्तु सूनृता वाणी सत्यन्तु समदर्शनम्" इति प्रमाणप्रतिपन्ने सत्यर्तेऽत्र ग्राह्ये, यद्वा सत्यं तथ्यम्, ऋतम् उञ्छशिलम्, नारायणात्मकामिति पूर्ववदर्थः, **पुनरावृत्तिदुर्लभः** यस्मिन्ननुष्ठिते पुनरावृत्तिः संसारगतिः दुर्लभा तादृशः निवृत्तिधर्मशब्देन व्यपदेश्यः, "वाहिताग्न्यादिषु" इति दुर्लभशब्दस्य परनिपातः, **प्रवृत्तिलक्षणः** (८२) प्रवृत्तिः संसारसम्बन्धः लक्षणं फलतया ज्ञापको यस्य सः, यज्ञानामेतच्छ्लोकोक्तधर्मद्वयान्तर्भावेऽपि पृथगुक्तिः (तै) नारायणीये "प्राजापत्योहारुणिः" इत्याद्यनुवाके सत्यतपोदमशमदानधर्मप्रजननाग्निहोत्रयज्ञमानससन्यासानां द्वादशानां मध्ये धर्मापेक्षया पृथग्यज्ञनिर्देशात्तदनुरुध्येति बोध्यम्, तेन श्रुत्युक्तानां द्वादशानां नारायणपरत्वं व्यञ्जितम् ।

एतेन " ब्राह्मीं वावतउपानिषदमब्रूमेति तस्यै तपो दमःकर्मेति प्रतिष्ठा-वेदास्सर्वाङ्गानि सत्यमायतनम् " इति तलवकारिणां श्रुतौ ब्राह्मीमित्यत्र प्रकृति-भूतो ब्रह्मशब्दो नारायणे योगरूढ इति बोधितम्, तदुक्तं गारुडे पुराणे—

" वेदे भूरिप्रयोगाच्च गुणयोगाच्च शार्ङ्गिणि ।
तस्मिन्नेव ब्रह्मशब्दो मुख्यवृत्तो महामुने ॥ "

इत्यारभ्य—

" यस्मिन् प्रयुज्यमाने तु गुणयोगस्सुपुष्कलः ।
तत्रैव मुख्यवृत्तोऽयमन्यत्र ह्युपचारतः ॥

इति 'तद्ब्रह्म स आत्मा अङ्गान्यन्या देवताः' (ना. १) इत्यत्र ब्रह्म नारायण एवेति 'नारायणस्य चाङ्गानि सर्वदैवानि भारत' (स. प. ४३) इत्यत्रोक्त-मिति प्रागेव (७) निरूपितम् । सुबालोपानिषदि " नैवेह किञ्चनाग्र आसीद-मूलमनाधारमिमाःप्रजा जायन्ते दिव्यो देव एको नारायणः " इति षष्ठ-खण्डादिभागस्य प्रथमद्वितीयखण्डोक्तसृष्टिप्रलयसङ्ग्रहतया प्रथममेव " भूत-प्रलयमत्यन्तम् " इत्यादिना प्रलयसृष्टिकथनेन तदर्थ उक्तः अधुना " भूता-न्तरात्मा " इत्युपक्रमोक्तमर्थं विशदयितुं सुबालोपानिषदि तदनन्तरं " चक्षुश्च द्रष्टव्यञ्च नारायणश्श्रोत्रञ्च श्रोतव्यञ्च नारायणः प्राणञ्च घ्रातव्यञ्च नारायणः जिह्वा च रसयितव्यञ्च नारायणः त्वक्चस्पर्शयितव्यञ्च नारायणः मनश्च मन्तव्यञ्च नारायणः" इत्यादिश्रुत्यर्थमाह 'नारायणात्मको गन्ध' इत्यादिना, नारायण आत्मा यस्य सः नारायणात्मकः " अथैषो एवाकार आप्ततमार्थ आत्मन्येव नृसिंहे ब्रह्मणि वर्तते " इत्युत्तरतापनीयपञ्चमखण्डे, " यच्चाप्नोति यदादत्ते " इति स्मृतौ चोक्तदिशा आप्नोतीत्यात्मा, यद्वा आत्मन् शब्दः " अतसातत्यगमने " इत्यस्मात् " सातिभ्यां मनिन्मनिणौ " इत्यौणादिक-प्रत्ययान्तः, आत्मा अपृथक्सिद्धचनुयोगीति यावत् , नारायणात्मक इत्यस्य नारायणापृथक्सिद्ध इत्यर्थः, अत्रात्मन्शब्दप्रयोगेण " यस्मिन् द्यौःपृथिवी चान्तरिक्षमोतम्मनस्सहप्राणैश्च सर्वैः । तमेवैकं जानथाऽऽत्मानम् " इति

श्रुतिप्रत्यभिज्ञापनमुखेन नारायणस्साक्षाद्वा परम्परयावा सर्वस्याधारोधारक इत्यर्थस्सिध्यतीति 'तमेवैकम्' इत्यत्रावधारणेन—पृथिव्येव ज्ञेया इत्यादौ गन्धादेरिव जगतो ज्ञेयत्वं न व्यवच्छिद्यत इति सूचितम् ॥

**गन्धः** अयं गुण एव विवक्षितः न तु तन्मात्रा, भूमेरिति षष्ठ्या तत्र पृथिवीभेदप्रतीतेः, " अपां गुणाः " इत्युत्तरत्र वचनाच्च, पृथिव्यपृथक्सिद्धतया प्रतीयमानोऽपि गन्धः भूमिःनारायणापृथक्सिद्धेति तद्वारा नारायणापृथक्सिद्ध इति भूमेरित्यस्य भावः, **श्रेष्ठतमः** पृथिव्यसाधारणः, यद्वा स्वाश्रयस्या· प्रत्यक्षत्वेऽपि स्वयं प्रत्यक्षविषयः, एतेन नारायणस्याप्रत्यक्षत्वेऽपि तदपृथ-क्सिद्धस्य जगतःप्रत्यक्षत्वे न किञ्चिद्बाधकमिति पृथिवीगन्धादीनामिव जगद्ब्रह्मणोरपृथक्सिद्धिसम्बन्धे नानुपपत्तिरिति सूचितम् , एतदर्थमेव सृष्टि-क्रममनादृत्य लयक्रमानुसारेण गन्धस्य प्रथमत उपादानम् ॥

**शब्द आकाशसम्भव** इति (८४)एतेन भाट्टानां गन्धतुल्यस्य शब्दस्य विभुत्वद्रव्यत्ववादःप्रतिक्षिप्तः । **मनश्चापीति** (८५) मनोऽपि नारायणा-त्मकमित्यर्थः, च शब्दो बाह्येन्द्रियसमुच्चयार्थः, अपिर्भिन्नक्रमः अन्ते योजनया-चेतनसमुच्चायकः सुबालोपनिषदि " मनश्च मन्तव्यञ्च नारायणः " इत्यनन्तरं " बुद्धिश्च बोद्धव्यञ्च नारायणोऽहङ्कारोऽहङ्कर्तव्यञ्च नारायण-श्चित्तञ्च चेतयितव्यञ्च नारायणः " इत्यत्र मनसो वृत्तिभेदनिबन्धन एव बुद्ध्यहङ्कारचित्तसंज्ञाभेदव्यपदेशः " कामस्सङ्कल्पः " इत्यारभ्य " एतत्सर्वं मन एव " इति बृहदारण्यकश्रुतौ मनसःकामादिवृत्तीनां प्रतिपादनात्तस्यैक-स्यैव वृत्तिभेदा अध्यवसायाभिमानचिन्ता इति निर्णयादिति भावः । **ततः** तदनन्तरम् । भूतसामान्यस्य मनोऽनन्तरत्वकथनेन मनसः भौतिकत्वं व्युदस्तम्, सङ्कल्पस्मरणादौ करणतया मनसः चक्षुरादीन्द्रियाणां मनसोऽपि सात्त्विका-हङ्कारकार्यत्वरूपमिन्द्रियत्वमिति भावः, **भूतमव्यक्तगुणलक्षणमिति** मनश्चा-पीत्यपिः भिन्नक्रमः अव्यक्तगुणलक्षणं भूतमपि नारायणात्मकमित्यर्थः अपि रनुक्तचेतनसमुच्चायकः इत्येव युक्तं श्रुतिषु जीवस्यापि परमात्मशरीरत्व-प्रतिपादनात् ।

"यत्किञ्चिदिह लोके वै देहबद्धं विशांपते ।
सर्वं पञ्चभिराविष्टं भूतैरीश्वरबुद्धिजैः" ।

इत्युपक्रमोक्तभूतपञ्चकं भूतशब्दार्थः, अव्यक्तस्य गुणास्सत्वरजस्तमोरूपास्ते लक्षणं यस्य तत्, एतेन अव्यक्तमहदहङ्कारादीनाम् "स्वच्छन्देनागमेन प्रकृतिमहदहङ्कारमात्राक्षसिद्धिर्नाध्यक्षेणाप्रतीतेः" इति तत्त्वमुक्ताकलापोक्तरीत्या अतीन्द्रियाणां विशिष्य सुबालोपनिषदि नारायणात्मकत्वाकथनेऽपि तत्रैव पूर्वं सृष्टिप्रलयप्रकरणयोर्विशिष्यपृथगुपादानोपादेयभावेनैक्यबोधनेन तेषामपि नारायणात्मकत्वसिद्धिरिति बोधितम् । अत्रायमाशयः "चक्षुश्च द्रष्टव्यञ्च नारायणः", इत्यादिश्रुत्या गुणगुणिनोः प्रमाणप्रमेययोश्च भेदस्साधितः, तत्राद्ये गुणिविषयिणी दृष्टमेव स्पृशामीत्यबाधितप्रत्यभिज्ञा मूलम्, द्वितीये च प्रमाणभूतानामिन्द्रियाणां विषयभूतानां पथिव्यादीनाञ्च प्रकृतिविकृतिभावविरहेण भेद इत्यादीति ; एतेन बौद्धानां द्रव्याद्वैतपक्षः प्रतिक्षिप्तः, एवं प्रामाणिकानेव गन्धादीननूद्य तेषां नारायणात्मकत्वविधानेन ।

"अविभागो हि बुद्ध्यात्मा विपर्यासितदर्शनैः ।
ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते" ॥

इत्यादितत्प्रलापोऽप्यपास्तः । नारायणपरःकाल इति । नारायणः पर उत्कृष्टः यस्य स तथोक्तः नारायणात्मक इति यावत्, नारायणात्मक इत्यनुक्त्वा नारायणपर इति भिन्नशब्दप्रयोगेण नित्यविभूतावपि विद्यमानस्य विभोरस्य न प्रकृतिवत्परिणाम इति सूचितम्, ज्योतिषामयनं यज्ज्योतिश्चक्रं तदपि नारायणपरम्, "अर्यमा चन्द्रमा कला कविर्धाता ब्रह्म प्रजापतिर्मघवादिवसाश्चार्धदिवसाश्च कालाःकल्पाश्चोर्ध्वञ्च दिशश्च सर्वं नारायणः" इति सुबालोपनिषदि श्रवणात्, विष्णुपुराणे ।

"सूर्याचन्द्रमसौ तारानक्षत्राणि ग्रहैस्सह ।
मुने वातमयैर्बन्धैर्ध्रुवे बद्धानि तानि वै ॥ २ । ९ । ३ ॥

शिशुमाराकृतिप्रोक्तं यद्रूपं ज्योतिषां दिवि ।
नारायणोऽयनं धाम्नां तस्याधारस्स्वयं हृदि ॥"

इत्यादिस्मरणाच्चेति भावः ।

अथ "विद्यासहायवान् देवः" इत्यत्र सूचितं विद्यायाः पत्न्यपेक्षया निकर्षं विभूतिमुखेन द्रढयति नारायणपरा कीर्तिरित्यादिना (८६) देवता इत्यनेन देवस्य हरेः पत्न्य एता इति सूचितम् । नारायणपरं साङ्ख्यमित्यनेन साङ्ख्ययोगयोरपि नारायणपरत्वकथनेन ।

"एवमेकं साङ्ख्ययोगं वेदारण्यकमेव च ।
परस्पराङ्गान्येतानि पञ्चरात्रन्तु कथ्यते ॥"

इति वक्ष्यमाणवचने पञ्चरात्राधिकरणश्रीभाष्योक्त एवार्थे व्यासस्य तात्पर्यमिति सिद्धम् ॥

कपिलासुरिसंवादादौ च षड्विंशतितत्त्वपरत्वं साङ्ख्यस्य स्पष्टमित्यादिकं प्राक् (९८) निरूपितं 'तत्त्वं जिज्ञासमानानाम्' इत्यस्य विवरणेऽपि निरूपयिष्यते ।

"अव्यक्तमक्षरे लीयते" इत्यत्राक्षरावस्थायाश्चेतनविवक्षायाः पूर्वमुपपादनेन "मनश्चापि ततो भूतमव्यक्तगुणलक्षणम्" इत्यत्र ततः अव्यक्तगुणलक्षणं भूतमपीति योजनया चेतनस्यापि नारायणात्मकत्वस्य विवक्षिततया चिदचितोर्नारायणापृथक्सिद्धत्वेन नारायणस्य सर्वत्रोपादानकारणत्वं सिद्धम् ।

अथ नारायणस्य तन्नियामकत्वकथनेन "एष सर्वः" "एको नारायणः" इत्यादिश्रुत्यर्थं प्रकाशयन् चिदचिद्विशिष्टमेकं तत्त्वमिति व्यवस्थापनाय "किङ्कारणं ब्रह्म कुतस्म जाताः" "क्षरात्मानावीशते देव एकः" "भोक्ता भोग्यं प्रेरितारञ्च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत्" इति श्वेताश्वतरश्रुत्यभिप्रेतं त्रयाणां कारणत्वमाह कारणं पुरुषो ह्येषामित्यादिना (८७) पुरुषः जीवः एषामव्यक्तादीनाम्" "प्रधानादिविशेषान्तं चेतनाचेतनात्म-

कम्" ॥६।७।५८॥ इति विष्णुपुराणाद्युक्तदिशाऽत्रचेतनस्यापि विवक्षाऽवसेया, प्रधानं चापि—इत्यत्र चः—उक्तसमुच्चायकः ; अपिरनुक्तनारायणसमुच्चायकः, एतदनन्तरं कपुस्तके एकत्रैव "स्वभावश्चैव कर्माणि दैवं येषाञ्च कारणम्।" इत्यधिकःपाठो दृश्यते स च प्रकृतानुपयोगान्नहृदयङ्गमः, 'कारणम्' इति श्लोके प्रधानं शरीरेन्द्रियमुख्यप्राणरूपेण विशदीकृत्याह "अधिष्ठानं तथा कर्ता" इति ; अयं श्लोकः (१८-अ) गीताभाष्ये विवृतः, केषुचित्कोशेष्वयमपि श्लोको न दृश्यते, पञ्चकारणसङ्ख्यातः पञ्चकारणानि "अधिष्ठानं तथा कर्ता" इति श्लोकोक्तानि, निमित्तकारणानि तेषु सम्यक् प्रधाननिमित्तकारणतया ख्यातः, एतेन "अधिष्ठानम्" इति श्लोके दैवशब्दार्थो हरिरिति सूचितम्। सर्वत्र "कारणं पुरुषो ह्येषां प्रधानञ्चापि कारणम्" इत्युक्तउपादानद्वारकारणचिदचित्सामान्येऽपि, हरिः निष्ठा, पर्यवसानकारणं, चिदचिदन्तर्यामिकारणमिति यावत्, वैशब्दोऽवधारणे हरिरेव प्रधानं कारणमित्यर्थः, अत्र—

"यत्किञ्चिदिह लोके वै देहबद्धं विशांपते।
सर्वं पञ्चभिराविष्टं भूतैरीश्वरबुद्धिजैः॥"

"ईश्वरो हि" "भूतान्तरात्मा" इत्युपक्रमोक्तार्थः "नारायणात्मको गन्धः" इत्यादिना प्रतिष्ठापितः। एतच्च नारायणस्य सर्वशरीरकत्वम् "यस्य पृथिवी शरीरम्" इत्यादिना वाजसनेयिभिः "यःपृथिवीमन्तरे सञ्चरन्यस्य पृथिवी शरीरम्" इत्यादिना सौबालैश्चव्यवस्थापितम्।

एतेन नारायणाख्याने "सर्वभूतात्मभूतो हि वासुदेवः" ।३८७। ३२। ।३५। उत्पन्न एव भवति शरीरं चेष्टयन् इत्युक्तार्थस्मारणमुखेन सर्वोपादानत्वनिर्वाहिका सर्वशरीरकत्वावस्थायोगित्वनिबन्धनकार्यताऽपि व्यञ्जिता, अत्र हरिशब्दप्रयोगेण 'सुवर्णं घर्मम्' इत्यनुवाकैकार्थ्यप्रत्यभिज्ञापनपूर्वकं 'अन्तः प्रविष्टश्शास्ता जनानाम्' 'सर्वे वेदायत्रैकं भवन्ति' 'सर्वाः प्रजायत्रैकं भवन्ति' इति श्रुतिमभिप्रेत्य चिदचितोःकारणत्वस्य परमात्मनि कारणत्व-

पर्यवसानकथनेन प्रकृत्याधिकरणे "परिणामात्" इति सूत्रे "किङ्कारणं ब्रह्म, सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत्" इत्यादि श्रुतितात्पर्यविषयस्सूक्ष्मचिदचिदपृथक्सिद्धं ब्रह्मकारणं स्थूलचिदचिदपृथक्सिद्धं ब्रह्मकार्यमिति यस्सिद्धान्तस्सप्रतिष्ठापितः, तदाह वाक्यकारः "परिणामस्तुस्याद्दध्यादिवत्" इति, भास्करेण सूत्रभाष्ये उदाहृतमिदं वाक्यम् । अत्र दध्यादिवदिति दृष्टान्तकथनेन क्षीरत्वावस्थाप्रहाणपूर्वकं दधित्वावस्थाप्राप्तिवत्, सूक्ष्मचिदचिदन्तर्यामित्वावस्थाप्रहाणपूर्वकं स्थूलचिदचिदन्तर्यामित्वावस्था परिणामो ब्रह्मण इति सिद्धम्, एवं वाक्यान्वयाधिकरणे "अवस्थितेरिति काशकृत्स्नः" इति सूत्रे जीवात्मशब्देन परमात्मप्रतिपादनाय स्वशरीरभूते जीवात्मन्यात्मतया परमात्मनोऽवस्थानमित्युक्तम्, मोक्षधर्मे जनकयाज्ञवल्क्यसंवादे "तत्स्थत्वादनुपश्यन्ति ह्येक एवेति साधवः, इत्यत्र जीवपरयोरेकत्वेन निर्देशस्यापि यन्मूलमुक्तं तदचिद्ब्रह्मविषयेऽपि मूलमिति सूचितम् । पूर्वापरपरामर्शेन 'तत्स्थत्वात्' वचनार्थः अनन्तरश्लोकविवरणे विवेचयिष्यते । एतावता सुबालोपनिषदि "नैवेह किञ्चनाग्र आसीदमूलमनाधारमिमाःप्रजायन्ते दिव्यो देव एको नारायणः चक्षुश्च द्रष्टव्यञ्च नारायणः" इति षष्ठखण्डोपक्रमवाक्ये प्रथमद्वितीयखण्डोक्तसृष्टिप्रलयसङ्ग्रहानुवादरूपे नारायणस्य तत्तद्वस्त्वैक्ये निदानं तत्तदुपादानत्वमेवेत्यभिप्रेतम्, एवं तत्रैव सप्तमखण्डे "अन्तश्शरीरे निहितोगुहायामजएकोनित्यः; यस्यपृथिवी शरीरम्" इत्यारभ्य "एषसर्वभूतान्तरात्माऽपहतपाप्मादिव्यो देव एको नारायणः" इत्यन्तसन्दर्भे नारायणस्य सर्वभूतैक्यनिदानं सर्वभूतान्तरात्मत्वमेव विवक्षितमिति बोधितम् । अन्तर्यामि ब्राह्मणेऽपि (बृ. आ. ५-७) 'वेत्थनुत्वं काप्य तमन्तर्यामिणं य इमं च लोकं परं च लोकं सर्वाणि च भूतानि योऽन्तरो यमयति' 'यो वै तत्काप्यसूत्रं विद्यात्तं चान्तर्यामिणमिति सब्रह्मवित्सलोकवित्सवेदवित्सभूतवित्सआत्मवित्ससर्ववित्' इत्युपक्रम्य पृथिव्यादि सर्वशरीरकत्वमभिधाय 'नान्योऽतोऽस्तिद्रष्टा' इत्युपसंहारे सर्वलोकसर्वभूतान्तर्यामि वेद-

प्रतिपाद्यब्रह्मात्मवेदितुरेव सर्वलोकादि वेत्तृत्वोक्त्या सर्वान्तर्यामि द्रष्ट्रन्तर-निषेधेन सर्वान्तर्याम्यैक्यमेव विवक्षितम् । तमेतमर्थं साधयित्वा 'नारायण-परा वेदाः' इति प्रागुक्तं वेदानां नारायणपरत्वं स्थापयति तत्त्वमित्यादि श्लोकेन—

**तत्वं जिज्ञासमानानां हेतुभिस्सर्वतो मुखैः ॥ ८९ ॥**
**तत्वमेको महायोगी हरिर्नारायणःप्रभुः ।**

तत्त्वम्—अनारोपितमबाध्यं वस्तु, जिज्ञासमानानां ज्ञातुमिच्छताम् । इमं श्लोकमुदाहृत्य हेतुभिः समन्वयलक्षणोक्तन्यायैः—सर्वतोमुखैः तत्तन्मुख-भेदभिन्नैः इति सर्वव्याख्यानाधिकरणे व्यासार्यैर्विवृतम्—अयं च श्लोकः भगवच्छास्त्रे (हयशिरः २३७) हंससहस्रनामाध्याये—

"तत्त्वं विज्ञातुकामानां प्रमाणैस्सर्वतोमुखैः ।
तत्त्वं स परमो हंस एक एव जनार्दनः ॥

इति वचन सच्छायतया प्रतीयते एतदनुसारेणायमर्थः हेतुभिः ज्ञापकहेतुभिः-प्रमाणैरिति यावत्, सर्वतोमुखैः सर्वतः सर्वत्र सर्वशाखासु आदौ मध्येऽन्ते च, मुखानि तत्त्वावेदकत्वरूपप्रामाण्यव्यवस्थापनौपयिकानि तात्पर्यनिर्णायक-लिङ्गानि उपक्रमोपसंहारादीनि तत्तदनुग्राहकतर्काश्च येषां तैः, एतेन श्रुत्यादिप्रमाणपरत्वं हेतुशब्द दृढीकृतम् ।

अत्र वचनद्वये मूलभूताश्श्रुतयश्च 'चत्वारिवाक्' इत्यनन्तरं ऋग्वेदाथर्वण-वेद संहितयोः 'एकं सद्विप्राबहुधावदन्ति' इति 'सुवर्णं घर्मम्' (तै. आ.) इत्यनुवाके 'एकस्सन् बहुधाविचारः' इति विश्वकर्मसूक्ते 'यो देवानां नामधा एक एव' इति 'अन्तश्शरीरे—अज एको नित्यः' 'दिव्यो देव एको नारायणः' (सु.उ.) 'एको ह वै नारायण आसीत्' (म. उ.) 'सर्वभूतस्थ-मेकं नारायणम्' (ना. उ.) इत्याद्याः महायोगी प्रभुः हरिर्नारायण एकं तत्त्वमिति योजना हरिनारायणशब्दौ योगरूढौ एतद्योगार्थावपि तत्त्वैक्य-

हेतुतया विवक्षितौ अतस्सर्वाणि महायोगित्वादीनि हेतुगर्भविशेषणानि तत्वैक्योपपादकानि हरि नारायणशब्दघटितश्रुतिप्रघट्टकयोर्मूलप्रमाणताज्ञापनाय शब्दद्वयोपादानम्—**महायोगीत्यत्र** योगपदं ध्यानार्थकम्, अत्रश्च "सोऽकामयतबहुस्यां प्रजायेयेति" (तै. उ.) "तदैक्षतबहुस्यां प्रजायेयेति" (छां. उ.) "प्रजापतिर्वा एकोऽग्रेऽतिष्ठत्सनारमतैकस्सोऽऽत्मानमभिध्यात्वा-बह्वीःप्रजाअसृजत" (मै. उ.) "एको ह वै नारायण आसीत्—स एकाकी-नरमेत तस्यध्यानान्तस्थस्य" (म. उ.) इत्यादिश्रुतिप्रसिद्धबहुभवनसङ्कल्पवानित्यर्थः, **हरिः** 'हरिंग् हरन्तमनुयन्ति देवाः—विश्वस्येशानं वृषभं मतीनाम्' (तै. आ.) "ब्रह्माणमिन्द्रमग्निञ्च यमं वरुणमेव च । प्रसह्य हरते यस्मात्तस्माद्धरिरिहोच्यते" (प. सं.) इत्युक्तप्रकारेण सर्वसंहर्ता, **प्रभुः** स्वामी, **नारायणः** "आपो नारा इति प्रोक्ता आपो वै नरसूनवः । अयनं ममताःपूर्वमतो नारायणोऽस्म्यहम् ॥ ३५० ॥ ४० ॥ इति नारायणाख्याने निरुक्तोऽयं शब्दः, अत्राप्शब्दस्सर्वतत्त्वोपलक्षक इति—

"नराज्जातानि तत्त्वानि नाराणीति ततो विदुः ।
तान्येव चायनं यस्य तेन नारायणस्स्मृतः ॥ १८६ ॥ ७ ॥
इत्यानुशासानिकवचनेन सिद्धम् ।
"यच्चकिञ्चिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा ।
अन्तर्बहिश्च तत्सर्वं व्याप्य नारायण स्थितः" इतिश्रुतिरत्रमूलम् ॥

"नाराणामयनं यस्मात्तस्मान्नारायण स्थितः" इति शाङ्करविष्णुसहस्रनामभाष्योदाहृत ब्रह्मवैवर्तवचनेन, "नाराणामयनत्वाच्च नारायण इति स्मृतः" इत्याचार्यपादोदाहृतवचनेन चावगतेऽर्थान्तरे "नैवेहकिञ्चनाग्र आसीदमूलमनाधारम्" इत्यादि "निवासश्शरणं सुहृद्गतिर्बन्धुर्नारायणः" इति श्रुतिर्मूलं, मूलत्वञ्चस्याः—

"तेषामयनभूतत्वान्नारायण इहोच्यते ।
तस्मान्नारायणं बन्धुं मातरं पितरं गुरुम् ।

न्निवासं शरणञ्चाहुर्वेदवेदान्तपारगाः" इत्याचार्यपादोदाहृतवचनेन सिद्धम्। अयनशब्दे अधिकरणल्युड्विवक्षायामाधारत्वं करणल्युड्विवक्षायां अन्तर्यामि ब्राह्मणाद्युक्तं नियामकत्वमभिप्रेतमिति बोध्यम् वामनपुराणे च नारायण-शब्दस्य श्रीपतिव्यतिरिक्ते न शक्तिरिति स्पष्टमुक्तम् ॥

न तु नारायणादीनां नाम्नामन्यत्र सम्भवः।
अन्यनाम्नां गतिर्विष्णुरेक एव प्रकीर्तितः॥

इति, अनेनैवाशयेनात्र सर्वव्यापक सर्वाधार बोधक शब्दान्तर परित्यागः, एवञ्च बहुभवनसङ्कल्पलयकारणत्व सर्वव्यापकत्व सर्वाधारत्व सर्वनियामकत्व सर्वस्वामित्वैः हरिर्नारायण एकं तत्त्वमिति उपक्रमादितात्पर्यलिङ्गानुग्राहक-तर्कसचिवश्रुतितात्पर्यं निर्णीतं भवति ॥

इदमत्र दिङ्मात्रमवधातव्यम् सामवेदिनां छान्दोग्योपनिषदि "स देव-सोम्येदमग्र आसीदेकमेवाद्वितीयं तद्धैक आहुरसदेवेदमग्र आसीदेकमेवाद्वितीयं तस्मादसतस्सज्जायत। कुतस्तु खलु सोम्यैवग्ँस्यादिति हो वाच कथम-सतस्सज्जायेतेति। सत्त्वेवसोम्येदमग्र आसीदेकमेवाद्वितीयम्। तदैक्षतबहुस्यां प्रजायेयेति तत्तेजोऽसृजत तत्तेजऐक्षत बहुस्यां प्रजायेयेति तदपोऽसृजत तस्माद्यत्र क्वचन शोचति स्वेदते वा पुरुषस्तेजस एव तदद्ध्यापो-जायन्ते। ता आप ऐक्षन्त बह्व्यस्स्याम प्रजायेमहीति ता अन्नमसृजन्त तस्माद्यत्र क्वचन वर्षति तदेवभूयिष्ठमन्नं भवत्यद्भ्य एव तदद्ध्यन्नाद्यं जायते। ६ प्र। २५०॥ तेषां खल्वेषां भूतानां त्रीण्येव-बीजानि भवन्त्याण्डजं जीवजमुद्भिज्जमिति। सेयं देवतैक्षत हन्ताहमिमास्ति स्रोदेवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीति। तासां त्रिवृतं त्रिवृतमेकैकां करवाणीति सेयं देवतेमास्तिस्रोदेवता अनेनैवजीवेनात्मनाऽनु-प्रविश्यनामरूपेव्याकरोत्। तासां त्रिवृतं त्रिवृतमेकैकामकरोद्यथा तु खलु सौम्येमास्तिस्रोदेवतास्त्रिवृत्त्रिवृदेकैका भवति तन्मे विजानीहीति" (६ प्र-३ खं) इति श्रूयते अत्र "सदेवसौम्येदमग्र आसदिकमेव" इत्यत्रैकत्वं

"तदैक्षतबहुस्याम्" इति वक्ष्यमाणबहुत्वप्रतिकोटिभूतम्, बहुत्वञ्च चिद-चिन्नामरूपबहुत्वनिबन्धनामिति 'तत्तेजः' 'एषां खल्वेषां' इत्यचेतनं चेतनं चाभिधाय "सेयं देवतैक्षत—नामरूपे व्याकरवाणीत्याद्युक्त्याप्रतीयते अत एकत्वं नानानामरूपविभागानर्हत्वम् धर्मिभेदाभावेऽपि प्रवृत्तिनिमित्त-रूपभेदान्नामभेदः नानारूपाणां लये नानानाम्नामप्यभावेनैकत्वमिति एवमुपक्रमेऽपि "यथा सौम्यैकेनमृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्याद्वाचा-रम्भणं विकारो नामधेयं मृतिकेत्येवसत्यम्" इत्यत्रापि दृष्टान्ते कारणस्यै-कत्वेऽपि कार्यनानारूपानिबन्धन नामभेदेन कार्यनामरूपबहुत्वमूलकं यत् बहुत्वं तत्प्रतिद्वन्द्विकारणैक्यमिति, यथोक्त एवार्थः प्रतीयते ॥

सामवेदिनां महोपनिषदि "एको ह वै नारायण आसीन्न ब्रह्मानेशानो नेमेद्यावापृथिवी न नक्षत्राणि न सूर्यो न चन्द्रमास्स एकाकी न रमेत तस्य ध्यानान्तस्थस्य" इत्याद्युपक्रमवाक्येन सच्छब्दार्थो नारायणः, एकत्वं ब्रह्मेशानादि नामरूपभागिवस्त्वभावरूपमिति निर्धारणाच्च नामरूपविभाग-नर्हश्चिदचितोर्भगवतस्सम्बन्ध एवैकत्वम् । एतेन मैत्रायणीयोपानिषदि प्रजा-पतिर्वा एकोऽग्रेऽतिष्ठत्सनारमतैकस्सोऽऽत्मानमभिध्यात्वा बह्वीः प्रजा असृजत, इत्यत्राप्येकत्वमुक्तरूपमिति बोध्यम्—अत्र उभयत्रापि सृष्टे-र्दयामूलकत्वं विवक्षितमिति निरूपितं (जी. स. २५ स. अ. सि.भा. प्र.) न च छान्दोग्ये "मृतिकेत्येवसत्यम्" इत्यनेन दृष्टान्ते कारणस्यैव सत्यत्वकथनेन नामरूपविभक्तस्य कार्यस्यासत्यत्वमेव प्रतीयत इति वाच्यम् । मृत्तिकैवसत्य-मित्यप्रयुज्य मृतिकेत्येवसत्यमिति प्रयोगः 'यथा सोम्यैकेन मृत्पण्डेन सर्वं मृण्मयं विज्ञातं स्यात्' इति एकविज्ञानेन सर्वविज्ञानप्रातिज्ञोपपादनाय, एवञ्च इदं मृण्मयं घटशरावादिकं पूर्वाह्णे मृत्तिकैवासीदिति प्रतीत्यामृत्कार्यवर्गस्य मृत्तिकाभेदश्श्वेतकेतुनासुज्ञेय इति तात्पर्येण कार्यकारणयोरभेदस्य प्रामाणिकत्व-बोधनायवै प्रवृत्तं "मृतिकेत्येव सत्यम्" इति वाक्यं न तु मृत्तिकाया एव परमार्थत्वबोधनाय, एवकारः कार्यवर्गे मृत्तिकायामेदंव्यवच्छिनात्ति अत

एव वाजसनेयिनां बृहदारण्यके तृतीय चतुर्थब्राह्मणोपक्रमे "आत्मैवेदमग्र आसीत्पुरुषविधस्सोऽनुवीक्ष्य नान्यदात्मनोऽपश्यत्" इति लयं प्रक्रम्य "तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियतासौनामायमिदगूँरूप इति तदिदमप्येतर्हि नामरूपाभ्यामेव व्याक्रियतेऽसौनामायामिदगूँरूप इति स एष इहप्रविष्ट आनखाग्रेभ्यः यथा क्षुरः क्षुरधानेऽवहितस्स्याद्विश्वम्भरो वा विश्वम्भरकुलाये तं न पश्यत्यकृत्स्नोहिसः"। इत्यत्र "तन्नामरूपाभ्यां व्याक्रियत" इत्यनुरोधेन "अव्याकृत" मित्यत्र नामरूपविभागशून्यत्वम्, "स एष इहप्रविष्ट आनखाग्रेभ्य" इत्यादिना नामरूपविभागवच्चेतनाचेतन शरीरान्तः प्रवेशस्य वक्ष्यमाणतया तन्निबन्धनमेव "असौ नामायमिदगूँरूप" इत्यत्र परमात्मनो नामरूपभाक्त्वम्, "तं न पश्यत्यकृत्स्नो हि सः" इत्यत्र चिदचिद्विशिष्टज्ञानशून्यस्यापूर्णत्वम्, "अकृत्स्नो ह्येष एकैकेन भवति" इत्यत्र एकैकेन विशेषणांशमात्रेण विशेष्यांशमात्रेण विशिष्टपदार्थस्यापूर्णत्वम्, "आत्मेत्येवोपासीतात्रह्येतेसर्व एकं भवन्ति" इत्यनेन, "अन्तःप्रविष्टश्शास्ताजनानागूँ सर्वात्मा एकस्सन् बहुधा विचारः" इत्युपक्रम्य "सर्वा प्रजायत्रैकं भवन्ति" इति श्रुत्यन्तरोक्तादिशा विशिष्टे चिदाचिदन्तरात्मनि विशेषणविशेष्ययोरन्तर्भावश्चाभिधाय "तदेतत्प्रेयःपुत्रात्प्रेयोमित्रात्प्रेयोवित्तात्प्रेयोऽन्यस्मात्सर्वस्मादन्तरतरोयदयमात्मा" इत्यनेन सर्वान्तरस्यात्मनःपरमप्रियत्वकथनम्, तत्रैव षष्ठब्राह्मणस्यान्ते "प्राणो वा अमृतं नामरूपे सत्यं ताभ्यामयं प्राणश्छन्नः, इति नामरूप सत्यत्वकथनपूर्वकं 'स प्राणन्नेवप्राणो नाम भवति' (बृ. २-४) इत्युक्तदिशा प्राणशब्दवाच्यस्य परमात्मनो नामरूपभाक्त्वोपसंहारश्च सङ्गच्छते 'यथा नद्यः' तथा विद्वान्नामरूपाद्विमुक्तः' (मु-उ) इत्यत्र देव मनुष्यादिनामरूपयोः विरह एव विवक्षितः न तु नामरूपसामान्यस्य दृष्टान्तानुसारात् अनन्तरं परात्परदिव्यपुरुषप्राप्तिकथनात् प्रश्नोपनिषदि नामरूपभेदोक्त्यनन्तरं 'समुद्र इत्येवं प्रोच्यते' पुरुष इत्येवं प्रोच्यते, इत्यभिधानाच्चेति 'नामरूपाद्विमुक्तः' इति नामरूपमिथ्यात्वं न साधयितुमलम्

एवम् "आत्मा वा इदमेकमेवाग्र आसीन्नान्यत्किञ्चनमिषत्" इति ऋग्वेदिनामैतरेयोपनिषद्वाक्येऽपि "मिषस्पर्धायाम्" इति धातुनानिष्पन्नस्य मिषादित्यस्य स्पर्धमानार्थकतया आत्मना पूर्ववाक्यप्रतिपन्नोपादानभावेन स्पर्धमानस्यान्यस्य निमित्तस्य निषेधेपि, आत्मव्याप्ययोश्चिदाचितोरनिषेधेन, "स ईक्षतलोकान्नुसृजा इति स इमान् लोकानसृजताम्भोमरीचिर्मरमापः" इत्याद्युत्तरवाक्यानुरोधेन च, एकत्वं पूर्वोक्तमेवेति निश्चयिते ।

एवञ्चसुबालोपनिषदि "पृथिव्यप्सुप्रलीयते" इत्यारभ्य "तमःपरेदेव एकी भवति" इत्यन्तलयप्रकरणे, एकीभावो नामरूपविभागविगमपूर्वकनीरन्ध्रसंश्लेष एवेति सिद्धम् । अतश्च लयकारणत्वबहुभवनसङ्कल्पाभ्यामुपादानो पादेयभावसिद्ध्या मृत्तिकैव इदं घटशरावादिकं पूर्वाह्णे एकमासीदितिवत्, 'आत्मा वा इदमेकमेवाग्र आसीत्' इत्यादिश्रुत्यनुसारेण "सदेवसौम्येदमग्र आसीदेकम्" इत्यत्र सदेवेदमग्रे एकमासीदित्येकत्वव्यपदेशः अद्वितीयत्वमपि निमित्तान्तरशून्यत्वमेवेति नात्र ब्रह्मान्यमिथ्यात्वं परसम्मतं विवक्षितम् उपादानोपादेयभावश्च मृद्घटयोरिव परिणामनिबन्धन इति निश्चीयते ।

एवं बृहदारण्यके "आत्मनो वा अरेदर्शनेन श्रवणेन मत्याविज्ञानेनेदगँ्सर्वँ विदितम्" इत्यत्र "स यथाऽऽर्द्रैधाग्नेरभ्याहितात्पृथग्धूमानिश्चरान्ति" इति दृष्टान्तेन मुण्डकोपनिषदि "कस्मिन्नुभगवोविज्ञाते सर्वँ विज्ञातं भवति" इत्यत्र "यथोर्णनाभिस्सृजते गृह्णते च यथा पृथिव्यामोषधयस्सम्भवान्ति । यथा सतःपुरुषात्केशलोमानि" इत्यादि दृष्टान्तैश्च, पूर्वोक्त एवार्थो दृढीकृतः । सर्वव्यापकत्व संवलितानि सर्वाधारत्व सर्वनियामकत्व सर्वस्वामित्वानि "यस्य पृथिवी शरीरम्" इत्यादि श्रुत्युक्तसर्वशरीरत्वोपपादकानि, इत्थञ्च "तदैक्षत बहुस्यां प्रजायेय" "सोऽकामयत बहुस्यां प्रजायेय" "एष सर्वभूतान्तरात्माऽपहतपाप्मादिव्यो देव एको नारायणः" "किङ्कारणं ब्रह्म" "सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत्" "परिणामात्" "परिणामस्तुस्याद्दध्यादिवत्" इत्यादि श्रुति सूत्र वाक्यादिभिः निर्णीतो य स्सूक्ष्माचिदाचि-

च्छरीरकं ब्रह्म कारणं स्थूलचिदचिच्छरीरकं ब्रह्म कार्यमित्यर्थस्स एव श्रीभाष्ये प्रतिष्ठापितः। वाक्ये मृत्तिकादृष्टान्तं विहाय दधि दृष्टान्तोपादानं यथा क्षीरस्य दधिभावेन परिणामोऽन्यनिरपेक्षः, आतञ्चनस्य शैघ्र्यरसविशेषमात्रफलकत्वात्, तथा सूक्ष्मचिदचिदन्तरात्मतां विहाय स्थूलचिदचिदन्तरात्मत्वरूपपरिणामोऽप्यन्यनिरपेक्ष एवेति बोधनाय, न च छान्दोग्यादौ मृत्तिकादिदृष्टान्तेषु स्वरूपपरिणामसत्त्वेन तस्यापि ब्रह्मणि स्वीकारापत्तिरिति शङ्क्यम्, कारणतावच्छेदके विशेषणे स्वरूपपरिणामसत्त्वेन विशेष्ये तद्विरहेऽपि विशेषणान्तर्यामित्वमात्रेणैव तदुपपत्तेः। विशेष्ये तदंशतात्पर्यविरहश्च, "नैवेहकिञ्चनाग्र आसीदमूलमनाधारमिमाःप्रजाजायन्ते" "अन्तश्शरीरे निहितो गुहायामज एको नित्यः" "एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः" इति सौबालश्रुतौ अज नित्य अपहतपाप्म नारायण शब्दादिभिर्बोधितः। एतद्ज्ञापनार्थमपि "हरिर्नारायणःप्रभुः' इत्यत्र नारायणशब्दःप्रयुक्तः। तदाहुः स्मृत्यधिकरणे "आसीदिदं तमो भूतम्" "तेन नारायणस्स्मृतः" इति मनुवचनविवरणावसरे व्यासार्याः "अत्र सुबालोपनिषदर्थो भगवता मनुनाऽनुसन्धीयते, अतस्सुबालोपनिषदुक्तप्रकारेणात्र प्रलय उच्यते" इत्युपक्रम्य "सुबालोपनिषदि "अज एको नित्यः" इति निर्विकारत्वं जगत्कारणत्वं जगदन्तर्यामित्वञ्चोक्त्वा नारायणशब्दोऽसकृदावर्तितः, अतो जगत्कारणत्वादिकं त्रितयमपि नारायणशब्दस्यावयवार्थ इति श्रुतेरभिप्राय इति मत्वा जगत्कारणत्वादि प्रवृत्तिनिमित्तकं नारायणशब्दं परमकारणस्य वाचकत्वेनाह "आपो नारा" इति चित्संसृष्टान्यण्डकारणतत्त्वान्यापः, तासां नारत्वमुपपादयति "आपो वै नरसूनवः" इति "रीङ् क्षये" इत्यस्माद्धातोर्डप्रत्यये टिलोपे च कृते 'र' इति भवति; नरः—अक्षयः निर्विकार इत्यर्थः, "जह्नुर्नारायणो नरः" इति वचनान्नर इति भगवन्नाम तस्माज्जाता इत्यण्प्रत्यये कृते नारा इति भवति, नाराख्या आपोऽयनमस्येति नारायणः, एवं नरशब्देन निर्विकारत्वम्,

नारशब्देन जगत्कारणत्वम्, अयनशब्देन जगदन्तरात्मत्वञ्चेत्यर्थत्रयमुक्तं भवतीत्यन्तम् ।

अत्र ब्रह्मरूपविशेष्यांशे स्वरूपपरिणामाविरहो विवक्षित इति व्यक्त-मुपपादितम् ।

सुबालोपनिषदि षष्ठखण्डे "नैवेहाकिञ्चनाग्र आसीदमूलमनाधारमिमाः-प्रजा जायन्ते" इत्यादिनाऽऽधाराधेयभावस्य उपादानोपादेयभावमुखे-नैक्योपपादकतामभिधाय, सप्तमखण्डे "अन्तश्शरीरे निहितो गुहायामज एकः" इत्यारभ्य "एषसर्वभूतान्तरात्माऽपहतपाप्मादिव्यो देव एको नारायणः" इत्यन्तेन शरीरशरीरिभावस्य, उपादानोपादेय भावबहिर्भावे-नाप्यैक्यव्यपदेशनिमित्तता प्रत्यपादि । एवं छान्दोग्येऽपि "सन्मूलास्सोम्ये-मास्सर्वाःप्रजास्सदायतनास्सत्प्रतिष्ठाः" इत्यत्र "सदायतनाः" इत्येनेन आधाराधेयभावमुखेन शरीरशरीरिभावस्य उपादानोपादेयभावोपपादकत्वं प्रदर्श्य "ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो" इत्यत्र शरीरशरीरिभावस्य उपादानोपादेयभावानन्तर्भावेणाप्यभेदव्यपदेशनिमित्त-ता स्फुटीकृता, अतस्सर्वव्यापकत्व सर्वाधारत्व सर्वनियामकत्व सर्वस्वामित्वानि सर्वोपादनत्वानन्तर्भावेणापि शरीरशरीरिभाव मुखेनैक्यव्यवस्थापकानि । अत्र व्यापकत्वमपृथक्सिद्धौ विश्राम्यति, एवञ्च तदपृथक्सिद्धत्वे सति तदाधेयत्वं तन्नियाम्यत्वं तच्छेषत्वं वा शरीरत्वमत्र विवक्षितम्, तदपृथक्सिद्धत्वे सति तन्नियाम्यत्वरूपं तच्छरीरत्वञ्च "ईश्वरो हि जगत्स्रष्टा" इत्यादावपि विवक्षितम् । अत्र च अपृथक्सिद्धत्वं शरीरत्वान्तःपातितयाऽनन्तःपातितया च ऐक्यव्यपदेशनिमित्तं भवति । "अन्तः प्रविष्टश्शास्ता जनानाम्—एकस्सन् बहुधा विचारः—शतगं शुक्राणि यत्रैकं भवन्ति—सर्वे वेदा यत्रैकं भवन्ति" "अन्तःप्रविष्टश्शास्ताजनानागँ सर्वात्मा–सर्वाःप्रजा यत्रैकं भवन्ति" इत्यादौ च अपृथक्सिद्धिघटितशरीरशरीभाव ऐक्यव्यदेशनिदानमिति व्यक्तम् । अपृथक्सिद्धेरपि "सर्वभूतस्थमेकं नारायणम्" इति नारायणोप-

निषदि "तत्स्थत्वादनुपश्यन्ति ह्येक एवेति साधवः" इति जनकयाज्ञवल्क्य-संवादादौ च एकत्वव्यवहारमूलता स्फुटा ।

एवं नृसिंहोत्तरतापनीयेऽपि "अथैषो एवाकार आप्ततमार्थ आत्मन्येव नृसिंहे ब्रह्मणि वर्तेत एषह्येवाप्ततमएषहिसाक्ष्येष ईश्वरोऽतस्सर्वगतो न हीदं सर्वमेषहिव्याप्ततम इदं सर्वं यदयमात्मा" इति पञ्चमखण्डे, "सर्वं ह्यय-मात्मा अयं हि सर्वान्तरो न हीदं सर्वं निरात्मकमात्मैवेदं सर्वम्" इति सप्तमखण्डे, "सर्वं समाप्नोषि ततोऽसि सर्वः" इति गीतादौ च पूर्वोक्तार्थोऽवसेयः ।

आधाराधेयभावस्य ऐक्यव्यवस्थापकता "यस्मिन्द्यौः पृथिवीचान्तरिक्ष-मोतं मनस्सहप्राणैश्चसर्वैः । तमेवैकं जानथात्मानम्" इत्याथर्वणश्रुतौ "अस्मिन् हि सर्वमयं सर्वात्मा अयं हि सर्वंनैवो तोऽद्वयः" इति नृसिंहोत्तरतापनीये, "धाताविधाताकर्ताविकर्तादिव्योदेव एक एव नारायणः" इति सुबालोपनिषदि, "यदधीना यस्य सत्तातत्तदित्येवभण्यते" (म—भा) इत्यादौ च व्यक्तम् ।

लयकारणत्वादेश्च, ऐक्यव्यपदेशनिदानत्वं स्पष्टमाहाथर्वशिरश्श्रुतिः "अथ कस्मादुच्यत एक इति यत्सर्वान् लोकानुद्गृह्णाति सृजति विसृजति वासयति तस्मादुच्यत एक" इति, श्वेताश्वतराश्च 'संयुक्तमेतत्क्षर-मक्षरं च व्यक्ताव्यक्तं भरते विश्वमीशः, "क्षरंप्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः" "एतद्ज्ञेयं नित्यमेवात्मसंस्थं नातःपरं वेद-नीयं हि किञ्चित् । भोक्ता भोग्यं प्रेरितारञ्च मत्वा, सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत्" इति प्रथमाध्याये क्षराक्षरशब्दार्थाचेतन चेतनयोः नित्य-परमात्माधेयत्वानियाम्यत्वादिकमभिधाय चेतनाचेतन सर्वतत्वानां द्वितीया-ध्याये "यदात्मतत्वेन तु ब्रह्मतत्वं दीपोपमेनेहयुक्तःप्रपश्येत् । अजं ध्रुवं सर्वतत्वैर्विशुद्धं ज्ञात्वादेवं मुच्यते सर्वपाशैः" इति मोक्षसाधनज्ञानविषयता-मामनन्ति । एतेन तत्रैव तृतीयाध्याये "वेदाहमेतं पुरुषं महान्तं—तमेव विदित्वा

अतिमृत्युमेति " इति श्रुतौ एवकारेण भगवद्व्यतिरिक्ततत्त्वानां पुरुषपदमितानां मोक्षसाधनज्ञानाविषयतानत्र्यवाच्छिद्यत इति ज्ञापितम् । अत एव कठाः व्याप्यव्यापकतत्त्वद्वयं प्राहुः " अस्तीत्येवोपलब्धव्यस्तत्त्वभावेन चोभयोः । अस्तीत्येवोपलब्धस्य तत्त्वभावःप्रसीदति " इति । अत्र " अव्यक्तात्तुपरःपुरुषो व्यापकोलिङ्ग एव च । यद्ज्ञात्वामुच्यतेजन्तुरमृतत्वञ्चगच्छति " इति पूर्व-प्रस्तुतं सर्वव्यापकं सर्वशरीरिपरपुरुषतत्त्वं, तद्व्याप्यमव्यक्ताद्यवरतत्त्वञ्चेत्युभयो-रेकरूपपरमार्थत्वानुसन्धानेनैव सर्वव्यापकसर्वशरीरिपरपुरुषतत्त्वं स्वरूपान्यथा-भावकर्मकृतस्वभावान्यथाभावरूपपरिणामशून्यत्वेन " अस्तीत्येवोपलब्धव्यः " इत्युक्तमितिविदुषांनतिरोहितम्, तदुक्तं शरीरे भावाधिकरणे व्यासार्यैः " अस्तीत्येवोपलब्धव्यः " इति श्रुतिस्तु जन्मादिभावविकारराहित्यविषया न तु सन्मात्रं ब्रह्मेत्येवं परा " इति, अनया सूक्त्या विष्णुपुराणे—

" परःपराणांपरमःपरमात्माऽऽत्मसंस्थितः ।
रूपवर्णादिनिर्देशविशेषणविवर्जितः ॥ १-२-१० ॥
अपक्षयविनाशाभ्यां परिणामर्द्धिजन्मभिः ।
वर्जितश्शक्यते वक्तुं यस्सदाऽस्तीति केवलम् ॥ ११ ॥
सर्वत्रासौ समस्तञ्च वसत्यत्रेति वै यतः ।
ततस्स वासुदेवेति विद्वाद्भिःपरिपठ्यते ॥ १२ ॥
तद्ब्रह्म परमं नित्यमजमक्षयमव्ययम् ।
एकस्वरूपं तु सदा हेयाभावाच्च निर्मलम् ॥ १३ ॥
तदेव सर्वमेवैतद्व्यक्ताव्यक्तस्वरूपवत् ।
तथा पुरुषरूपेण कालरूपेण च स्थितम् ॥ १४ ॥
परस्य ब्रह्मणो रूपं पुरुषःपरमं द्विज ।
व्यक्ताव्यक्ते तथैवान्ये रूपे कालस्तथापरम् ॥ १५ ॥
प्रधानपुरुषव्यक्तकालानां परमं हि यत् ।
पश्यन्ति सूरयश्शुद्धं तद्विष्णोःपरमं पदम् ॥ १६ ॥"

इत्याद्युपक्रमवचनानाम्—

"न सन्ति यत्र सर्वेशे नामजात्यादिकल्पनाः ।
सत्तामात्रात्मके ज्ञेये ज्ञानात्मन्यात्मनःपरे ॥ ६-४-३७॥
तद्ब्रह्म परमन्धाम परमात्मा स चेश्वरः ।
स विष्णुस्सर्वमेवेदं यतो नावर्तते यतिः॥ ३८॥
प्रकृतिर्या मयाऽऽख्याता व्यक्ताव्यक्तस्वरूपिणी ।
पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि ॥ ३९ ॥
परमात्मा च सर्वेषामाधारःपरमेश्वरः ।
विष्णुनामा स वेदेषु वेदान्तेषु च गीयते ॥ ४० ॥ इति ।
"स सर्वभूतप्रकृतिं विकारान् गुणादिदोषांश्च मुने व्यतीतः ।
अतीतसर्वावरणोऽखिलात्मा तेनास्तृतं यद्भुवनान्तराले ॥ ६-५,८३ ॥
समस्तकल्याणगुणात्मकोऽसौ स्वशक्तिलेशाद्धृतभूतसर्गः ।
इच्छागृहीताभिमतोरुदेहस्संसाधिताशेषजगद्धितोऽसौ (यः)॥
तेजोबलैश्वर्यमहावबोधसुवीर्यशक्त्यादिगुणैकराशिः ।
परःपराणां सकला न यत्र क्लेशादयस्सन्ति परावरेशे ॥ ८५॥"

इत्यारभ्य "तद्ज्ञानमज्ञानमतोऽन्यदुक्तम्" इत्याद्युपसंहारवचनानाञ्च कठोपनिषदि, एतत्प्रकरणस्य "सोऽध्वनःपारमाप्नोति तद्विष्णोःपरमंपदम्" इति प्रकरणस्य चोपबृह्मणत्वं व्यञ्जितम् ॥

एवं वाजसनेयिनोऽपि चतुर्थे "द्वेवावब्रह्मणो रूपेमूर्तञ्चैवामूर्तञ्च" तस्य हैतस्य पुरुषस्य रूपं यथामाहारजनंवासः" इत्यनेन मूर्तामूर्तचिदचित्प्रपञ्चात्मक-रूपद्वयं माहारजनादिसदृशदिव्यरूपञ्चाभिधाय "नेति नेति नह्येतस्मादिति नेत्यन्यत्परमस्ति" इति वाक्येन "द्वेवावे" त्यादि पूर्ववाक्यजनितं ब्रह्मणो रूपपरिच्छिन्नत्वभ्रमं निरस्य, अपरिच्छिन्नरूपवत्त्वञ्च व्यवस्थाप्य ब्रह्मणोऽन्य-दुत्कृष्टं नास्तीति प्रतिपादयन्ति । अत्रान्यशब्दपरशब्दयोःप्रयोगेण ब्रह्मणोऽन्यन्नास्तीत्यर्थोत्प्रेक्षणस्य नावसरः, एवं षष्ठे "यद्वैतन्नपश्यति" इत्युपक्रम्य

" न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येत् " इत्यत्र अन्यशब्दविभक्त-शब्दयोऽप्रयोगेण ब्रह्मसंयुक्तस्यजगतस्सद्भावमेव स्थिरीकुर्वन्ति, तत्रैव " नेहनानास्तिकिञ्चन " इत्यत्रापि " एकधैवानुद्रष्टव्यम् " इति वक्ष्यमाण-प्रकारविरुद्धनानात्वविशिष्टमेववस्तु निषेधन्ति। कठा अपि " नेहनानास्ति किञ्चन " इत्यत्र " एवं धर्मान् पृथक्पश्यन् " इति वक्ष्यमाण पृथक्त्वविशिष्टमेव वस्तुप्रतिषेधन्ति, तदेतत्सर्वं " अवस्थितेरितिकाशकृत्स्नः " " प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः " " अविभागेन दृष्टत्वात् " इत्यादि-सूत्रेषु व्यासाभिप्रेतम्—अत्र ' नारायणपरा वेदाः ' ' नारायणपरं साङ्ख्यम् ' इत्युपक्रम्य ' तत्त्वं जिज्ञासमानानाम् ' इति श्लोके सङ्ग्रहेण प्रतिपादितमर्थं ' नित्यो नित्यानाम् ' तत्कारणं साङ्ख्ययोगाधिगम्यम्, इत्यादिश्रुत्यर्थनिर्दिधार-यिषया महाभारत एव पूर्वं कराळजनकवासिष्ठसंवाद जनकयाज्ञवल्क्य-संवादादौ विस्तरेण व्यासोऽपि व्यवस्थापयामास। तथा हि मोक्षधर्मे—

प्रकृतिं चाप्यतिक्रम्य गच्छत्यात्मानमव्ययम्।
परं नारायणं देवं निर्द्वन्द्वं प्रकृतेः परम्॥ २०७-९६॥
विमुक्तस्सर्वपापेभ्यः प्रविष्टस्तमनामयम्।
परमात्मानमगुणं न निवर्तति भारत॥ २०७-९७॥
एवमुक्तेन कौन्तेय युक्तज्ञानेन मोक्षिणा।
साङ्ख्या राजन्महाप्राज्ञाः गच्छन्ति परमां गतिम्॥ २०७-९९॥
ज्ञानेनानेन कौन्तेय तुल्यं ज्ञानं न विद्यते।
अत्र ते संशयो मा भूत् ज्ञानं साङ्ख्यं परं मतम्॥ २०७-१००॥
अक्षरं ध्रुवमव्यक्तं पूर्णब्रह्म सनातनम्।
अनादिमध्यनिधनं निर्द्वन्द्वं कर्तृ शाश्वतम्॥ २०७-१०१॥
कूटस्थं चैव नित्यं च यद्वदन्ति शमात्मकाः।
यतस्सर्वाः प्रवर्तन्ते सर्गप्रलयविक्रियाः॥ २०७-१०२॥
ज्ञानं महद्यद्धि महत्सु राजन्
वेदेषु साङ्ख्येषु तथैव योगे।

यच्चापि दृष्टं विविधं पुराणे
सांख्यागतं तन्निखिलं नरेन्द्र ॥ ३०७-१०८ ॥
कृत्स्नं च सांख्यं नृपते महात्मन्
नारायणो धारयतेऽप्रमेयम् ॥ ३०७-११४ ॥
एतन्मयोक्तं नरदेव तत्त्वं
नारायणो विश्वमिदं पुराणम् ।
स सर्गकाले च करोति सर्गं
संहारकाले च तदत्ति भूयः ॥ ३०७-११५ ॥

संहृत्य सर्वं निजदेहसंस्थं कृत्वाप्सु शेते जगदन्तरात्मा । इति पूर्वमुक्तम् । अत्र 'प्रकृतिं चाप्यतिक्रम्य' इत्यतःप्राक्तनवचनेषु पूर्वं (पु. १०३) उदाहृतेषु (अ सा) आचार्यपादनिर्णीतदिशा अर्चिरादिगत्यविरुद्ध गतिद्वारक परमात्म प्राप्त्यपुनरावृत्योस्स्फुटतया 'प्रकृतिं चाप्यतिक्रम्य इत्यत्रापि प्रकृति-मण्डलादूर्ध्वदेशगमनार्थं प्रकृत्यतिक्रम एव विवक्षितः । अत एव जीवस्य परमात्मप्राप्तिस्सम्यगुपपद्यते । एतेन जीवपरभेदः प्रतीयते नारायणो विश्वमिदं पुराणम् । इत्यत्र नारायणे विश्वाभेदः प्रतिपादितः कूटस्थनित्यताप्यक्षरब्रह्मण उक्ता । एतेन जीवेश्वरयोरभेदः प्रतीयते एवं च अक्षरं जीवाभिन्नं परं ब्रह्म विवक्षितम् उत जीवभिन्नम्? द्वितीये जीवस्याक्षरत्वम् उत क्षरत्वम्? अक्षरत्वे उभयगतं तदेकरूपं उत न? क्षरत्वे अक्षरप्राप्तिःकथम्? इत्यादि संशयेन युधिष्ठिरो भीष्मं पृच्छति—

"किं तदक्षरमित्युक्तं यस्मान्नावर्तते पुनः ।
किं च तत्क्षरमित्युक्तं यस्मादावर्तते पुनः ॥—इत्यादिना ।

भीष्म उवाच—

अत्र ते वर्तयिष्यामि इतिहासं पुरातनम् ।
वसिष्ठस्य च संवादं करालजनकस्य च ॥
वसिष्ठं श्रेष्ठमासीनमृषीणां भास्करद्युतिम् ।
पप्रच्छ जनको राजा ज्ञानं नैश्रेयसं परम् ॥

"भगवन् श्रोतुमिच्छामि परं ब्रह्म सनातम्।
यस्मान्न पुनरावृत्तिमाप्नुवन्ति मनीषिणः ॥ ३०८ । ११ ॥
यच्च तत्क्षरमित्युक्तं यत्रेदं क्षरते जगत्।
यच्चाक्षरामिति प्रोक्तं शिवं क्षेम्यमनामयम्" ॥ १२ ॥
इति करालजनकप्रश्नस्य वसिष्ठप्रतिवचने—
"एषा तत्त्वचतुर्विंशी सर्वाकृतिषु वर्तते।
यां ज्ञात्वा नाभिशोचन्ति ब्राह्मणास्तत्त्वदर्शिनः ॥ २९ ॥
एतद्देहं समाख्यातं त्रैलोक्ये सर्वदेहिषु।
वेदितव्यं नरश्रेष्ठ स देव नरदानवे ॥ ३० ॥
कृत्स्नमेतावतस्तात क्षरतेऽव्यक्तसंज्ञितम्।
अहन्यहनि भूतात्मा ततः क्षर इति स्मृतः ॥ ३५ ॥
एतद्धि(च) क्षरामित्युक्तं क्षरतीदं यथा जगत्।
कथितन्ते महाराज यस्मान्नावर्तते पुनः ॥ ३७ ॥
पञ्चविंशतिमोविष्णुर्निस्तत्वस्तत्वसंज्ञितः।
तत्त्वसंश्रयणादेतत्तत्वमाहुर्मनीषिणः ॥ ३८ ॥
यन्मर्त्यमसृजद्व्यक्तं तत्तन्मूर्त्यधितिष्ठति।
चतुर्विंशत्तमो व्यक्तो ह्यमूर्तःपञ्चविंशकः ॥ ३९ ॥
स एव हृदि सर्वासु मूर्तिष्वात्माऽवतिष्ठते।
चेतयंश्चेतनान्नित्यं सर्वमूर्तिरमूर्तिमान् ॥ ४० ॥
एवमेष महानात्मा सर्गप्रलयकोविदः।
विकुर्वाणःप्रकृतिमानभिमन्यत्यबुद्धिमान् ॥ ४२ ॥
तमस्सत्वरजोयुक्तस्तासु तास्विह योनिषु।
लीयतेऽप्रतिबुद्धत्वादबुद्धजनसेवनात् ॥ ४३ ॥
सहवासनिवासात्मा नान्योऽहमिति मन्यते।
योऽहं सोऽहमिति ह्युक्त्वा गुणानेवानुवर्तते ॥ ४४ ॥

तमसातामसान्भावा न्विविधान्प्रतिपद्यते ।
रजसा राजसांश्चैव सात्विकान् सत्व संश्रयात् ॥ ४५ ॥ इति ॥
जनकयाज्ञवल्क्यसंवादे-
सात्विकस्योत्तमं स्थानं राजसस्येहमध्यमम् ।
तामसस्याधमं स्थानंप्राहुरध्यात्म चिन्तकाः ॥ ३१९–३ ॥
केवलेनेह पुण्येन गति मूर्ध्वामवाप्नुयात् ।
पुण्यपापेन मानुष्य मधर्मेणाप्यधोगतिम् ॥ ४ ॥
पुण्यपापविमुक्तानां स्थानमाहुर्महात्मनाम् ।
शाश्वतं चाव्ययं चैव मचलं चाक्षरं च ह ॥ ५ ॥ इति ।

अत्र कराळजनक प्रश्ने 'प्रकृतिं चाप्यतिक्रम्य । इत्यादौ प्रागुक्तानामक्षयत्त्वापुनरावृत्त्याभिधानेन नारायण एव अक्षरम् ; नाराणमयनमिति नारप्राप्यत्वं च नारायण पदार्थ इति विवाक्षितम् ।

एतेन 'अथपरा यया तदक्षरमधिगम्यते' (मुं १–५–) इत्यत्र अक्षर-पदार्थो नारायण इति स्थापितम् । भूतात्मा—बद्धजीवः, अत्र प्राक् (२४८ पु) उदाहृत (मै-३) श्रुतिरनुसन्धेया । भूतात्मनः क्षरत्त्वोक्त्या अचेतनवत् कार्यत्त्वं बोधितम् । तेन वस्तुतो जीवस्य पञ्चविंशत्त्वस्य वक्ष्यमाणत्त्वेऽपि अचित्संबद्धस्य कार्यतया चतुर्विंशति तत्त्वान्तर्भावमभिप्रेत्यैव अनुपदमेव विष्णोः पञ्चविंशति मत्त्वोक्तिस्सङ्गच्छते । विष्णुशब्देन कठश्रुत्याद्यभिप्रेतं व्याप्य व्यापक तत्त्व द्वयं व्यञ्जितम् । निस्तत्त्वः-आधारभूत तत्त्वशून्यः, 'तत्त्व-संश्रयणात्' इति वक्ष्यमाणानुसारात्, स्वतन्त्र इति यावत् । एतत्—क्षरम्, तत्त्वसंश्रयणात्—विष्णवधीनसत्तावत्त्वात्, एतेन क्षरस्य परतन्त्र तत्त्वरूपतोक्ताभवति । एतदेव विशदयति 'यन्मर्त्यम्' इत्यादिना 'तत्तन्मूर्ति' इत्यत्र तत्, तन्मूर्ति, इति छेदः । यच्छब्दे वीप्साभावेन तच्छब्दे वीप्साविवक्षणानौचित्यात् । तत्-सृष्टं क्षरं चिदचिदात्मकम्, तन्मूर्ति-क्षरशरिरकं विष्णुतत्त्वम्, 'एतद्देहम्' इति पूर्वमभिधाय अत्र 'तन्मूर्ति' इत्युक्त्या भूतात्मनो लोक-

प्रसिद्ध देहवत् अचिद्भूतात्मनोरुभयोरपि विष्णुदेहत्त्वामितिबोधितम् । एतन्मूलक एवाभेद व्यपदेश इति दर्शयति 'चतुर्विंशतिमोऽव्यक्त' इति 'अमूर्तः' 'अमूर्तिमान्' इत्यत्र भूतात्मवत्कर्मकृतशरीरशून्य इत्यर्थः। सर्वशरीरकत्वेन भूतात्मविलक्षणात्मत्त्वं विष्णोर्दर्शयति 'स एव, इत्यादिना। चेतयं श्चेतनान्नित्यम् इत्येव पाठः प्राचीन लिखित कोशेषु बहुषु (वा. रामस्वामिशास्त्रिमुद्रितकोशेपि) दृश्यते । 'नित्त्यो नित्यानां चेतनश्चेतनानाम्' तमात्मस्थम्' (कठउ ५–१३) 'तत्कारणं सांख्ययोगाधिगम्यम्' (श्वे उ ६–१३) 'स एतासां प्रतिबोधनायाभ्यन्तरं विविशानीति' 'आत्मस्थं प्रभुं भगवन्तं कारयितारम् (मै उ ३–२) इति (पु १४८) उदाहृतायाश्च श्रुतेरनुसारात्। आत्मस्थम्' इति 'व्याप्यनारायणस्थितः' (तैना) इति श्रुत्यनुसाराद्व्याप्तिपरम् । प्रभुंकारयितारामिति स्वामित्त्व नियामकत्त्वे उक्ते। एतेन जीवस्यपरमात्मशरीरत्वं दर्शितम् । 'नरसम्बन्धिनस्सर्वे चेतना-चेतनात्मकाः' (र-त्र) इति वचनार्थोऽपि संगृहीतः। एतावता शरिर शारिरि भावापन्नतत्त्व द्वयमिति देहे आत्मद्वयमिति च निर्णीतम्। 'विकुर्वाण' इत्यादि भूतात्मनिरूपणपरम्' विकुर्वाण इति पूर्वोक्त क्षरशब्दार्थ उक्तः। 'प्रकृतिमानभिमन्यति' इत्यनेन 'तस्मिंश्चान्यो मायया सन्निरुद्धः (श्वे उ) इति श्रुत्यर्थ उक्तः। श्रुतौच 'मायया' इति संनिरुद्ध इत्यत्रैवान्वेति। तेन अन्यपदार्थभूतः मायास्वामीश्वरभेदः जीवगतस्स्वाभाविको न मायिक इति बोध्यते। अत्रपूर्वं 'एतद्देहं–सर्वदेहिषु, इत्यत्र प्रकृतेर्देहरूपाया यस्संबन्ध उक्त स्सएव देहात्माभिमानस्य स्वतन्त्रात्माभिमानस्य च हेतु रित्याशयः। 'देहयोगाद्वासोऽपि' (शा सू ३-२-५) इति सूत्रेप्ययमर्थः स्फुटः। अत्र जीवस्य क्षरत्वोक्त्या नराज्जातत्वेन नारपदार्थत्वं दर्शितम् ।

सहवासेति–सहवासः विष्णुना सह देहे वास एव निवासो यस्यसः सहवासनिवास इत्यर्थः । एतेन देहे जीवापृथक्सिद्धिवत् भूतात्मनो विष्ण्वपृथक्सिद्धिरपि प्रदर्शिता। एतन्निबन्धनं मोहाकारमाह 'नान्य' इत्यादिना।

'आत्मस्थं प्रभुं भगवन्तं करियतारं नापश्यत्' (१४८ पृ) इत्याद्युदाहृत श्रुतेरर्थ एतेनोक्तः। जनकयाज्ञवल्क्य संवादेऽप्ययमर्थोवक्ष्यते। "तमसा तामसान्" इत्यादे 'स्सात्विकान्सत्वसंश्रयात्, इत्यन्तस्यार्थस्य जनकयाज्ञवल्क्य संवादे विवरणमुखेन सात्विकस्योत्तमं स्थानं—पुण्यपाप विमुक्तानां स्थानमित्यादिना प्रकृतिश्चाप्यतिक्रम्य। इत्यादिप्रागुदाहृत वचनेऽपि प्रकृतिमण्डलादूर्ध्वस्थानं विवक्षितमिति निर्णीतं भवति। केवलेनेह पुण्येनेत्यत्र 'पुण्यस्त्रिषुमनोज्ञेस्या त्क्लीबंसुकृत धर्मयोः, इत्यादि मेदिनीकोशा दात्मज्ञानरूपधर्मोऽपि पुण्यशब्दार्थः। "अधर्मेणाप्यधोगतिम्" इति समभिव्याहाराच्च। एतेन "योहवा वोपरिस्थः श्रूयते" (मै. उ २–४) इत्यादि श्रुति सिद्धस्य ज्ञानिप्राप्यतादर्शिता। एतेन 'अथ परा यायतदक्षरमधिगम्यते, (मु. उ.) इत्युपक्रमोक्ताक्षरप्राप्तिः, 'तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैतिदिव्यम्। (मु कठ–३–८) इत्युपसंहारे दिव्यपदेनाप्राकृतदेशे विवक्षिता 'पुण्यपापेविधूयनिरञ्जनः' "तरतिशोकं तरतिपाप्मानं गुहाग्रन्थिभ्यो विमुक्तोऽमृतो भवति" इति पूर्वं परत्र "तदापीतेस्संसार व्यपदेशात्" (शा. सू. ४–२–८) इति सूत्रेच गतिमध्ये सूक्ष्मशरीरादिविगमानन्तरमेव मुक्तिप्रतिपादनेन प्रकृतिमण्डले मुक्त्यसम्भवादिति सिद्धम्। अत्र जीवपरयोः शरिर शरिरिभावोक्त्या एकत्वव्यपदेशोपपादनेनाभेदबुद्धेर्भ्रमत्वोक्त्या च जीवपरभेदः सिद्धान्तितः।

देहजीवयोरभेदबुद्धिवत् जीवपरयोरभदबुद्धिरपि भ्रम एवेति उत्तरग्रन्थसन्दर्भेऽपि व्यक्तम्।

अहमेतानि वै सर्वं मय्येतानीन्द्रियाणि ह। म. भा. शा. मो.
निरिन्द्रियो हि मन्येत व्रणवानस्मि निर्व्रणः॥ ३०८–५०१॥
अक्षरः क्षरमात्मानमबुद्धिस्त्वभिमन्यते॥ ३०९–५४॥
एवमप्रतिबुद्धत्त्वादबुद्ध जन सेवनात्।
सर्गकोटि सहस्राणि मरणान्तानि गच्छति॥ ३१०–९॥

तदेव षोडशकलं देहमव्यक्तसंज्ञिकम् ।
ममायामिति मन्वानस्तत्रैव परिवर्तते ॥ ३१०–८ ॥
पञ्चविंशस्तथैवात्मा तस्यैवा प्रतिबोधनात् ।
विमलश्च विशुद्धश्च शुद्धामलनिषेवणात् ॥ ३१०–९ ॥
अशुद्ध एव शुद्धात्मा तादृग्भवति पार्थिव ।
अबुद्धसेवनाच्चापि बुद्धोऽप्य बुद्ध (ध) तां व्रजेत् ॥ ३१०–१० ॥

कराल जनक उवाच—

अक्षरक्षरयोरेष द्वयोस्सम्बन्धउच्यते ।
स्त्रीपुंसोश्चापि भगवन्संबधस्तद्वदुच्यते ॥ ३१०–१२ ॥
एवमेवाभिसंबद्धौ नित्यं प्रकृति पूरुषौ ।
पश्यामि भगवंस्तस्मान्मोक्षधर्मो न विद्यते ॥ ३१०–१९ ॥
मोक्षकामा वयं चाऽपि काङ्क्षामो यदनामयम् ।
अदेह मजरं नित्य मतीन्द्रियमनीश्वरम् ॥ ३१०–२१ ॥

वसिष्ठ उवाच—

धार्यते हि त्वयाग्रन्थ उभयोर्वेदशास्त्रयोः ।
न च ग्रन्थस्य तत्त्वज्ञो यथावत्त्वं नरेश्वर ॥ ३१०–२३ ॥
यो हि वेदे च शास्त्रे च ग्रन्थधारणतत्परः ।
न च ग्रन्थार्थ तत्त्वज्ञस्तस्य तद्धारणं वृथा ॥ ३१०–२४ ॥
एकत्वमक्षरं प्राहुर्नानात्वं क्षरमुच्यते ॥ ३२०–४७ ॥
पञ्चविंशति निष्ठोऽयं यदासम्यक्प्रचक्षते ।
एकत्वं दर्शनं चास्य नानात्वं चाप्यदर्शनम् ॥ ३१०–४८ ॥

जनक उवाच—

नानात्वैकत्वमित्युक्तं त्वयैतदृषिसत्तम ।
पश्यामि वाभिसन्दिग्धमेतयो वैं निदर्शनम् ॥ ३११–१ ॥
तथाऽबुद्ध प्रबुद्धाभ्यां बुध्यमानस्य चानघ ।

स्थूलबुद्ध्या न पश्यामि तत्वमेतन्न संशयः॥ ३११--२ ॥
अक्षररक्षयोर्युक्तं त्वया यदपिकारणम्।
तदप्यस्थिरबुद्धित्वात्प्रनष्टमिव मेऽनघ ॥ ३११--३ ॥
तदेतच्छ्रोतुमिच्छामिनानात्वैकत्व दर्शनम्।
प्रबुद्धमप्रबुद्धं च बुध्यमानं च तत्त्वतः ॥ ३११--४ ॥
विद्याविद्ये च भगवन्नक्षरं क्षरमेव च।
सांख्यं योगं च कात्स्न्र्येन पृथक्चैवापृथक्चह ॥ ३११--५ ॥

वसिष्ठ उवाच—

योगकृत्यं तु योगानां ध्यानमेव परं बलम्।
तच्चापि द्विविधं ध्यानमाहुर्वेदाविदोजनाः ॥ ३११--७ ॥
तदातमनुपश्येत यस्मिन्दृष्टे तु कथ्यते।
हृदयस्थोऽन्तरात्मेति ज्ञेयो ज्ञ स्तात मद्विधैः॥ ३११--१९ ॥
विधूम इव सप्तार्चिरादित्यइव रश्मिमान्।
वैद्युतोऽग्निरिवाकाशेदृश्यतेऽऽत्मातथाऽऽत्मनि ॥ ३११--॥२० ॥
संपश्यान्तिमहात्मानो धृतिमन्तो मनीषिणः।
ब्राह्मणा ब्रह्मयोनिस्थाह्ययोनिममृतात्मकम् ॥ ३ –२१ ॥
तदेवाहुरणुभ्योऽणु तन्महद्भ्यो महत्तरम्।
तत्तत्र सर्वभूतेषु ध्रुवं तिष्ठन्न दृश्यते ॥ ३११–२२॥
योगदर्शनमेतावदुक्तं ते तत्वतोमया।
सांख्य ज्ञानं प्रवक्ष्यामि परिसंख्यान दर्शनम्॥ ३११–२६ ॥
सर्गप्रलयएतावान्प्रकृतेर्नृपसत्तम।
एकत्वं प्रलये चास्य बहुत्वं च यदाऽसृजत्॥ ३११–३३ ॥
एवमेवचराजेन्द्र विज्ञेयं ज्ञेयचिन्तकैः।
अधिष्टाना य इत्युक्त स्तस्याप्येतन्निदर्शनम् ॥ ३१२–३४ ॥
एकत्वं च बहुत्वं च प्रकृतेरनुत त्ववान्।

एकत्वं प्रलये चास्य बहुत्वं च प्रवर्तनात् ॥ ३११–२५ ॥
बहुधात्मानमकरो त्प्रकृतिः प्रसवात्मिका ।
तच्चक्षेत्रं महानात्मापञ्चविंशोऽधितिष्ठति ॥ ३११–३६ ॥
अधिष्ठातेतिराजेन्द्र प्रोच्यते यतिसत्तमैः ।
पञ्चविंशोप्रबुद्धात्माबुध्यमान इति स्मृतः ।
यदातुबुध्यतेऽऽत्मानं तदा भवतिकेवलः ॥ ३११–४४ ॥
सम्यग्दर्शनमेतावद्भाषितं तवतत्त्वतः ।
एवमेतद्विजानन्तः साम्यतां प्रतियान्त्युत ॥ ३११–४५ ॥
नत्वेवं वर्तमानानामावृत्तिर्विद्यते पुनः ।
विद्यतऽक्षरभावत्वं ये परात्परमव्ययम् ॥ ३११–४७ ॥
पश्येरन्नेकमतयो न सम्यक्तेषुदर्शनम् ।
तेऽव्यक्तं प्रतिपद्यन्ते पुनः पुनररिन्दम ॥ ३११–४८ ॥ इति

देहाद्यात्मभ्रमं दर्शयति—अहमेतानीत्यादिना । अक्षरः ॥ ५४ ॥ स्वरूपपरिणामशून्य इत्यर्थः । एतेन अहमर्थस्य जीवस्य वस्तुतोऽक्षरत्व-मेवेति सिध्यति परमात्मस्वामिके तद्भोगसाधने देहादौ स्वस्यस्वामित्व भोगसाधनत्वबुद्धिरूपममकारं दर्शयति–तदेवामित्यनेन । उक्त ममकार एव संसृति हेतुरितिभावः । तस्यैवाप्रतिबोधनादिति ‘ ममायमितिमन्वान ’ इत्यत्रै-वान्वेति । स्वभावतो विमलः विशुद्धः ममायामितिमन्वान इत्युक्तहेतोरशुद्ध एव शुद्धामल निषेवणात् शुद्धात्माताद्दग्भवतीत्यन्वयः। शुद्धामल पदं परमात्मपरम् । तादृगित्यत्र परमसाम्यं विवाक्षितम् । प्रकृतिसेवनया बद्धो जीवः परमात्मसेवनयामुक्तः परमात्मसमो भवतीत्यर्थः । नित्यप्रकृति सम्बद्धस्य प्रकृतिमोक्षः कथम्? इति करालजनकप्रश्नः । ‘ अनामयम् ’ इत्यादि परमात्मपरम् । अनीश्वरमिति—न विद्यते ईश्वरो यस्येति विग्रहः । “ पतिं विश्वस्यात्मेश्वरम् ” “ न तस्येशेकश्चन ” इति श्रुत्यर्थोऽत्रानुसंहितः । एकत्वमिति ॥ ४८ ॥ सृष्टौ मकृतेः परिणामानन्त्येन देहाद्यात्मभ्रमसम्भवेन

नानात्वम् । प्रलये च परिणामाभावेन एकत्वमित्यनुपदमेव स्फुटीभविष्यति । यदा पञ्चविंशतितत्त्वज्ञानं तदा चतुर्विंशतितत्त्वातिरिक्त पञ्चविंश जीवस्वरूपैकत्वज्ञाने स्वदेहादिगत नानात्वभ्रमो यदा नास्ति तदा ज्ञायमानं तत्तज्जीवगतमेकत्वमेव दर्शनम्। तत्तज्जीवगतैकत्वज्ञानं सम्यग्दर्शनमितियावत् । तत्तज्जीवेषु स्वस्वदेहाद्यात्मभ्रमदशायां नानात्वज्ञानं न सम्यग्दर्शनमिति च । प्रकृति मोक्षहेतुभूतं योगकालिकं स्वात्मनि परमात्मदर्शनं कथयति तदेत्यादिना —एतेन स्वतन्त्रात्मभ्रमः जीवपराभेदभ्रमश्च व्युदस्तो भवति । आत्मनि–स्वात्मनि जीवे आत्मा-परमात्मा दृश्यत इत्यर्थः । 'विज्ञानात्मा पुरुषःसपरेऽक्षरेआत्मनिसम्प्रतिष्ठते' (प्र. ४-९) इत्युक्तेः परमात्मनि जीवात्मा इत्यर्थस्य सम्भवेऽपि "यदर्चिमद्यदणुभ्योऽणु" (मुंड२—२—२) इत्यादि श्रुत्यर्थस्य तदेवाहुः २२० । इत्यनेनोक्तेः । आत्मनि - जीवे इत्यादि प्रागुक्तार्थएवात्रविवक्षतः सर्वभूतेषु ध्रुवं तिष्ठत्—इत्युक्तेश्च प्रलये प्रकृतेरेकत्वेन तदधिष्ठातुः परस्यैकत्वेन व्यवहारः । सृष्टौ प्रकृतेर्बहुत्वात्तदधिष्ठातुः परस्याऽपि बहुनामरूप भाक्त्वेन बहुत्वेन व्यवहारोऽत्रविवक्षितः ॥ ३३—३४ ॥ 'तच्च क्षेत्रं महानात्मापञ्चविंशोऽधितिष्ठति'॥ ३६ ॥ इत्यत्र परस्याप्यधिष्ठातृत्वं विवक्षितम्। जीवस्यक्षरकोटौकथनावसरे विष्णोः पञ्चविंशस्य 'यन्मर्त्यमसृजद्व्यक्तं तत्तन्मूर्त्यधितिष्ठति।' इत्याधिष्ठातृत्वस्य पूर्वमभिधानात् जीवस्य स्वरूपज्ञानदशायामक्षरकोटौ निवेशेन परस्य च षड्विंशत्वेन जीवस्यैव पञ्चविंशत्वेनाप्येतत्प्रघट्टके व्यवहारादिति बोध्यम्॥ एतेन "सदेव सौम्येदमग्र आसीत्" इत्यादिश्रुतिषु प्रलयकालिकं नामरूपविभागाभावलक्षणमेकत्वं विवक्षितं नतु परसम्मतमिति निर्णीतं भवति ॥ ४४ ॥ आत्मानम्—दृश्यतेऽस्मा तथात्मनि ॥ २० ॥ इति पूर्वोक्तदिशा जीवात्मगतं परमात्मानमित्यर्थः ।

"एकोवशी निष्क्रियाणां बहूनामेकं बीजं बहुधायःकरोति ।
तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम्॥

नित्योनित्यानां चेतनश्चेतनानामेको बहूनां योविदधातिकामान् ।
तत्कारणं सङ्ख्ययोगाधिगम्यं ज्ञात्वा देवं मुच्यते सर्वपाशैः ॥

इति निर्गुणश्रुतिसमनन्तर (श्वे–६) श्रुत्यनुसारात् ।

एतेन—

"ध्यानयोगेन संदृश्यस्सूक्ष्म आत्माऽऽत्मानिस्थितः ।

(याज्ञ. स्मृ. प्र. अ. ३-६४)

निस्सरन्ति यथा लोह पिण्डात्तप्ताः स्फुलिङ्गकाः ।
सकाशादात्मनस्तद्वदात्मानःप्रभवन्ति हि ॥

(याज्ञ. स्मृ. प्र. अ. ६७)

ज्ञेयं चारण्यकमहं यदादित्यादवाप्तवान् ।
योगशास्त्रं च मत्प्रोक्तं ज्ञेयं योगमभीप्सता ॥

(याज्ञ. स्मृ. प्र. अ. ११०)

अनन्यविषयंकृत्वा मनोबुद्धिस्मृतीन्द्रियम् ।
ध्येय आत्मा स्थितोयोसौ हृदये दीपवत्प्रभुः ॥

(याज्ञ. स्मृ. प्र. अ. १११)

सिद्धे योगे त्यजन् देहममृतत्वायकल्पते ।

(याज्ञ. स्मृ. प्र. अ. २०३) इति

याज्ञवल्क्यवचनानि व्याख्यातानि । एतेन पूर्वं "शुद्धामलनिषेवणात्' इत्यत्र निषेवणं योगरूपमितिबोधितम् । एवं पूर्वं तादृगित्यत्र परमात्मसाम्यमेव विवक्षितं तदपि सर्वविषयकज्ञानवत्वेन ।

विज्ञानात्मासहदेवैश्चसर्वैःप्राणाभूतानि संप्रतिष्ठन्ति यत्र ।
तदक्षरं वेदयते यस्तु सोम्य स सर्वज्ञस्सर्वमेवाविवेशेति ॥

(प्रश्न उ. ४-११)

इति श्रुतेरित्याशयेनाहसाम्यतामित्यादि साम्यताम्—साम्यमेव साम्यता । देवतेत्यादिवत्स्वार्थे तल्प्रत्ययः ॥ ४७ ॥ अक्षरभावत्वमिति — स्वार्थे त्वप्रत्ययः । अक्षरभाव इत्यर्थः । जीवस्य स्वरूपपरिणाम विरहस्य सार्वदि-

कत्वेन धर्मभूतज्ञानगत सङ्कोचविकासात्मक परिणामविरहः मुक्तिकालिक एवाक्षरभावः अत्र विवक्षितः । परमात्मसाम्यं च मुक्तस्यानेन धर्मेणेति चात्र विवक्षितम् । 'पश्येरन्नेकमतयः' इत्येव बहुषु कोशेषु (वा. रा. मु. कोशे च) पाठः । अयमेव पूर्वापरानुगुण्येन युक्तः । एकमतय इत्यत्र अक्षरपदार्थ-परमात्मजीवाभेदज्ञानवन्त इत्यर्थः । अत्र 'परात्परमव्ययम्' इत्यनेन दिव्योह्यमूर्तःपुरुषः—'अक्षरात्परतः परः' 'तथा विद्वान् नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्' इति च समानार्थकश्रुतिद्वयं प्रत्यभिज्ञाप्यते । तत्र च 'परतोऽक्षरात्पर' इति समानाधिकरणनिर्देशः । परतोऽक्षरान्मुक्तात्पर इति तदर्थः । एवं परात्परमित्यत्र नामरूपाद्विमुक्तात्परमित्यर्थः । "अथ परा-यया तदक्षरमधिगम्यते" "यथा सुदीप्तात्पावकाद्विष्फुलिङ्गास्सहस्रशः प्रभवन्ते सरूपाः । तथाक्षराद्विविधास्सौम्य भावाः प्रजायन्ते तत्र चैवापियन्ति" 'अक्षरात्परतः परः' 'तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति ।" इति श्रुतयोऽत्रानुसंहिताः । अक्षरस्य परमात्मनः प्राप्यत्वं प्रकाशवदग्नयादिदृष्टान्तेनाक्षरसरूपस्य ज्ञानविकासवतो जीवस्य जन्यत्वं परमात्मनः अक्षरात्परत्वं, मुक्तस्याक्षरसाम्यं अक्षरपुरुषस्य नामरूपाद्विमुक्ता, त्परत्वं च जीवब्रह्मभेदाभ्युपगन्तॄणामेव पक्षे सङ्गच्छते नतु जीवपराभेदपक्ष इति भावः । एतत्प्रघट्टकमभिप्रेत्यैव वेदान्तसारे (१-२-२३) भगवता "अथवा सामानाधिकरण्येन परतोऽक्षरात्पञ्चविंशकात्पर इति भेदव्यपदेशः" इति 'अक्षरात्परतः पर' इति श्रुत्यर्थोऽभ्यधायि । पूर्वश्रुतावक्षरसरूपत्वेन प्रकाशवदग्नयादिदृष्टान्तेन च ज्ञानवतां जीवानां जन्मोक्त्या अक्षरात्परत-इत्यत्राक्षरशब्दः जीवपरः । "यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् । तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति" (मुं. उ. ३-१) इत्युत्तरश्रुतौ विद्वानित्यस्याभावेऽपि वाक्यार्थ पूर्तिसंभवे विद्वानिति पदेन मुक्तस्य ज्ञानसाम्य विवक्षासूचनपूर्वकं ज्ञानवतो जीवस्य परमात्म साम्यं वक्ष्यते । तत्पूर्वश्रुतौ च 'जुष्टं यदा पश्यत्यन्यमीशमस्य

महिमानमितिवीतशोकः (मुं. उ. ३-२-२) इत्यत्र ईशजीवभेदं ईशमहिमानं च पश्यन् जीवः प्रस्तुतः । महिमा च 'यस्सर्वज्ञः सर्वविद्यस्यैष महिमाभुवि' इति (मु. उ. २-२-७) पूर्वं सर्वज्ञस्य श्रुतः । एतत्पूर्वार्धेऽपि 'यदापश्यः' इति सगुणसाक्षात्कारवानेव विवक्षितः । अत्र कर्तारं ब्रह्मयोनिम् । इत्यनेन 'तथाक्षरात्संभवतीहविश्वम्' (मुं. उ १-१-७) इति श्रुत्यर्थस्योपस्थापनेन तदुत्तरं 'यस्सर्वज्ञः सर्ववित्' इति सर्वज्ञत्वमप्युपस्थापितम् । एवं च 'विद्वान् साम्यमुपैति' इति वाक्ये ज्ञानवतस्सर्वज्ञत्वेनोपस्थितेन परमात्मना साम्यं ज्ञानसाम्य एव पर्यवस्यति । 'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः' (गी. १४-२) 'स गुणान् समतीत्यैतान्ब्रह्मभूयायकल्पते, (गी १४-२६) इति गीतायामुपक्रमोपसंहारयोः मुक्तस्य ब्रह्मणा साधर्म्यं ज्ञानसाम्यमेवेति एतच्छ्रुति तात्पर्य विषयीभूत एवार्थो निर्णीतः । सर्वज्ञत्व योग्यस्य जीवस्य ज्ञानविकास प्रतिबन्धक पापसद्भावेन किंचित्पाप नाशेन जन्मकालमारभ्यशरीरेन्द्रियद्वारकं किंचिज्ज्ञानं ज्ञानप्रतिबन्धक कतिपयपापविगमेन परमात्मज्ञानसमनन्तरं ततोऽतिशयितं ज्ञानं मुक्त्युपायभूत ज्ञानपूर्त्या पुण्यपापसामान्यविधूनने सूक्ष्मशरीरस्य कर्मवासनायाश्च गातिमध्येऽपगमे प्रतिबन्धकसामान्य विगमेन सर्वज्ञत्वमितिबोधनाय 'तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' इत्यत्र विद्वान्, पुण्यपापे विधूय, निरञ्जनः, परमम् इति पदान्युपात्तानि । उत्तरत्रापि चिदचितोः प्रलयेऽक्षरत्वैकत्व प्रदर्शनेन प्रलयकालिकमेवैकत्वमिति निर्धार्य जीवस्य परमात्मसाम्यं स्थिरीक्रियते ।

अविद्यामाहुरव्यक्तं सर्गप्रलयधर्मिणीम् ।
सर्गप्रलयनिर्मुक्तो विद्यो वै पञ्चविंशकः ॥ ३१२-२ ॥
ज्ञानमव्यक्तमित्युक्तं ज्ञेयो वै पञ्चविंशकः ।
तथैवज्ञानमव्यक्तं विज्ञाता पञ्चविंशकः ॥ ३१२-९ ॥
अक्षरञ्च क्षरश्चैव यदुक्तं तान्निबोधमे ॥ ३१२-१० ॥

उभावेतौ क्षरावुक्तावुभावेतौ क्षराक्षरौ (नचाक्षरौ)।
यदा तु गुणजालं तदव्यक्तात्मनि संक्षिपेत्।
तदा सहगुणैस्तैस्तु पञ्चविंशो विलीयते॥ १५॥
गुणा गुणेषु लीयंते तदैका प्रकृतिर्भवेत्।
क्षेत्रज्ञोऽपि यदा तात तत् क्षेत्रे संप्रलीयते॥ १६॥
तदाक्षरत्वं प्रकृतिर्गच्छते गुणसंज्ञिता।
निर्गुणत्वं च वैदेह गुणेष्वप्रतिवर्तनात्॥ १७॥
एवमेव च क्षेत्रज्ञः क्षेत्रज्ञानपरिक्षयात्।
प्रकृत्या निर्गुणस्त्वेष इत्येवमनुशुश्रुम॥ १८॥
क्षरो भवत्येष यदा तदा गुणवती मिथः।
प्रकृतिं त्वभिजानाति निर्गुणत्वं तथाऽऽत्मनः॥ १९॥
तदा विशुद्धो भवति प्रकृतेःपरिवर्जनात्।
अन्योऽहमन्येयमिति यदा बुद्ध्यति बुद्धिमान्॥ २०॥
तदैषा त्वन्यतामेति न च मिश्रत्वतां व्रजेत्।
प्रकृत्या चैव राजेन्द्र मिश्रो ह्यन्यश्च दृश्यते॥ २१॥
अयमत्र भवेद्बन्धुरनेन सह मे क्षमम्।
साम्यमेकत्वतां यातो यादृशस्तादृशस्त्वहम्॥ २७॥
तुल्यतामिह पश्यामि सदृशोऽहमनेन वै।
अयं हि विमलो व्यक्तमहमीदृशकस्तथा॥ २८॥
योऽहमज्ञानसंमोहादज्ञया संप्रवृत्तवान्।
स सङ्गयाऽहं निस्सङ्गस्थितःकालमिमं त्वहम्॥ ३१२-२९॥
अनयाऽहं वशीभूतःकालमेतन्न बुद्धवान्।
उच्चमध्यमनीचांतां तामहं कथमावसे॥ ३१२-३०॥
सहवासं न यास्यामि कालमेतद्धि वञ्चनात्।
वञ्चितोऽस्म्यनया यद्धि निर्विकारो विकारया॥३१२-३२॥

न चायमपराधोऽस्याह्यपराधो ह्ययं मम ।
योऽहमत्राभवं सक्तःपराङ्मुखमुपस्थितः ॥ ३१२-३३ ॥
न ममात्राऽनया कार्यमहङ्कारकृतात्मना ॥ ३१२-३६ ॥
आत्मानं बहुधा कृत्वा योऽयं भूयो युनक्ति माम् ।
इदानीमेष बुद्धोऽस्मि निर्ममो निरहङ्कृतः ॥ ३१२-३७ ॥
ममत्वमनया नित्यमहङ्कारकृतात्मकम् ।
अपेत्याहमिमां हित्वा संश्रयिष्ये निरामयम् ॥ ३१२-३८ ॥
अनेन साम्यं यास्यामि नानयाऽहमचेतसा ।
क्षमं मम सहानेन नैकत्वमनया सह ॥ ३१२-३९ ॥
एवं परमसम्बोधात्पञ्चविंशोऽनुबुद्धवान् ।
अक्षरत्वं निगच्छेत त्यक्त्वाक्षरमनामयम् ॥ ३१२-४० ॥
निर्गुणं परमं दृष्ट्वा तादृग् भवति मैथिल ॥ ३१२-४१ ॥
सांख्ययोगौ मया प्रोक्तौ शास्त्रद्वयनिदर्शनात् ।
यदेव सांख्यशास्त्रोक्तं योगदर्शनमेव तत् ॥ ४४ ॥
पृथक्चैव हि तच्छास्त्रमित्याहुः कुशला जनाः ॥ ४६ ॥
पञ्चविंशात्परं तत्वं (परत्वेन) न पश्यन्ति नराधिप ।
सांख्यानां तु परं तत्वं (तन्त्रं) यथावदनुवर्णितम् ॥ ४७ ॥
बुद्धमप्रतिबुद्धं च बुध्यमानं च तत्वतः ।
बुध्यमानं च बुद्धं च प्राहुर्योगानिदर्शनम् ॥ ४८ ॥
अव्यक्तबोधनाच्चापि बुद्ध्यमानं वदन्त्युत ।
पञ्चविंशं महात्मानं नचासावपि बुद्ध्यते ॥ ३१३-६ ॥
षड्विंशं विमलं बुद्धमप्रमेयं सनातनम् ।
स तु तं पञ्चविंशञ्च चतुर्विंशञ्च बुद्ध्यते ॥ ३१३-७ ॥
अव्यक्तं तत्तु तद्ब्रह्म बुद्ध्यते तात केवलम् ॥ ३१२-८ ॥
केवलं पञ्चविंशञ्च चतुर्विंशञ्च पश्यति ।

बुध्यमनो यदात्मानमन्योऽहमिति मन्यते ॥ ३१३-९ ॥
तदा प्रकृतिमानेष भवत्यव्यक्तलोचनः ।
बुध्यते परमंबुद्धं विशुद्धमचपलोपमम् ॥ ३१३-१० ॥
षड्विंशं राजशार्दूल तदा बुद्धत्वमाव्रजेत् '
ततस्त्यजतिसोऽव्यक्तं सर्गप्रलयधर्मि वै ॥ ३१३-११ ॥
निर्गुणः प्रकृतिं वेद गुणयुक्तामचेतनाम् ।
ततः केवलधर्माऽसौ भवत्यव्यक्तदर्शनात् ॥ ३१३-१२ ॥
केवलेन समागम्य विमुक्तोऽऽत्मानमाप्नुयात् ।
एतं वै तत्त्वमित्याहुर्निस्तत्त्वमजरामृतम् ॥ ३१३-१३ ॥
तत्त्वसंश्रयणादेव तत्त्ववान्न च मानद ।
पञ्चविंशति तत्त्वानि प्रवदन्ति मनीषिणः ॥ ३१३-१४ ॥
न चैष तत्त्ववांस्तात निस्तत्त्वस्त्वष बुद्धिमान् ।
एष मुञ्चति तत्त्वं हि क्षिप्रं बुद्धत्वलक्षणम् ॥ ३१३-१५ ॥
षडविंशोऽहमिति प्राज्ञो गृह्यमाणोऽजरामरः ।
केवलेन बलेनैव समतां यात्यसंशयम् ॥ ३१३-१६ ॥
षड्विंशेन प्रबुद्धेन बुध्यमानोह्यबुद्धिमान् ।
एवं नानात्वमित्युक्तं साङ्ख्यश्रुतिनिदर्शनात् ॥ ३१३-१७ ॥
चेतनेन समेतस्य पञ्चविंशतिकस्य च ।
एकत्वं वै भवत्यस्य यदा बुद्ध्या न बुध्यते ॥ ३१३-१८ ॥
बुध्यमानोऽप्रबुद्धेन समतां याति मैथिल ।
सङ्गधर्मा भवत्येष निस्सङ्गात्मा नराधिप ॥ ३१३-१९ ॥
निस्सङ्गात्मानमासाद्य षड्विंशकमजं विभुम् ।
विभुस्त्यजति चाव्यक्तं यदा त्वेतद्विबुध्यते ॥ ३१३-२० ॥
चतुर्विंशमसारञ्च षड्विंशस्य प्रबोधनात् ।
एष ह्यप्रतिबुद्धश्च बुध्यमानश्च तेऽनघ ॥ ३१३-२१ ॥

प्रोक्तो बुद्धश्च तत्त्वेन यथाश्रुति निदर्शनात् ।
नानात्वैकत्वमेतावद्द्रष्टव्यं शास्त्रदृष्टिभिः ॥ ३१३-२२ ॥
मशकोदुम्बरे यद्वदन्यत्वं तद्वदेतयोः ।
मत्स्योदके यथा तद्वदन्यत्वमुपलभ्यते ॥ ३१३-२३ ॥
एवमेवावगन्तव्यं नानात्वैकत्वमेतयोः ।
एवद्धिमोक्ष इत्युक्तमव्यक्तज्ञानसंज्ञितम् ॥ ३१३-२४ ॥
पञ्चविंशतिकस्यास्य योऽयं देहेषु वर्तते ।
एष मोक्षयितव्येति प्राहुरव्यक्तगोचरात् ॥ ३१३-२५ ॥
सोऽयमेवं विमुच्येत नान्यथेति विनिश्चयः ।
परेण परधर्मा च भवत्येष समेत्य वै ॥ ३१३-२६ ॥
विशुद्धधर्मा शुद्धेन बुद्धेन च स बुद्धिमान् ।
विमुक्तधर्मा मुक्तेन समेत्य पुरुषर्षभ ॥ ३१३-२७ ॥
वियोगधर्मिणाचैव वियोगात्माभवत्युत ।
विमोक्षिणा विमोक्षश्च समेत्येह तथा भवेत् ॥ ३१३-२८ ॥
शुचिकर्मणा शुचिश्चैव भवत्यमितदीप्तिमान् ।
विमलात्मा च भवति समेत्य विमलात्मना ॥ ३१३-२९ ॥
केवलात्मा तथा चैव केवलेन समेत्य वै ।
स्वतन्त्रश्च स्वतन्त्रेण स्वतन्त्रत्वमवाप्नुत ॥ ३१३-३० ॥
एतावदेतत्कथितं मया ते तथ्यं महाराज यथार्थतत्त्वम् ।
अमत्सरस्त्वं प्रतिगृह्य चार्थं सनातनं ब्रह्म विशुद्धमाद्यम् ॥३१३-३१॥
कराळ मा ते भयमस्तु किञ्चिदेतच्छ्रुतं ब्रह्म परं त्वयाद्य ।
यथावदुक्तं परमं पवित्रं विशोकमत्यन्त मनादिमध्यम् ॥
॥ ३१३-३८ ॥
अगाधजन्मामरणं च राजन्निरामयं वतिभयं (नित्यमजं) शिवं च ।
समीक्ष्य मोहं त्यज चाद्य सर्वं ज्ञानस्य तत्वार्थमिमं विदित्वा
॥ ३१३-३९ ॥

भीष्म उवाच

एतदुक्तं परं ब्रह्म यस्मान्नावर्तते पुनः ।
पञ्चविंशो महाराज परमर्षिनिदर्शनात् ॥ ३१२-४२ ॥
पुनरावृत्तिमाप्नोति परं ज्ञानमवाप्य च ।
नावबुध्यति तत्वेन बुध्यमानोऽजरामरम् ॥ ४३ ॥
येन क्षराक्षरे वित्ते भयं तस्य न विद्यते ।
विद्यते तु भयं तस्य यो नैतद्वेत्ति पार्थिव ॥ ४४ ॥

इति ।

३१२-२ अत्र प्रकृतेः सर्गप्रलयधर्मित्वमाभिधाय पञ्चविंशस्य सर्गप्रलय सम्बन्धविरहवतो मुक्तस्य ज्ञानवत्वमाभिधीयते । विद्या अस्यास्तीति विद्यः, अर्श आद्यच्–९–ज्ञानमिति ज्ञायतेऽनेनेति ज्ञानम् , ज्ञानकरणमिति यावत् । भावप्रत्ययान्तत्वे मुख्यज्ञानत्वस्याऽव्यक्तेऽसम्भवात् प्रलये ज्ञानविकासशून्यस्य पुंसः सृष्टौ ज्ञानविकासेहेतुत्वेन प्रकृतेर्ज्ञानकरणत्वसम्भवात् 'एतज् ज्ञानमिति प्रोक्तम्' (गी. १३) इत्यत्र ज्ञानशब्दवदयमपि करणप्रत्ययान्त एव । 'गुणानां महदादीनामुत्पद्यन्ते परम्पराः । अधिष्ठानं क्षेत्रमाहुरेतत्तत्पञ्चविंशकम्' इति पूर्वश्लोकोक्तमहदादय एव गुणजाल (१५) मित्यत्र गुणाः । महदादिभिस्सहजविस्याऽव्यक्ते लयोऽत्र उक्तः ।

प्रकृतेः विषमपरिणामशून्यत्वेनाक्षरत्त्वमेकत्वमभिधाय "एवमेव च क्षेत्रज्ञः" इत्यत्र जीवस्य ज्ञानपरिणामशून्यत्वेनाक्षरत्वैकत्वे प्रतिपादिते । अतो 'ऽव्यक्तमक्षरेलीयते' इति श्रुतावक्षरशब्दार्थत्वं प्रकृतेर्जीवानां च विवक्षितमिति श्रीभाष्यकृतां निर्णयो युक्त एव । श्रुतावव्यक्तस्यावस्थाभेदांशे परं विशेषःप्रतिपादितः । 'तदैषात्वन्यतामेतीत्यस्यस्थाने (२१) 'तदैष तत्वतामेति, इति नीलकण्ठ सम्मतःपाठः । तत्पाठेऽपि पञ्चविंशतत्त्वतामित्यर्थः । 'अन्यतामेति' इति पाठे अन्यताज्ञाननिबन्धनं अन्यत्वं ज्ञायमानमेव विवक्षितम् । अन्यतायास्सार्वदिकत्वादित्याह—प्रकृत्या चेत्युत्तरार्धेन ॥ ३२ ॥ अत्र "सहवासं न यास्यामि" इत्यनेन अहङ्कार ममकारयोःप्रकृति सहवास-

एव निदानमिति सूचितम् ॥ ३८ ॥ निरामयम्—उपक्रमे अनामयत्वेनोक्तं नारायणम् इत्यर्थः । 'इदानीमेष बुद्धोऽस्मि' ॥ ३७ ॥ इति पूर्वं, 'एवं परमसंबोधात्पञ्चविंशोऽनुबुद्धवान्' ४० । इत्युत्तरत्र चोक्तेः । परमस्य षड्विंशकस्य संबोधादिति नीलकण्ठोऽपि व्याचख्यौ । बुद्धत्वं चोत्तरत्र

'बुद्धयते परमं बुद्धं विशुद्धमचलोपमम् ।
षड्विंशं राजशार्दूल तदा बुद्धत्वमाव्रजेत् ॥ ३१३-१० ॥

इति षड्विंशज्ञानवत एव वक्ष्यते । अत एव 'निर्गुणं परमं दृष्ट्वा तादृग्भवति मैथिल ॥ ३१२–४२ ॥ इत्युत्तरोक्तिस्सङ्गच्छते । अत्र परमशब्द प्रयोगः 'स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति' (मुं. उ. इति श्रुतिमभिप्रेत्य । श्रुतौ च परमशब्दः जीवब्रह्माभेदाविवक्षां विघटयन् तयोस्साम्यविवक्षां द्रढयति । इति व्यासेन निर्धारितं भवति । ४२ क्षरं त्यक्त्वानामयमक्षरत्वं निगच्छेतेति पूर्वार्धे योजना । अनामयमित्यनेन प्रलयकालिकाक्षरत्वं पूर्वोक्तं व्युदस्तं भवति । प्रलयकालिकं च ज्ञानसङ्कोचविकासावस्थाद्वयविरहेण ज्ञानातिसङ्कुचितावस्थारूपम् । तद्धि दुष्टमेव—मुक्तिकालिकं तु पूर्णज्ञानविकासावस्थारूपम्, निर्दुष्टम् । इदं च अक्षरत्वं 'अथपराययातदक्षरमधिगम्यते' इत्यादौ परमात्मनिष्ठतया विवक्षितम् । तेन धर्मेण मुक्तस्य साम्यमेव 'सयो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति' इति श्रुतौ विवाक्षितामिति व्यासेन निर्णीतं भवति ॥ ४७ ॥ यदेव शास्त्रम् ४४ इति पूर्वोक्ता पृथक् पक्ष एव युक्त इत्याह—साङ्ख्यानामति षड्विंशानङ्गीकर्तृ पृथक् शास्त्रवादिमते 'नित्योनित्यानां चेतनश्चेतनानाम्' 'तत्कारणं साङ्ख्ययोगाधिगम्यं ज्ञात्वादेवं मुच्यते सर्व पाशैः' ॥ (श्वे. उ. ६) इति श्रुतिविरोधात् साङ्ख्यानामपि षड्विंशस्सम्मत एव इति पूर्वोक्त सिद्धान्त एव युक्तः इति भावः । कपिलासुरिसंवादादौ चायमेव सिद्धान्त इति स्फुटीभविष्यति । 'व्यतिरिक्तं नामासुरे पुरुषः पञ्चविंशक - क्षेत्रज्ञः' इत्युपक्रम्य 'कूलमन्योवृक्षोऽन्यः मशकोऽन्योऽन्य उदुम्बरोऽन्या-

मत्स्योऽन्यदुदकं मुञ्जमन्यदन्येषीकान्यदुदकमन्यत्पुष्करपर्णं तथान्यत् क्षेत्र क्षेत्रज्ञोऽन्यःपुरुषःपञ्चविंशकः अन्यश्चास्मात् क्षेत्रज्ञ इति' (३०३-वा. २५९ वा. रा. शा. मुद्रितकोशे) अत्र दृष्टान्तास्सर्वे क्षेत्र जीव भेदे, जीव पर भेदे चानुसन्धेयाः। 'द्रष्टा क्षेत्रज्ञो द्रष्टव्य मव्यक्तम्' इत्युपक्रम्य 'एवमेवासुरे ऽन्य दृष्टव्यमन्यःपुरुषःपञ्चविंशतितत्वमन्यदन्योऽस्मात् क्षेत्रज्ञ इति' कपिला-सुरि संवादे, एतेन पूर्वं (क. आ. सं.) "यदप्युक्तं किं परात्परमिति—अत्र ब्रूमः, परात्परं नामासुरे कर्मेन्द्रियेभ्यः परं बुद्धीन्द्रियमित्युपक्रम्य पर्वक्रमेण परात्परस्य निरूपणावसरे परमेतेभ्योऽन्यः क्षेत्रज्ञस्त्वसर्गप्रलयधर्मः" इत्याद्युक्तौ क्षेत्रज्ञः जीवःपरमात्मा च। तत्र जीवापेक्षया परमात्मनोऽपि षड्विंशकस्य परत्वं विवक्षितामति बोध्यम्——

योगाश्च साङ्ख्याश्च वदन्ति सम्यक्
न पञ्चविंशात्परमास्ति किञ्चित्।
अथान्यथा पश्यसि न त्वमेतं
वयं तु पश्याम गुरोर्नियोगात् ॥ ३०४-१५९ ॥

इत्युपक्रम्य 'प्रकृतिं क्षेत्रज्ञं च परःक्षेत्रज्ञः षड्विंशकोऽनुपश्यति। न तु पञ्च-विंशः क्षेत्रज्ञः प्रकृतिर्वा परं क्षेत्रज्ञं पश्यति।' इति नारदसनत्कुमार संवादे, 'शुचिर्हि पञ्चविंशकस्तथैव षड्विंशक तत्वमवबुध्यते यदा तदा शुचिर्भवेदिति' (३०५ वा. १७८) इति संयमन पञ्चशिख संवादे, च स्फुटम् (३१२·४८) तत्वतोबुद्ध्यमानस्य बुद्धत्वमत्र विवक्षितम्, अत्राप्युत्तरत्रायमेव पूर्वमुक्तोऽर्थः सिद्धान्तयिष्यते। ३१३-६ पञ्चविंशं बुध्यमानं वदन्तीति पूर्वेणान्वयः असावपि-पञ्चविंशोपि षड्विंशं न बुध्यत इत्यन्वयः। "बुध्यते परमं बुद्धम्, १०१ इत्यादि पाठ एव बहुषु कोशेषु (वा. रा. शा. मु. कोशेऽपि) दृश्यते इत्ययमेव प्रामाणिकसम्मतः ॥ १५॥ षड्विंशोऽहमिति गृह्यमाणो बुद्धत्व-लक्षणं तत्वं मुञ्चतीत्यन्वयः। जीवब्रह्माभेदज्ञानवतो न बुद्धत्वमित्येतेनोक्तं भवति। अयमेवार्थः स्थिरीक्रियते—चेतनेने १८ त्यादिना। अत्र चेतन-

शब्दः 'नित्यो नित्यानां चेतन श्चेतनानाम्' इति श्रुति घटक प्रथमान्त-चेतनपदसमानार्थकः षड्विंशपरः । ॥ २० ॥ षड्विंशस्य प्रबोधनादिति त्यजतीति पूर्वेणान्वेति ॥ २१ ॥ अव्यक्तवेदिता अव्यक्तजीवस्वरूपवेदिता च बुध्यमान उक्तः, षड्विंशजीवभेदवेदिताबुद्धः । उक्त ज्ञानशून्योऽप्रतिबुद्ध इति निष्कर्षः यथाश्रुति निदर्शनादित्यनेनोक्तार्थस्य श्रुत्यभिप्रेतत्वं दर्शितम् ।

"नानात्वैकत्वमेतावत्" "नानात्वैकत्वमेतयोः" ॥ २४ ॥ इत्यत्र मशकोदुम्बरादिदृष्टान्तेन नानात्वं तात्विकमेकत्वं भ्रमनिबन्धनमिति विवेकः । 'एतयोः, इत्यस्य अव्यक्तपञ्चविंशयोः, पञ्चविंशषड्विंशयोश्चेत्यर्थः । 'एकत्वं वै भवत्यस्य' इति पूर्वोक्त्यनुसारात् । "एतद्धिमोक्ष इत्युक्तमव्यक्तज्ञान संज्ञितम्" । इत्यत्रा व्यक्तज्ञानमपि पञ्चविंशषड्विंशभेदज्ञानकालिकं पञ्चविंश-षड्विंशभिन्ना व्यक्तज्ञानम् । न तु अव्यक्तपञ्चविंशभेदमात्रज्ञानम् । तावन्मात्रे-णाव्यक्तत्यागरूप मोक्षस्य प्रागनभिधानात् । मोक्ष इत्यत्र करणे घञ्, मोक्षसाधनमित्यर्थः ॥ २५ ॥ मोक्षयितव्य इति । अव्यक्तगोचरात् इत्यत्र प्रकृतिसामान्यं विवक्षितम् "ओमित्येवात्मानं ध्यायथ स्वास्तिवऽपाराय तमसऽपरस्तात्" (मुं. उ. २–६) इत्यत्र प्रकृतिदेशादूर्ध्वमेव मुक्त्यभि-धानेन तदनुसारेण पूर्वं 'प्रकृतिं चाप्यतिक्रम्य गच्छत्यात्मानमव्ययम्" ॥ ३०७-१६ ॥ इत्युक्त्या अत्रापि तस्यैवार्थस्य विवक्षावश्यं भावात् प्रकृति-देशातिक्रमणाभावे मोक्ष एव नघटेतेत्याह—सोऽयमेवं विमुच्येत नान्यथेति विनिश्चयः" इति 'सयोहवैतत्परमं ब्रह्म वेद ब्रह्मैव भवती'त्यत्र प्रकृतिदेशाति-क्रमणानन्तरं परमात्मधर्म वत्त्वमेव विवक्षितमिति स्थापयति 'परेणपरधर्माचे'-त्यनेन २६ । अत्र परेण, समेत्य, इति पदद्वयेन 'सय' इत्याद्यव्यवहितपूर्वा 'परात्परं पुरुष मुपैति दिव्यम्" इति श्रुतिऽप्रत्यभिज्ञाप्यते । पूर्वं "तादृग्भवति" "विद्यतेऽक्षर भावत्वम्" "अनेन साम्यं यास्यामि" "अक्षरत्वं निगच्छेत" इत्यादिना "यथासुदीप्तात्पावकात्—तथा क्षरा-द्विविधास्सौम्यभावाः" अक्षरात्परतऽपरः "निरञ्जनऽपरमं साम्यमुपैति" इति

श्रुतितात्पर्य निर्णयमुखेन "विद्यतेऽक्षरभावत्वम्" येपरात्परमव्ययं । पश्येरन्नेक-मतयो न सम्यक्तेषु दर्शनम् ।" इत्युक्तार्थ स्साधितः । तेन 'परात्परं पुरुष-मुपैति दिव्यम्' इत्युक्तानुभवो मुक्तिकालिकः जीवब्रह्माभेदवादिनां न घटत इत्यपि सूचितम् । पूर्व श्रुतौ जीवब्रह्माभेदविघटननात्र परमशब्द-प्रयोगेण च जीवब्रह्मा भेदो "ब्रह्मैव भवति" इत्यत्र न विवक्षितः । 'तथा विद्वान्नाम रूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्' इति श्रुतौ दिव्यमुपैतीत्यत्र 'स्वस्तिवः पाराय तमसः परस्तात्' इति प्राक्तन श्रुत्यनुसारेणाप्राकृतदेश एव ब्रह्म प्राप्तिर्विवक्षिता । तत्र च परात्परत्वं 'अक्षरात्परतः परः' इति प्राक्तनश्रुत्यर्थ निर्णयानुसारेण नामरूपाद्विमुक्तादपि परत्वरूपं विदितम् "स यो ह वै तत्परमं ब्रह्मवेद" इत्यत्रापि नामरूपाद्विमुक्तात्पर एव परम शब्दार्थः । एवं च ब्रह्मैव भवतीत्यत्र—जीवे ब्रह्माभेद विवक्षा नैव घटेत अतः "निरञ्जनः परमं साम्यमुपैति ।" इति श्रुत्यनुसारेण एव-शब्दस्य इवार्थ-कत्वेन सादृश्य विवक्षा पूर्वोक्तैव साधीयसी । एवशब्दस्यावधारणार्थकत्वेऽपि भवतीत्यत्र भूधात्वर्थ धर्मे 'घटोनीलोभवति, इत्यत्र 'नीलवृत्त्यसाधारण धर्मा-श्रयो घट' इति व्युत्पत्तिवादव्यवस्थापित प्रक्रियया, ब्रह्म वृत्तित्वान्वय विवक्षया 'ब्रह्मवृत्तिधर्माश्रयो ब्रह्मवेत्ता' इति बोधः । धर्मश्चाक्षरत्वादिरूपः । यद्यपि समानाधिकरण पदार्थयोरभेदस्थल एव भू धात्वर्थस्यासाधारणधर्मरूप-तामभ्युपेत्य तत्प्रकारक बोधो व्युत्पत्तिवादेऽभ्युपगत इति भेदस्थले तथा निर्वाहो न घटते अतिप्रसङ्गात् । तथापि 'अथ परा यया तदक्षरमधिगम्यते, 'निरञ्जनः परमं साम्यमुपैति' 'परात्परंपुरुषमुपैतिदिव्यम्' मुक्तोपसृप्य-व्यपदेशाच्च' 'भेदव्यपदेशात्' 'भोगमात्रसाम्यलिङ्गाच्च, इत्यादिश्रुति-सूत्रपर्यालोचनेन धर्मप्रकारकबोध एवात्र श्रुतेस्तात्पर्यमिति धर्मप्रकारकबोधा-भ्युपगम एव युक्तः । न तु परसंमत निधर्मकबोधः ।

अत एव 'गगनं द्रव्यं भवति' इत्यादौ भवत्यर्थे द्रव्यवर्तितावोधस्य तान्त्रिका-भ्युपगतत्वस्योक्तिः सिद्धान्त बिन्दुटीकायां ब्रह्मानन्दसरस्वतीनां सङ्गच्छते ।

एवं च 'ब्रह्मैव भवति' इत्यत्र जीवब्रह्माभेदविवक्षाया असंभवेन मुक्तस्य ब्रह्मगत धर्मसंबन्ध एव न तु ब्रह्माभेद इति व्यासेन निर्धारितं भवति। एतेन 'अभयं वै ब्रह्म भवति य एवं वेद' (बृ उ ६-४-२९) इत्यत्रापि ब्रह्मसाधर्म्य मेव विवक्षितमिति सिद्धम्। 'विमलश्च विशुद्धश्च शुद्धामल निषेवणात् अशुद्ध एव शुद्धात्मा तादृग्भवति पार्थिव ॥ ३१०-३११ ॥ इति प्रागुक्तार्थः प्रकृतिमण्डलमतिक्रम्य मुक्तिकाले इति स्थापयति-विशुद्धधर्मेत्यादिना शुद्धेन समेत्य विशुद्धधर्मा भवतीति योजना। शुद्धेन-विद्याविरोधितया अविद्या शब्दवाच्य प्रकृतिसंबन्धरहितेनेत्यर्थः। विशुद्धधर्मा विशुद्धत्वं-विद्याविरोधि-राहित्यम्। एतेन धर्मभूतज्ञानविकास प्रतिबन्धकविरह उक्तः। बुद्धेन-सर्वज्ञेन समेत्य बुद्धिमान्-सर्वज्ञो भवति एतेन 'नामरूपाद्विमुक्तःपरात्परं पुरुषमुपैतिदिव्यम्' इति पूर्वश्रुत्यर्थ उक्तः। अथ "तरति शोकं तरतिपाप्मानं गुहाग्रन्थिभ्यो विमुक्तोऽमृतो भवति" इति श्रुत्यर्थ उच्यते—विमुक्तधर्मेत्यादिना विमुक्तधर्मेत्यादित्रयं विमुक्त इत्यन्त श्रुत्यर्थः। 'स्वस्ति वः पाराय तमसः परस्तात्' इति श्रुत्यैकरस्यानुसन्धानासिद्धम् अमृतो भवतीत्यस्य तात्पर्यमेव 'शुचिकर्मणा' इत्यादिना प्रदर्श्यते। "परंज्योतिरुप संपद्य स्वेन रूपेणा भिनिष्पद्यते। स तत्र पर्येति जक्षन् क्रीडन् रममाणः" (छां उ-८-१२-३) इत्याद्युक्तमुक्तव्यापाराः कर्माऽमूलकत्वेन परिशुद्धा एवेति भावः। उक्त व्यापारार्थदेहसंबन्धं "स एकधा भवति त्रिधा भवति" इति श्रुत्यभिप्रेतं दर्शयति विमलात्मेति। "आत्मा यत्नो धृतिर्बुद्धिस्स्वभावो ब्रह्मवर्ष्म च" इति कोशादत्रात्म शब्दोवर्ष्मपरः। विमलत्वं च रजस्तमश्शून्यत्वरूपम्। सृष्टि-स्थितिलयार्थानिरुद्ध प्रद्युम्न सङ्कर्षणरूपाणां शुद्धसृष्टिलयवन्नमुक्तविग्रहानियत लय इत्याह—केवलात्मे ति "साक्षी चेता केवलो निर्गुणश्च" इति श्रुत्युक्त गुणत्रयाधिष्ठानशून्यः सृष्ट्यादिव्यापारविरहवान् 'परास्यशक्तिः' इत्याद्युक्त ज्ञानादिषाड्गुण्यपूर्णः केवलेनेत्यत्र केवलशब्दतापर्यविषयः परवासुदेवः। अयमेव 'परात्परंपुरुषमपैतिदिव्यम्' इत्यत्र विवक्षितः पुरुषः।

केवलात्मा नियतशुद्धसृष्ट्यादिव्यापारविरहवान् । पुनरावृत्तिप्रयोजककर्मभगवदिच्छाविरहमाह—स्वतन्त्रश्चेति ३१ उत्तरार्धस्य 'नावेदनिष्ठस्य जनस्य राजन् प्रदेयमेतत्परमं त्वया भवेत्' इत्यनेनान्वयः ॥ ४३ ॥ बुध्यमानस्य प्रकृतिपुरुष विवेकज्ञानवतोऽपि तत्वतः परमात्मज्ञानाभावेन पुन रावृत्तिरेवेति कथनेन नव्यसाङ्ख्यानां मते मोक्षो न घटत इति निर्णीतम् । पूर्वोक्त दिशा क्षरा क्षरज्ञानवतो भयं न विद्यत इत्यनेन "यदा ह्येवैष एतस्मिन्नु दरमन्तरं कुरुते । अथ तस्य भयं भवति" । इत्यत्र जीवब्रह्माभेदो न विवाक्षितः । इत्यादिकं सिद्धम् । एतावता श्रुतिषु लय प्रकरणे प्रदर्शितमेकत्वं लयकालिकमेव विवक्षितं बहुनामरूपविभागाभावरूपम्, मुक्तब्रह्मवाचिपदयोस्समानाधिकरणनिर्देशोऽपि मुक्तस्य परमात्मगता क्षरत्वादि साधर्म्यनिबन्धनः न मुक्तब्रह्मस्वरूपैक्यनिबन्धनः इति श्रुतितात्पर्यं निर्णीतम् । ३१-३-३८ एतच्छ्रुतं ब्रह्मपरं त्वयाद्य ४२ 'एतदुक्तं परं ब्रह्म' इत्यत्र 'परेण परधर्मा च' इत्यादिपूर्वप्रघट्टकस्य परब्रह्मपरतायाः स्फुटमुक्त्या अपरब्रह्मविषयकत्वोत्प्रेक्षा न संभवति । 'आनन्दरूपममृतं यद्विभाति' (मुंड) 'सवा एष महानज आत्मा अजरो अमृतो अभयः' (बृ उ) 'स एष प्राण एव प्रज्ञात्माऽनन्दोऽजरोऽमृतः । (कौ. उ) इत्यादिश्रुत्यर्थोऽपि अत्र विवक्षित इति 'यथावदुक्तं परमं' ३८ इत्यादि श्लोके व्यक्तम् ।

एतेन 'भिद्यते हृदयग्रन्थिः—तस्मिन्दृष्टेपरावरे' (मुं उ) इत्युत्तरत्र 'सवा एष महानजआत्मायोऽयं विज्ञानमयः प्राणेषु' (बृ. उ) 'मामेव विजानीहि मामुपास्व । (कौउ) इति पूर्वश्रुत्योश्च परसम्मतजीवब्रह्मैक्यादिविवक्षा न युज्यत इति सिद्धम् ।

युधिष्ठिर उवाच—

धर्माधर्मविमुक्तं यत् विमुक्तं सर्वसंश(सत्त्वसंश्र)यात् ।
जन्ममृत्युविमुक्तं च विमुक्तं पुण्यपापयोः ।

यच्छिवं नित्यमभयं नित्य मक्षरमव्ययम् ।
शुचि नित्यमनायासं तद्भवान्वक्तुमर्हति ॥ ३१५-२ ॥

भीष्म उवाच—

अत्र ते वर्तयिष्यामि इतिहासं पुरातनम् ।
याज्ञवल्क्यस्य संवादं जनकस्य च भारत ॥ ३१५-३ ॥

जनक उवाच—

कतीन्द्रियाणि विप्रर्षे कति प्रकृतयः स्मृताः ।
किमव्यक्तं परं ब्रह्म तस्मा च्च परतस्तु किम् ॥ ३१५-५ ॥
प्रभवं चाप्ययं चैव कालसंख्यां तथैव च ।
वक्तुमर्हसि विप्रेन्द्र त्वदनुग्रहकांक्षिणः ॥ ३१५-६ ॥
अष्टौ प्रकृतयः प्रोक्ता विकाराश्चापि षोडश ॥ ३१५ ॥ इत्यादि ।
चतुर्विंशतिरुक्तानि यथाश्रुतिनिदर्शनम् ॥ ३१५-२५ ॥ इत्यन्तम् ।

याज्ञवल्क्य उवाच—

अव्यक्तस्थं परं यत्तत्पृष्टस्तेहं नराधिप ।
स एष प्रकृतिस्थो हि तत्स्थ इत्यभिधीयते ॥ ॥ ३१९-११ ॥
अचेतना चैव मता प्रकृतिश्चापि पार्थिव ।
एतेनाधिष्ठिता चैव सृज्यते संहरत्यपि ॥ ३१९-१२ ॥

जनक उवाच—

अनादिनिधनावेता वुभावेव महामते ।
अमूर्तिमन्तावचलावप्रकम्प्यगुणागुणौ ॥ ३९१-१३ ॥
अग्राह्यावृषिशार्दूल कथमेकोह्यचेतनः ।
चेतनावांस्तथा चैकः क्षेत्रज्ञ इति भाषितः ॥ ३१९-१४ ॥

याज्ञवल्क्य उवाच—

गुणस्वभावस्त्वव्यक्तो गुणानेवाभिवर्तते ।
उपयुङ्क्ते च तानेव स चैव ज्ञः स्वभावतः ॥ ३२०-३ ॥

अव्यक्त स्तु न जानीते पुरुषो ज्ञः स्वभावतः।
न मत्तःपरमोऽस्तीति नित्यमेवाभिमन्यते ॥ ३२०–४ ॥
अनेनकारणेनैतदव्यक्तं स्यादचेतनम्।
नित्यत्वाच्चाक्षरत्वाच्च क्षरत्वान्न तदन्यथा ॥ ३२०–५ ॥
यदाऽज्ञानेन कुर्वीत गुण सर्गं पुनःपुनः।
यदात्मानं न जानीते तदाऽऽत्मापि न मुच्यते ॥ ३२०–६ ॥
अव्यक्तैकत्वमित्याहुर्नानात्वं पुरुषे तथा।
सर्वभूत दयावन्तः केवलं ज्ञानमास्थिताः ॥ ३२०–१३ ॥
अन्यःस पुरुषोऽव्यक्तस्त्वध्रुवो ध्रुवसंज्ञकः।
यथा मुञ्ज इषीकाणां तथैवैताद्धि जायते।
'न चैव मुञ्जसंयोगादिषीका तत्र बुध्यते ॥ ३२०–१४ ॥
एतेषां सहवासं च विवासं चैव नित्यशः।
याथातथ्येन पश्यन्ति न नित्यं प्राकृता जनाः ॥ ३२०–१९ ॥
ये त्वन्यथैव पश्यन्ति न सम्यक्तेषु दर्शनम्।
ते व्यक्तं निरयं घोरं प्रविशन्ति पुनः पुनः ॥ ३२०–२० ॥
अव्यक्तस्थं परं यतत्पृष्टस्तेऽहंनराधिप।
परं गुह्यमिमं प्रश्नं श्रुणुष्वावाहितो नृप ॥ ३१३–१ ॥
यथार्षेणेह विधिना चरतावमतेन ह।
मयाऽऽदित्यादवाप्तानि यजूंषि मिथिलाधिप ॥ ३२३–२ ॥
ततः प्रणम्यशिरसा मयोक्तस्तपतां वरः।
यजूंषि नोपयुक्तानि क्षिप्रमिच्छामि वेदितुम् ॥ ३२३–५ ॥
ततो मां भगवानाह वितरिष्यामि ते द्विज।
सरस्वतीह वाग्भूत्वा शरीरं ते प्रवेक्ष्यति ॥ ३२३–६ ॥
ततो मामाह भगवानास्यं स्वं विवृतंकुरु।
विवृतं च ततोमेऽऽस्यं प्रविष्टा च सरस्वती ॥ ३२३–७ ॥

प्रतिभास्यति ते वेदः स खिलः सोत्तरो द्विज ॥ ३२३-१० ॥
॥ उ ३२३-११ ॥ (पू)
कृत्स्नं शतपथं चैव प्रणेष्यसि द्विजर्षभ ॥
ततः प्रवृत्तातिशुभा स्वरव्यञ्जन भूषिता ॥
ओंकार मादितः कृत्वा मम देवी सरस्वती ॥ ३२३-१४ ॥
ततोहमर्घ्यं विधिवत्सरस्वत्यै न्यवेदयम् ।
परं यत्नमवाप्यैव निषण्णस्तत्परायणः ॥ ३२३-१५ ॥
ततः शतपथं कृत्स्नं सरहस्यं स संग्रहम् ।
चक्रे सपरिशेषं च हर्षेण परमेण ह ॥ ३२३-१६ ॥
किमत्र ब्रह्मण्यमृतं किं च वेद्य मनुत्तमम् ।
चिन्तयंस्तत्र चागत्य गन्धर्वो मामपृच्छत ॥ ३१३-२३ ॥
विश्वावसुस्ततो राजन् वेदान्तज्ञानकोविदः ।
चतुर्विंशास्ततोऽपृच्छत्प्रश्नान्वेदस्य पार्थिव ॥ ३२३-२७ ॥
विश्वाविश्वं तथाऽश्वाऽश्वं मित्रं वरुणमेव च ।
ज्ञानं ज्ञेयं तथा ज्ञोऽज्ञः कस्तपा अतपास्तथा ॥ ३२३-२९ ॥ (पू)
वेद्यावेद्यं तथाराजन्नचलं चलमेव च ।
अपूर्वमक्षयं क्षय्य मेतत्प्रश्नमनुत्तमम् ॥ ३२३-३० ॥
मुहूर्तमुष्यतां तावद्यावदेनं विचिन्तये ।
ततोऽनुचिन्तयमहं भूयो देवीं सरस्वतीं ।
मनसा स च मे प्रश्ना दध्नो घृतमिवोद्धृतः ॥ ३२३-३३ ॥
तत्रोपनिषदं चैव परिशेषं च पार्थिव ।
मथ्नामि मनसा तात दृष्ट्वाचान्वीक्षिकीं पराम् ॥ ३२३-३३ ॥
विश्वमव्यक्तमित्युक्तमविश्वोनिष्कलस्तथा ।
अश्वश्चाश्वा च मिथुनमेवमेवानुदृश्यते ॥
अव्यक्तं प्रकृतिं प्राहुः पुरुषेति च निर्गुणम् ।

तथैव मित्रं पुरुषं वरुणं प्रकृतिं तथा ॥
ज्ञानं तु प्रकृतिं प्राहुर्ज्ञेयं पुरुषमेव च ।
अज्ञमव्यक्तमित्युक्तं ज्ञस्तु निष्कल उच्यते ॥ ३२३–४० ॥
तथैवावेद्यमव्यक्तं वेद्यः पुरुष उच्यते ।
चलाचलमिति प्रोक्तं त्वया तदपि मे श्रुणु ॥ ३२३–४३ ॥
चलां तु प्रकृतिं प्राहुः कारणं क्षेपसर्गयोः ।
अक्षेपसर्गयोः कर्ता निश्चलः पुरुषः स्मृतः ॥ ३२३–४४ ॥
अज्ञावुभौ ध्रुवौ चैव अक्षयौ चाप्युभावपि ।
अजौ नित्यावुभौ प्राहुरध्यात्मगतिनिश्चयाः ॥ ३२३–४५ ॥
अक्षयत्वात्प्रजनने अजमत्राहुरव्ययम् ।
अक्षयं पुरुषं प्राहुः क्षयोऽह्यस्य न विद्यते ॥ ३२३–४६ ॥
गुणक्षयत्वात्प्रकृतिः कर्तृत्वादक्षयं बुधाः ।
एकान्तदर्शनावेदाः सर्वे विश्वावसो स्मृताः ।
जायन्ते च म्रियन्ते च यस्मिन्नेते यतश्च्युताः ।
वेदार्थं ये न जानन्ति वेद्यं गन्धर्वसत्तम ॥ ३२३–४९ ॥ उ)
साङ्गोपाङ्गानपि यदि पञ्चवेदानधीयते ।
वेदवेद्यं न जानीते वेदभारवहो हि सः ॥ ३२३–५० ॥

जनकवसिष्ठसंवादे मुक्तौ जीवस्य परसाधर्म्यप्रतिपादनेन "द्वितीयाद्वै भयं भवति।" (बृ. उ.) "उदरमन्तरं कुरुते। अथ तस्य भयं भवति।" (तै. उ.) इत्युक्तदिशा भयसंबन्धो दुस्त्यजः (३१८ पु.) प्रागुक्त कूटस्थनित्यतापि न घटते । एवं लयमुक्तिकालयोः ऐक्याभेदनिर्देशयोरुपपत्तावपि "ब्रह्मै वेद-ममृतं पुरस्तात्, (मुं. उ.) 'तदात्मानमेवावैत् अहं ब्रह्मास्मि' (बृ. उ.) 'तं मामायुरमृतमित्युपास्व' (कौ. उ.) इत्यादौ सर्वत्र तन्निर्देशो नोपपादित

इति सर्वत्राभेदनिर्देशस्यानुगतरूपेणोपपादनमन्तरा ऐकरूप्येण नित्यानन्दरूपताऽपि न निश्चेतुं शक्यत इति नित्यानन्दरूपपरमात्मप्राप्तिरूपमोक्षः कथम्, इत्याभिप्रेत्य युधिष्ठिरः पप्रच्छ 'धर्माधर्मविमुक्तम्' 'यच्छिवम्' इत्यादिना 'एतच्छ्रुतं ब्रह्मपरं' 'एतदुक्तं परं ब्रह्म' इति पूर्वोक्तिमनुसृत्य अत्र परब्रह्मण्येव प्रष्टुर्युधिष्ठिरस्याशय इति निश्चीयते ॥

किमव्यक्तमिति ॥ ३१५-५ ॥ अव्यक्तं किं? तस्माच्च परतः परं ब्रह्म किम्? इत्यर्थः। जीवब्रह्मणोरभेदेन परं ब्रह्मैकम्! उत जविभिन्नं जीवादपि परं ब्रह्मैकं वा नित्यानन्दरूपमितिजनकस्याशयः। अव्यक्तस्थमिति ॥ ३१९-११ ॥ अथ याज्ञवल्क्यः जीव ब्रह्मभेदासिद्धान्त एव परब्रह्मस्वरूपमुपदिदिक्षुः जीवपरोभयाविशेषणाव्यक्तसंबन्धं दर्शयति अव्यक्तस्थमिति श्लोकेन। एतेन संबन्धस्य तात्विकत्त्वेन ब्रह्मव्यतिरिक्तस्य सत्यता सूचिता। ब्रह्माभिन्नचेतनाचेतन विभागः कथमित्याशयेन 'अनादिनिधनौ ॥ ३१९-१३ ॥ इत्यादि जनकप्रश्नः। सत्वरजस्तमोगुणकृतपरिणामवदव्यक्तं, तादृशपरिणामसंपादनार्थं प्रवर्ततेऽनुभवति च स्वभावतो ज्ञानवान् जीवः इति 'गुणस्वभावस्तु' (३२०-३) इत्यस्यार्थः। ज्ञानवत्वतदभावाभ्यां चेतनाचेतनविभागः। प्रकृति संसर्गात् जीवस्य स्वस्मादुत्कृष्टं परं ब्रह्म नास्तीति भ्रम इति 'अव्यक्तस्तु' (३२०-४) इत्यत्र विवक्षितम्। अत्र जीवब्रह्माभेदभ्रमो विवक्षित इति स्फुटम्। गुणगतपरिणामार्थप्रवृत्तिदशायामात्मस्वरूपज्ञानाभावेन जीवस्य न मुक्तिः इति 'आत्मानमुच्यते' (३२०-६) इत्यस्यार्थः 'अव्यक्तैकत्व' (१३) मित्यत्र सर्वभूतदयावतां ज्ञानिवर्याणां पुरुषनानात्वसिद्धान्तकथनेन बन्धमोक्षव्यवस्थाऽप्युपपादिता। एतेन जीवब्रह्मैक्ये मुक्ति तदभावयोरुभयो स्तात्विकत्वं न घटत इति सिद्धम्। (१४) अत्र मुञ्जादिसंयुक्तेषीकादि दृष्टान्तकथनेन जीवे देहादिसंयोग स्तात्विको नाध्यासिक इति बोधितम्। कपिलासुरिसंवादे "यथामुञ्जादिषीका निष्कृष्टा न पुनराविशति अन्यत्त्वात् तथा क्षेत्रं क्षेत्रज्ञः" इत्युपक्रम्य मशकोदुम्बरमुञ्जादि

दृष्टान्तेष्वन्यत्त्वमभिधाय "तथान्यत् क्षेत्रं क्षेत्रज्ञोऽन्यः पुरुषः पञ्चविंशकः अन्यश्चास्मात् क्षेत्रज्ञ इति" इत्यत्र देहजीवभेदः जीवपरभेदश्चोक्तः। 'सहवासं नामासुरे यदयं सत्त्वमभिषजते विवासं नाम यदयं सत्वादव्यक्ताच्च वासं प्रति समावर्तयते' इत्युपक्रम्य 'विवासं सहवासं च यो विद्वान्नावबुध्यते। सबद्धस्सत्त्व संवासै स्संसारान्न प्रमुच्यते ॥ २०४ ॥ इति तत्रैव वक्ष्यते। तमेतमर्थमत्रापि दर्शयति—एतेषां सहवासं चेति। नारदसनत्कुमारसंवादेऽपि "मशकोदुम्बरयोर्विवास सहवासमन्य एव स्वभावः एवमेव ज्ञानाज्ञानयोर्विवास सहवासः। पश्यति प्रकृतिं क्षेत्रज्ञः, न च प्रकृतिः क्षेत्रज्ञं पश्यति, एतद्विवाससहवासमिति एतन्नानात्त्वदर्शनं पश्यन्ति दैवज्ञाः" इत्युपक्रम्य प्रकृतिं क्षेत्रज्ञं चपरः क्षेत्रज्ञः षड्विंशकोऽनुपश्यति न तु पञ्चविंशः क्षेत्रज्ञः प्रकृतिर्वा परं क्षेत्रज्ञं पश्यति" इति वक्ष्यते।

पूर्वं 'स एष प्रकृतिस्थो हि' इत्यादिना क्षेत्रज्ञो जीव एव निरूपितः। जीवस्य तु 'न मत्तः परमोऽस्ति' इत्यत्र क्षेत्रज्ञादुत्कृष्टं वस्तुनास्तीति भ्रम उक्तः। तेनाव्यक्तात्परत्वं जीवमात्रस्यैवोक्तं भवति। तत्वतस्तु जीवादपि परं षड्विंशरूपं परं ब्रह्म तज् ज्ञानं च हयशिरसः, तच्छक्तिरूप सरस्वत्याश्चानुग्रहेणैव संपादनीयम्। एतदनुग्रह विधुराणां 'नमत्तः परमोऽस्ति' इति पूर्वोक्तभ्रमः, नत्वेतदनुग्रहवताम्। इति वक्तुमुपक्रमते 'अव्यक्तस्थम्' (२२३-१) इत्यादिना—

२. आदित्यः—हयशिराः। ६–७. सरस्वती तच्छक्तिर्वाग्देवी बृहदारण्यक तृतीयाध्यायादि प्रतिपाद्या इति च पूर्वमेव निरूपितम्।

एतेन बृहदारण्यकाष्टमोपसंहारे "अथ य इच्छेत्पुत्रो मे पण्डितो विगीतः समितिं गमः शुश्रूषितां वाचं भाषिताजायेत सर्वान्वेदाननुब्रवीत सर्वमायुरियादिति माँग्ँ सौदनं पाचयिता" ॥ ८–४–१८ ॥ इत्यादिना कानिचित्कर्माण्यभिधाय पुत्रजननोक्त्यनन्तरं 'अथास्य दक्षिणं कर्णमभिनिधाय

वाग्वाग् इति त्रिः' इत्यत्र वाक् 'अथैनं मात्रे प्रदाय स्तनं प्रयच्छति यस्ते स्तनश्शशयः—सरस्वति तमिह धातवेऽकरिति'। इत्यत्र सरस्वती च हयशिरश्शक्तिरेव 'ओष्ठापिधाना' (ऐ. आ. उ. ३–२–५) इति प्रागुदाहृत हयग्रीव मन्त्रानुमन्त्रैकार्थ्यात्। 'अस्य वामस्य' (ऋसं मं. १ सू. १६४)

अनन्या सा परा शक्तिर्विष्णोर्लक्ष्मीः सनातनी।

गौरी सरस्वती धेनुर्वाच्या वाच्यक्रमोज्झिता ॥ (अ. सं. ५१-३७)

इति प्रसिद्धगौरीशब्दघटित 'गौरीर्मिमाय' इत्यादि हयग्रीवमन्त्रानुमन्त्रस्य 'चत्वारिवाक्' इति आश्वलायन दशश्लोकीमन्त्रस्य 'कृष्णं नियानम्' इति मन्त्रस्य चोत्तरं 'यस्ते स्तनः शशयः—सरस्वति तमिह धातवे कः, इति मन्त्रेऽपि सरस्वती हयशिरश्शक्तिरेवेति बोध्यम्।

१०. वेदशतपथादि प्रतिभानं हयशिरस्तच्छक्त्यनुग्रहेण इति स्फुटम्। १५. उक्त सरस्वत्याराधनेन शतपथादि लाभोऽपि स्फुटः।

२३. किमत्र ब्रह्मणीति–जीवब्रह्मणोरभेदेन ब्रह्मण्येव मोक्षः, सचात्रैव इति 'किमत्रब्रह्मण्यमृत' मित्यस्यार्थः। कोटयन्तरं तु बहूनां जीवानां परत्र मोक्ष इति। 'किं च वेद्यमनुत्तमम्' इत्यत्र जीवभिन्नं परं ब्रह्मवेद्यम्; उत जीवरूपं तत् इति विवक्षितम्। किं च वेद्यमनुत्तमम्—इत्यनेन वक्ष्यमाणचतुर्विंशतिप्रश्नेषु वेद्य एव परमतात्पर्यम्। उत्तरत्रापि "वेदार्थं ये न जानन्ति-वेद्यं" इत्यत्र वेद्ये वेदार्थत्वविशेषणस्य पूर्वार्धे उत्पत्ति लयकारणत्वस्य च प्रतिपादनेन 'वेदवेद्यं न जानीते' इत्यत्र वेदेति विशेषणोक्त्या च वेद्यविशेष एव प्रधानतात्पर्यमिति च विवक्षितम्। किमत्रेत्याद्यर्थेऽपि वेद्यविशेषएवान्तर्भूतः।

अजस्रं जन्मनिधनं चिन्तयित्वा त्रयीमिमाम्।
परित्यज्य क्षयमिह अक्षयं धर्ममास्थितः ॥ ३२३–५४ ॥
यदाऽनुपश्यतेऽन्यन्तमहन्यहनि काश्यप।
तदा स केवलीभूतः षड्विंशमनुपश्यति ॥ ३२३ –५५ ॥

अन्यश्च शाश्वतोऽव्यक्तस्तथाऽन्य-पञ्चविंशकः ।
तत्स्थं समनुपश्यन्ति तमेकमिति साधवः ॥ ५६ ॥
तेनैतन्नाभिनन्दन्तिपञ्चविंशकमच्युतम् ।
जन्ममृत्युभयाद्योगास्साङ्ख्याश्च परमैषिणः ॥ ५७ ॥

विश्वावसुरुवाच—

पञ्चविंशे यदेतत्ते प्रोक्तं ब्राह्मणसत्तम ।
तदहं न तथा वेद्मि तद्भवान्वक्तुमर्हति ॥ ३२३–५८ ॥
जैगीषव्यस्यासितस्य देवलस्य मया श्रुतम् । पराशरस्य—' इत्यादि '
प्राप्तमेतन्मयाकृत्स्नं वेद्यं नित्यं वदन्त्युत ॥ ६३ ॥
तस्मात्तद्वै भवद्बुध्या श्रोतुमिच्छामि ब्राह्मण ।

याज्ञवल्क्य उवाच—

कृत्स्नधारिणमेव त्वां मन्ये गन्धर्वसत्तम ।
जिज्ञाससे च मां राजन् तन्निबोध यथाश्रुतम् ॥ ३२३–६९ ॥
बुध्यमानो हि प्रकृतिं बुध्यते पञ्चविंशकः ।
न तु बुध्यति गन्धर्वप्रकृति-पञ्चविंशकम् ॥ ७० ॥
षड्विंशः पञ्चविंशं च चतुर्विंशं च पश्यति ॥ ३२३–७२ ॥
न तु पश्यति पश्यंस्तु यश्चैनमनुपश्यति ।
पञ्चविंशोऽभिमन्येत नान्योऽस्ति परतो मम ॥ ३२३–७३ ॥
न चतुर्विंशको ग्राह्यो मनुजैर्ज्ञानदर्शिभिः ।
मत्स्यो वोदकमन्वेति प्रवर्तेत प्रवर्तनात् ॥ ३२३–७४ ॥
यथैव बुध्यते मत्स्यस्तथैषोऽप्यनुबुध्यते ।
स स्नेहात्सहवासाच्च साभिमानाच्च नित्यशः ॥ ३२३–७५ ॥
स निमज्जति कालास्ये यदैकत्वेन बुध्यते । (न्या. र. म. पाठः)

उन्मज्जति हि कालास्यान्ममत्वेनाभि संवृतः ॥ ३२३–७६ ॥
यदा तु मन्यतेऽन्योऽहमन्यएष इति द्विज ।
तदा स केवलीभूतष्षडविंशमनुपश्यति ॥ ७७ ॥
अन्यश्च राजन् परमस्तथाऽन्यःपञ्चविंशकः ।
तत्स्थत्वादनुपश्यन्तिह्येक एवेति साधवः ॥ ७८ ॥
तेनैतन्नाभिनन्दन्ति पञ्चविंशकमच्युतम् ।
जन्ममृत्युभयाद्भीतायोगास्साङ्ख्याश्च काश्यप ॥
षड्विंशमनुपश्यन्तश्शुचयस्तत्परायणाः ॥ ७९ ॥
यदा सकेवलीभूतष्षड्विंशमनुपश्यति ॥
तदा स सर्वविद्विद्वान् न पुनर्जन्म विन्दति ॥ ८० ॥
एवमप्रतिबुद्धश्चबुध्यमानश्चतेऽनघ ॥
बुद्धश्चोक्तो यथा तत्त्वं मया श्रुति निदर्शनात् ॥ ८१ ॥
पश्यापश्यं यो न पश्येत् क्षेम्यं तत्वं च काश्यप ।
केवलाकेवलं चान्यत् पञ्चविंशात्परं च यत् ॥

विश्वावसुरुवाच—

तथ्यं शुभं चैतदुक्तं त्वया विभो ।
सम्यक् क्षेम्यं दैवताद्यं यथावत् ॥ ८३ ॥

किञ्च वेद्यमनुत्तमम्—इत्यत्रानुत्तमशब्दप्रयोगेणावरवेद्यम्, अनुत्तमवेद्यं चेति वेद्यद्वयं प्रतीयते, तत्र चावरवेद्यो जीवः। जीवे प्रकृतिविवेकज्ञानं वेदपूर्वभागोक्त कर्मानुष्ठातुरप्यपेक्षितम्। तावन्मात्रं च मुक्त्युपायानुष्ठातुर्नालम्। इत्यनुत्तमवेद्यज्ञानमावश्यकमिति अनुत्तमवेद्यमेव विश्वावसुचिन्ताविषयः। तदेव 'वेदवेद्यम्' 'वेदार्थम्' इति प्राक्तनयाज्ञवल्क्यप्रतिवचनश्लोकेषु विवक्षितम्। स च षड्विंश एव। 'यथाऽचिरात्सर्वपापं व्यपोह्य परात्परं पुरुषं

याति विद्वान्, (कै. उ. १) इत्युपक्रमोक्तः परात्परः पुरुषः 'वेदैरनेकै रहमेव वेद्यो वेदान्तकृद्वेदाविदेव चाहम्" (कै. उ. २२) इत्यत्रानेकवेद वेद्य इत्युक्तेः। गीतायां सप्तमे (गी. ७-६, ७) जीवात्परत्वेनोपनिषदुक्त-परात्परत्वं पुरुषस्योपपाद्य पञ्चदशे 'वेदैश्चसर्वैरहमेव वेद्यो वेदान्तकृद्वेदविदेव-चाहम्' (गी. १५-१६) इत्यत्रानेकवेदवेद्यत्वम्' उपनिषदुक्तं वासुदेवस्येति निर्धार्य "द्वाविमौ पुरुषौ लोके (गी. १५-१६)" "यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः, (गी. १५-१७) यस्मात्क्षर मतीतोहमक्षरादपिचोत्तमः। अतोस्मि लोके वेदे च प्रथितः पुरुषोत्तमः" (गी. १५-१८) इत्यत्र 'अक्षरा-त्परतःपरः' "नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति" इति मुण्डकश्रुति-पर्यालोचनया परात्परमित्यत्र मुक्तात्परत्वमपि विवक्षितम्। मुक्तस्यापि व्यापकत्वधारकत्वनियन्तृत्वादेः परपुरुषे सत्वात्, इति निर्णयात्। इत्यभिप्रेत्य मुक्त्युपायानुष्ठातु रवश्यानुसन्धेयं षड्विंशे पञ्चविंशभेदं प्रति-पादयितु मुपक्रमते, अजस्रमित्यादिना। त्रयीमिमामित्येतदपि चिन्तयित्वे-त्यात्रान्वेति। क्षयत्वाक्षयत्वे फलद्वारके। अक्षयफलक धर्मानुष्ठातुः प्रकृति-पुरुष विवेकोपयोगप्रकारं दर्शयति 'यदानुपश्यते'। ५५। इति तं— विश्वाविश्वेत्यादावुक्तं पुरुषं प्रकृतेरन्यमित्यर्थः। अहन्यहनि—इत्यनेन दर्शनं योगकालिकमिति बोधितम्। केवलीभूतः देवत्वमनुष्यत्वादिरूप प्रकृति-संसृष्टाकारविनिर्मुक्तः ज्ञानानन्दस्वरूपः इत्यर्थः। ज्ञानानन्दस्वरूपस्य सार्वदिकत्वेऽपि तत्साक्षात्काराभिप्रायेण 'तदा स केवलीभूत' इत्युक्तिः। षड्विंशमनुपश्यतीति अप्रतिबुद्धदशायां जीवस्य देवमनुष्यादिशरीराभेदज्ञा-नेन सजातीय प्राकृत वस्तुष्वेव भोग्यताबुद्धिः। यदा तु जीवस्य ज्ञानानन्द-स्वरूपता साक्षात्कृता तदा तत्सजातीय परमात्मनि भोग्यताबुध्या तदनुबुभूषया प्रवृत्तिः इति जनक वसिष्ठ संवादे स्फुटम्। गीताप्रथमषट्कभाष्य तात्पर्यचन्द्रिकाद्युक्तादिशा पञ्चविंशक जीवात्मदर्शनस्य षड्विंश परमात्मदर्श-नोपयोगोप्यत्रानुसन्धेयः। प्रकृतिपुरुषयोर्भेद एवेत्याह 'अन्यश्च' ५६।

इति प्रकृतिपुरुषयोर्भेदे पुमानेक इत्यादिकमुपपादयति 'तस्थ' मिति। जीवे पुंस्त्वाभावेऽपि पुंस्त्वाश्रयदेहवर्तित्वेन 'पुमानेक' इत्याद्युपपद्यते । "नैव स्त्री न पुमानेष न चैव च नपुंसकः। यद्यच्छरीरमादत्ते तेन तेन स युज्यते', (श्वे. उ. ५-१०) इत्यादिश्रुतेः। श्रुतौ 'तेन तेन स युज्यते' इत्यत्र शरीरसंबन्धस्तात्विक एव विवक्षितः, नत्वाध्यासिकः। तत्र च 'गुणान्वयो यः फलकर्मकर्ता प्राणाधिपस्सञ्चरति स्वकर्मभिः' (श्वे. उ. ५-७) इति प्रागुक्तकर्मैवमूलमितिभावः। साधवः—पराशरादयः। 'साधुकारी साधुर्भवति' (बृ. आ. ६-४-५) इति श्रुत्युक्त दिशा साधुकर्मणा साधुशरीर युक्ता इत्यर्थः, पुमान्स्त्री—देहेषु लोकसंज्ञेयं विज्ञेया कर्महेतुषु। (वि. पु. २-१३-९३) पुमान्नदेवो न नरः, शरीराकृति भेदास्तु भूपैते कर्मयोनयः, ९४। इत्यादौ पुमादिदेहवर्त्यहमर्थस्यात्मत्वं स्फुटम्। साधव इत्यनेनासाधूनामप्रतिबुद्धानां देहात्मैक्यज्ञानं भ्रमः, साधूनां तत्स्थत्वेनैक्यज्ञानं तु प्रमा, इति बोधितम्। ५७

तेनेति। तेन—तत्स्थत्वेनैक्यदर्शनेन। एतं पञ्चविंशकं अच्युतं नाभिनन्दन्तीत्यन्वयः। एतम्—प्रकृतिभिन्नत्वेन निश्चितम्। अच्युतम्—अच्युतेन स्वरूपैक्यवन्तं, नाभिनन्दन्ति—प्रकृति पञ्चविंशकैक्यज्ञानवत् पञ्चविंशक षड्विंश स्वरूपैक्यज्ञानमपि भ्रमः। पञ्चविंशस्थत्वेन षड्विंशस्यैक्यज्ञानं प्रमेति निश्चयादित्यर्थः। अच्युतशब्दस्य 'आश्रितरक्षणव्यवसायरूपसत्वान्न च्युतपूर्व इति 'सत्वान्नच्युतपूर्वोऽह'मिति निरुक्तिबललभ्यार्थः स्तोत्रभाष्ये दर्शितः। एतेन रक्ष्यस्य पञ्चविंशकस्य तद्रक्षणव्यवसायवतः षड्विंशस्य च स्वरूपैक्यं कदापि न संभवतीति सूच्यते। अच्युतशब्दरूढ्या च षड्विंशो नारायण इति निर्णीतम्। योगा स्सांख्याश्चेत्यत्र चकारः साधुसमुच्चायकः। जन्ममृत्युभयान्नाभिनन्दन्तीत्युक्त्या 'द्वितीयाद्वै भयं भवति—उदरमन्तरं कुरुते। अथ तस्य भयं भवति, इत्यत्र जीवब्रह्मस्वरूपैक्यवादि सम्मतार्थो न विवक्षित इति स्फुटम्। अत्र पञ्चविंशे केवलत्वस्य प्रकृतिभेदकधर्मस्य चा निर्णयेन तत्र प्रकृतिस्थत्वस्योक्तिवत् षाड्विंशे पञ्चविंशस्थत्वस्य स्फुटमनभिधानेन तद-

नुपपादनेन चोक्तार्थनिर्णयेन तद्विशदीकरणार्थं विश्वावसुः पुनः पृच्छति ५८ 'पञ्चविंश' इत्यादिना । 'जैगीषव्यस्यासितस्य 'इत्यादौ असित देवल पराशर-शुकगौतम नारद सनत्कुमाराद्यास्साधवः, कपिलासुरि पञ्चशिखादय स्सांख्याद्याचार्याश्चोक्ताः । वेद्यं नित्यंवदन्त्युत इत्यनेन कूटस्थनित्य वेद्यस्य गन्धर्व प्रश्न प्रधान तात्पर्य विषयत्वं व्यक्तम् । अथ "यआत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद, इत्यादिश्रुत्युक्तदिशा पञ्चविंश षड्विंशैक्यं सिषाधयिषुः प्रकृतिपुरुष दृष्टान्तेन पञ्चविंशषड्विंशयोर्भेदं साधयितुमुप-क्रमते—७० बुध्यमानोहीति । प्रकृतिवेत्तुर्जीवस्य प्रकृत्यवेद्यत्ववत् ७२ षड्विंशः पञ्चाविंशश्चेत्यत्र पञ्चविंशसाक्षात्कारकर्तुः षड्विंशस्य पञ्चविंशावेद्यत्व कथनेन 'य आत्मनितिष्ठान्नात्मनोऽन्तरोयमात्मा न वेद '(बृ. उ.५–७–२२मा) इति श्रुतावात्मावेद्यत्वं विशदीकृतम् । एतेन 'यः पृथिव्यांतिष्ठन् पृथिव्या अन्तरो यंपृथिवी न वेद' इत्यत्र वेदनप्रसङ्गरहित पृथिव्यवेद्यत्वोक्तिः दृष्टान्तत्वाभि-प्रायेणेति निर्धारितं भवति । ७३ पञ्चविंशोऽभिमन्येत, इत्यत्राप्रवुद्धो बुध्य-मानश्च विवक्षितः । न चतुर्विंशकोग्राह्यः, ज्ञानदर्शिभिः—ज्ञानानन्दस्वरूप-पञ्चविंश साक्षात्कारवद्भिरित्यर्थः एतेन ज्ञानानन्दस्वरूपत्वेन पञ्चविंशकस्य जडचतुर्विंशक भेदं मनुजा जानन्तीत्यर्थः । एतेन 'यदा तु मन्यतेऽन्योऽहम्' इति वक्ष्यमाणश्लोके केवलत्वं निर्धारितं भवति । ७६ 'स निमज्जति कालास्ये, इत्यत्र चतुर्विंशैक्य ज्ञानवतोऽनिष्टं फलं 'उन्मज्जतिहि' इत्यत्र परमात्मनि स्वामित्वादेः सत्वेऽपि जीवे परसङ्कल्पेन द्वारस्वातन्त्र्यानुषङ्गिकफल-भोगादेः सत्वेन चतुर्विंशे स्वस्वत्व स्वभोगसाधनत्वज्ञानवतश्च नानिष्टम्, इति प्रतिपादितम् ।

एतदुभयमपि पञ्चविंशषड्विंशयोरैक्यज्ञानवतः पञ्चविंशे षड्विंश स्वत्व-ज्ञानवतश्चक्रमेण विवक्षितम्, चतुर्विंशपञ्चविंशवत् पञ्चविंशषड्विंशभेदादिनिर्धा-रणप्रकरणात् । ममत्वस्योभयत्र तत्स्थत्वनिबन्धनत्वाविशेषात्, देहादौ ममता-बुद्धेर्वहुत्र निन्दितत्वात्, जीवे परमात्मस्वामिकत्वज्ञानस्यैव कालास्यादुन्म-

ज्जनहेतुतायाः बहुप्रमाणसिद्धत्वाच्चेतिबोध्यम् । ७७ 'यदा तु मन्यत' इति अहं-प्रत्यक्त्वविशिष्टः, अन्यएषः, एषः—पराक् इत्यर्थः । एतेन प्रत्यक्त्व-पराक्त्वाभ्यां चतुर्विंशपञ्चविंशयोर्भेदः इत्युक्तं भवति । एतेन पञ्चविंशस्य ज्ञानानन्दस्वरूपत्ववत् प्रत्यक्स्वरूपत्वमपि 'तदासकेवलीभूत, इत्यत्र साक्षात्कृतं विवक्षितम् । षड्विंशस्यापि ज्ञानानन्दस्वरूपत्वेनेवाहंत्वरूपप्रत्यक्त्वेनाऽपि पञ्चविंशसजातीयतया तत्साक्षात्कारेच्छया प्रवृत्या तत्साक्षात्कार इति भावः । ७८ 'अन्यश्च राजन् स पर' इत्येव बहुषु लिखितकोशेषु, न्यायरक्षामणौ, वा. रा. मुद्रितकोशे च पाठः । 'किमव्यक्तं परं ब्रह्म' इति जनकप्रश्ने 'अव्यक्तस्थं परं यत्तत् पृष्टः' इति याज्ञवल्क्यवचने च परशब्दप्रयोगेण तदैकरूप्यात् 'परात्परं' (कै. उ, मुं. उ.) इति श्रुत्यानुगुण्याच्च । सः—परात्परत्वेन, जीवात्मस्थत्वेन नित्यबहुजीवनियामकत्वेन नित्यत्वेन निरतिशयानन्दरूपत्वेन ब्रह्मत्वेन वेदार्थत्वेन च श्रुतिप्रसिद्ध इत्यर्थः ।'तत्स्थत्वात्' इत्यादि एतेन परस्य आत्मस्थत्वादिप्रतिपादकश्रुत्यर्थो निर्धारितः । तथा हि 'अङ्गुष्ठमात्रःपुरुषो मध्य आत्मनि तिष्ठति । ईशानो भूतभव्यस्य न ततो विजुगुप्सते' (कठ. ४–१२) इत्यत्रात्मन्शब्दः जीववाची 'महान्तं विभुमात्मानम् (कठ ४–४) इत्यनन्तरं 'य इमं मध्वदं वेद आत्मानं जीवमन्तिकात् । ईशानं भूतभव्यस्य न ततो विजुगुप्सते । (कठ ४–५) इत्युपक्रमे आत्मनो जवित्वस्य, भूतभव्येशानस्य पूर्वमन्त्रोक्त महा विभुपरमात्मनः जीवसमीपवर्तितायाश्च स्फुटमभिधानात् । उपक्रमश्रुतावन्तिकादित्यनेनात्र जीवस्थत्वं जविव्यापकत्वं 'व्याप्य नारायणः स्थितः' इति श्रुत्यन्तरप्रतिपन्नं विवक्षितमिति प्रतीयते । उत्तरत्र 'एको वशी—सर्वभूतान्तरात्मा' तमात्मस्थं येऽनुपश्यन्ति' (कठ ५–१२) इत्यत्र परस्य जीवव्याप्तिः जीवपरन्त्रीकरणार्थेति जीवस्यपारतन्त्र्यज्ञानवतामेवशाश्वतसुखमिति च स्फुटम् । 'एको वशी निष्क्रियाणां बहूनां (श्वे. उ. ६–१२) इत्यादि समानानुपूर्वीकश्वेताश्वतरश्रुतावप्ययमर्थः स्फुटः 'नित्यो नित्यानां चेतनश्चेतनानां, 'तमात्मस्थ'मित्यनन्तर कठश्रुतौ नित्यबहुचेतनव्यापकत्वं परस्य,

'तदेतदितिमन्यन्तेऽनिर्देश्यं परमं सुखं' इति तदनन्तरश्रुतौ परतन्त्रनित्य बहुचेतनव्यापकस्वतन्त्रपरमात्मनो निरतिशयानन्दरूपत्वं च प्रतिपादितम्। वाजसनेयके 'यो वै तत्काप्य सूत्रं विद्यात्तं चान्तर्यामिणम्' (बृ. ३-५-६-९) इति 'सब्रह्मवित्सलोकवित्स देववित्सवेदवित्स भूतवित्स आत्मवित्स सर्ववित्' इत्यत्रान्तर्यामिवेदितुः ब्रह्मवित्वोक्त्यान्तर्यामिणो ब्रह्मत्वं, तद्वेदितुः लोक देव भूत जीवात्मादीनां तदन्तर्यामिकाणां वेदितृत्वं वेद्यार्थवेत्तृत्वं च सिद्ध्यति तदुत्तरं याज्ञवल्क्योक्तौ 'यो विज्ञाने तिष्ठन् विज्ञानादन्तरो यं विज्ञानं न वेद यस्य विज्ञानगँ् शरीरं यो विज्ञानमन्तरो यमयति' (बृ. का. ५-७-२२) इत्यत्र 'य आत्मनि तिष्ठ'न्नित्यादि आत्मशब्द घटितमाध्यन्दिन श्रुतौ च ज्ञानस्वरूप जीवात्मस्थितेर्नियमनार्थत्वं शरीरत्व पर्यवसनार्थत्वं च स्फुटम्। एतेन शरिरवाचक देवमनुष्यादि शब्दाः यथा शरीरि जीवबोधकाः तथा शरीरित्वपर्यवासायि जीवस्थत्वविशिष्टं परं ब्रह्मापि बोधयन्ति इति सिध्यति। वाजसनेयके याज्ञवल्क्योक्तरीत्यैवात्र जनकयाज्ञवल्क्य संवादे 'अन्यश्च राजन् स परः' इत्यादि याज्ञवल्क्योक्तावप्यर्थो विवक्षितः' नान्यथा। अत एव 'आत्मस्थं प्रभुं कारयितारं नापश्यत्' इत्यादि १४८७ प्रागुदाहृत मैत्रायणीय श्रुतिरपि सङ्गच्छते। 'तत्स्थत्वादनुपश्यन्तिह्येकएवेति साधवः' इत्यत्र साधवः—'तमात्मस्थं येऽनुपश्यन्ति धीराः' इति श्रुत्युक्तधीराः 'अजायमानो बहुधा विजायते। तस्य धीराः परिजानन्ति योनिम्' (पु सू ) इत्यादि श्रुत्युक्तदिशा परस्य कर्माद्यहेतुकाश्रित परित्राणार्थावतार ज्ञानवन्तः 'परित्राणाय साधूनाम्' (गी ४—८) इति गीतोक्तादिशा येषां परित्राणार्थं कृष्णः अवतीर्णः त एव कृष्णरक्ष्यत्व निश्चयवन्तः, न तु कृष्णजीवाभेदज्ञानवन्तः। इममर्थं '७९ तेनैतम्' इत्यादिना षड्विंशमनुपश्यन्तश्शुचयस्तत्परायणाः, इत्यन्तेन स्फुटयति। अन्तर्यामि ब्राह्मणे प्रतिपर्यायं (सत आत्मा अन्तर्याम्यमृतः। मा. पा.) एष त आत्मान्तर्याम्यमृतः, (का. पा.) इत्यत्र अन्तर्यामी (स) एष) त आत्मा अमृतः इति योजनया

अन्तर्यामिण एवात्मशब्दार्थत्वं नित्यत्वं च प्रतिपादितमिति 'भेदादिति चेन्न प्रत्येकमतद्वचनात्' (शा. सू. ३-२-११) इति सूत्रोक्तदिशा पूर्वश्लोके तत्स्थत्वेनोक्तस्यात्राच्युतशब्दयोगार्थनित्यत्वमपि विवक्षितम्। जीवे अच्युतशब्दयोगार्थो न संभवति, जीवस्य स्वभावान्यथाभावराहित्य रूप नित्यत्वस्यैवासम्भवात्' अच्युतशब्दरूढ्यर्थभेदस्तु सुतरां न संभवति। एतेन सुबालोपनिषदि सप्तमे "अन्तश्शरीरे निहितोगुहाया मजएकोनित्यः एष सर्वभूतान्तरात्मा अपहृतपाप्मा दिव्योदेव एकोनारायणः" इत्यत्र जीवान्तर्यामिणो नित्यत्वैकत्वे विवक्षित इति स्थापनेन 'अन्तः शरीरेनिहितो गुहायां शुद्धः सोऽयमात्मा' इत्यादि 'निहितंगुहायाममृतं विभ्राजमानमानन्दं तं पश्यन्तिविद्वांसः' इत्यन्त तदुत्तरखंड श्रुतौ जीवान्तर्यामिणः शुद्धत्वानन्दत्वे प्रतिपादित इति निर्धारितम्। योगानां सांख्यानां साधूनां च षड्विंशदर्शनोक्तया 'एकोदेवः . . . . केवलो निर्गुणश्च' (श्वेउ. ६-११) इत्यनन्तरं 'एकोवशीनिष्क्रियाणां बहूनां . . . तमात्मस्थं येऽनुपश्यन्ति धीराः (श्वेउ. ६-१२)। 'नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्। तत्कारणं साङ्ख्ययोगाधिगम्यं ज्ञात्वा देवं मुच्यते सर्वपाशैः' (श्वेउ. ६-१३) इत्यत्र एकदेवः आत्मस्थत्वेनोपादानकारणं षड्विंश एव सोऽपिनारायण एव।

गुणैर्हि गुणवानेव निर्गुणश्चागुणस्तथा।
प्राहुरेवं महात्मानो मुनयस्तत्त्वदर्शिनः ॥ ३२०-२ ॥

इति अत्रैव पूर्वं तत्वदर्शिभि र्जीवस्वरूपनिर्धारणेन तद्रीत्या 'केवलो निर्गुणः' इत्यत्र "देवात्मशक्तिं स्वगुणैर्निरूढाम्" (श्वे. उ. १-३) इत्युपक्रमे 'गुणान्वयो यः फलकर्मकर्ता' (श्वे. उ. ५-९) इत्यत्रच गुणपदार्थभूत सत्वादिगुण शून्य इत्यर्थः न तु एतच्छ्रुतेः पूर्वं परत्र च 'ज्ञः कालकालो गुणी सर्वविद्यः' (श्वे. उ. ६-२) इत्युक्त प्रशस्तगुणविरहवान्।' स्वाभाविकी ज्ञानबलक्रिया च' (श्वे. ३-६- ) इत्यत्रैव पूर्वं ज्ञानादिनां-स्वाभा-

विकत्वोक्तेरितिबोध्यम्। 'षड्विंशमनुपश्यन्तः' इत्यत्र 'तां योगमिति मन्यन्ते' (कठ २-६-११) 'त्रिरुन्नतं स्थाप्य समं शरीरम् (श्वे. २-८)' इत्यादौ च प्रतिपादितं योगकालिकं दर्शनं विवक्षितम्। 'तत्परायणा' इति 'विज्ञानमानन्दं ब्रह्म रातिर्दातुः परायणम्। तिष्ठमानस्य तद्विदः।' (बृह. ५-१-२८) इति श्रुति घटक परायणशब्दार्थ उक्तः। अत्र पूर्वं 'तत्स्थत्वादनुपश्यान्ति, इत्यत्र सर्वशरीरिणः उपनिषदेकगम्यत्व प्रतिपादनपरा 'तं त्वौपनिषदं पुरुषं पृच्छामि' (बृ ५-१-२६) इति श्रुतिरभिप्रेता तत्रोक्तौपनिषदपुरुष एव ब्रह्म। पुरुषशब्दश्च 'स वा अयं सर्वासु पूरुषु पुरि शयः' (बृ. ४-५-१८) 'स यत्पूर्वोऽस्मात्सर्वस्मात् सर्वान् पाप्मन औषत्। तस्मात्पुरुषः। (बृ. ३-४-१) इति पूर्वं बृहदारण्यक एव निरुक्तः। अतश्च सर्वं जगत्कारणं सर्वशरीरि निरतिशयानन्दरूपं ब्रह्म प्रापकं प्राप्यमित्यर्थः सिद्धः॥ एतेन 'तदात्मानमेवावैत्' अहं ब्रह्मास्मि (बृ ३-४-१०) इति श्रुत्यर्थोऽपि निर्धारितः। श्रुतौ जीवब्रह्मस्वरूपैक्यभ्रान्ति-व्युदासायैव 'आत्मानम्' इति प्रयुक्तम्। 'आत्मै वेदमग्र आसीत्पुरुषाविधः' इति तद्ब्राह्मणोपक्रमवाक्ये आत्मनः पुरुषविधत्व मुक्तमिति पुरुषशब्दसमा-नार्थकएवात्मशब्दः। तदनन्तरं 'सोऽनुवीक्ष्य नान्यदात्मनोऽपश्यत्' सोऽह-मस्मीत्यग्रे व्याहरत्। ततोऽहं नामाऽभवत्। (बृ. ३-४-१) इत्यत्र 'एको ह वै नारायण आसीन्न ब्रह्मा नेशानः' (महोपनिषत्) 'प्रजापतिर्वा एकोऽग्रेऽतिष्ठत्स नारमतैकः' (मैत्रा. २-६) इत्यादौ प्रजापति नारायणशब्दार्थ विशेषणविरहविवक्षाया अयोगवत् 'आत्मन् शब्दार्थविशेषणविरहविवक्षाया अप्यसंभवेन ब्रह्मादि नामरूपविभाग विभक्तवस्तुदर्शनविरहो विवक्षितः। 'सोऽबिभेत्तस्मादेकाकी बिभेति' इत्यादि श्रुत्यर्थः (२५२ पु) पूर्वमेवाभिहितः। अत्र 'अहङ्कारस्ततो जातो ब्रह्मा शुभचतुर्मुखः।' इत्याद्येतदुपाख्यानवचनै रेतच्छ्रुत्यर्थस्य व्यासेन निर्णीततया स एवार्थ एतच्छ्रुतौ विवक्षितः। 'आत्मै-वेदमग्र आसीत्पुरुषविधः' इति प्रथमवाक्यविरुद्धार्थस्य 'सोऽनुवीक्ष्य नान्य-

दात्मनोऽपश्यत्' इत्यत्र यथा न विवक्षा तथैव 'सोऽबिभेत्तस्मादेकाकी बिभेति सहायमीक्षाञ्चक्रे' इति भयतदभावहेतुभूत असहायत्व सहायदर्शनार्थद्वयस्य स्फुटप्रतिपादक प्रथमवाक्याविरुद्धार्थस्य 'यन्मदन्यं नास्ति कस्मान्नु बिभेमीति—'द्वितीयाद्वै भयं भवति' इति वाक्यद्वये परेषां विवक्षण कथनमपि न घटत इत्येतेन सिद्धम्। 'तद्यदिदमाहुरमुं यजामुं यजेति एकैकं देवमेतस्यैव सा विसृष्टिरेष उ ह्येव सर्वे देवाः' (बृ उ ३–४–६) इत्यत्रैतस्योपक्रमोक्तात्मैव 'विसृष्टिः' इति सर्वदेवस्रष्टृत्वप्रतिपादनेन सर्वदेवजनकः एक एव सर्वदेवान्तर्यामी विवक्षितः 'तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियत' इत्याद्युत्तरश्रुतौ नामरूप विभागशून्यावस्था नामरूपविभागः विभक्तपदार्थप्रवेशः व्याप्तिपर्यवसितश्चप्रातिपादितः। अनन्तरं 'स यो हैत एकैकमुपास्ते' इत्यादौ व्याप्यव्यापकवस्तुषु एकैकोपासन निन्दापूर्वकं 'आत्मेत्येवोपासीत अत्र ह्येते सर्व एकं भवन्ति'। इत्यादिना सर्वव्यापकतत्त्वे विशिष्टे व्याप्यतत्वानामपि विशेषणानामन्तर्भावं 'तदेतत्प्रेयः' इत्यादिना सर्वव्यापकात्मतत्वस्यैव निरतिशयानन्दत्वं प्रतिपादितम्। अतः 'तदात्मानमेवावैत्, इत्यत्र 'अन्तः प्रविष्टः शास्ता जनानाग्ँ सर्वात्मा (तै. आ. ३–११–२) एष त आत्मान्तर्याम्यमृतः (बृ. ५–७–३) इत्युक्तदिशा आत्मानमित्यस्यान्तः प्रविश्य सर्वनियन्तार मित्यर्थः। इत्थं च अन्तः प्रविश्य नियन्तुः 'अहं ब्रह्मास्मि' इत्यत्र ब्रह्मैक्यं विवक्षितमिति सिद्धम्। षष्ठेः 'न वा अरे पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु कामाय पतिः प्रियो भवति आत्मा वा अरे द्रष्टव्यः श्रोतव्योमन्तव्यो निदिध्यासितव्यः (बृ. उ. ६–५–६) इत्यत्रात्मशब्दोऽपि अन्तःप्रविश्यनियन्तृवचन एव; तृतीयैकार्थ्यात्। अयमर्थः 'अवस्थितेरितिकाशकृत्स्नः' (शा. सू. १–४–२२) इति सूत्रे विवक्षितः। स्थितेरित्युक्तौ 'स्थित्यदनाभ्यां च' (शा. सू. १–३–६) इति सूत्र इव स्थितिमात्रं प्रतयेित। न तु 'अनवस्थितेरसम्भवा च्च नेतरः' (शा. सू. १–२–१८) इति सूत्र इव स्थिति विशेषः। 'स्थानादिव्यपदेशाच्च' (शा.

सू. १-२-१४) इति पूर्वसूत्रे आदिपदार्थसंवलिता या स्थितिः सैवानवस्थितेरित्यत्र नञर्थप्रतियोगितयाविवक्षिता। सा च नियमनादिपर्यवसितैवस्थितिरिति 'अन्तर्याम्यधिदैवाधिलोकादिषु तद्धर्मव्यपदेशात्' (शा. सू. १-२-१९) इति तदनन्तराधिकरणसूत्रे निर्धारितमित्यभिप्रेत्य 'अवस्थितेः' (शा. सू. १-४-२२) इति सूत्रितम्॥

एतेन 'तं मामायुरमृतमित्युपास्व' (कौ. उ. ३-२) इति ऋग्वेदान्तर्गत कौषीतकी ब्राह्मणेऽपि 'सम आत्मेति विद्यात्-इत्युपसंहारपर्यालोचनया इन्द्रान्तर्यामी विवक्षित इति 'स एष प्रज्ञात्मा आनन्दोऽजरो अमरः' इत्यन्तर्यामिण एवानन्दत्वं नित्यत्वं च विवक्षितमिति सिद्धम्। 'स म आत्मेति विद्यात्' इत्यत्र आत्मशब्दः अन्तः' प्रविश्य नियन्तृवचनः। 'न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन्' (शा. सू. १-१-३०) इति सूत्रे 'वक्तुरुपदेशात्' इत्यादिक्रमं परित्यज्य अन्यथानिर्देशेन 'स म आत्मेति विद्यात्' इति श्रुतिः पूर्वपक्षे विवक्षितेतिप्रतीयते। तत्र च 'मामेव विजानीहि' इत्याद्युपक्रमानुसारेण आत्मन् शब्दस्य न व्यापकचेतनार्थकता, लोके प्रयुक्तेन 'मम आत्मा' इत्येतेन तुल्यतया प्रयुक्तस्य 'म आत्मा' इत्यस्य अहमित्येवार्थः। स इत्यस्य 'एष लोकपाल एष लोकाधिपतिरेष सर्वेश्वर' इत्यन्त पूर्ववाक्यप्रतिपन्न एवार्थः इति प्रतीयते। अतः 'सम आत्मेति विद्यात्' इत्यत्रात्मन् शब्दार्थोऽपीन्द्र एवेति मामेव इत्यत्र इन्द्र एव विवक्षितः पूर्वपक्षे, सिद्धान्ते अध्यात्मसम्बन्धभूमा, इत्यत्र आत्मन्शब्दः 'एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणेऽर्पिता एष प्राण एवात्मा आनन्दः, इत्यादि 'एष सर्वेश्वर' इत्यन्तपूर्ववाक्यप्रातिपन्नं 'स म अत्मेति विद्यात्, इत्यत्र आत्मन्शब्दार्थमभिप्रेत्य प्रयुक्तः। संबन्धशब्दः 'मे' इत्यत्र संबन्ध एव षष्ठ्यर्थः पूर्वं सर्वेश्वरात्मनः तदन्येषां संबन्धानां बहूनामत्र प्रतिपादनादिति तात्पर्येण प्रयुक्तः। अतश्च 'स म आत्मेति विद्यात्' इत्यत्र आत्मन् शब्दस्य व्यापक-

चेतनार्थकतया इन्द्रान्तर्याम्येव विवक्षितः । अयमर्थः 'शास्त्रदृष्ट्या तूपदेशो वामदेववत्' (शा. सू. १-१-३१) इत्यनन्तरसूत्रे स्थाप्यते । 'तद्धैतत्पश्यन् ऋषिर्वामदेवः प्रतिपेदेऽहंमनुरभवम्' इत्यादौ 'तदात्मानमेवावैत्' इति पूर्ववाक्ये आत्मन्शब्दस्य वैय्यर्थ्यान्यथानुपपत्त्या पूर्वोपपादितरीत्यैवार्थो निर्णय इति वामदेवस्यात्मैव अनुसन्धानविषयतया विवक्षितः । अत एव तदुत्तरसूत्रे परस्य त्रिविधोपासनं विवक्षितमिति वृत्तिकारसम्मत एवार्थो व्यासतात्पर्यविषयः । अतः 'सम आत्मेति विद्यात्' (ऋ. कौ.) इत्यत्र इन्द्रान्तर्याम्येव विवाक्षितः । अयमर्थ उत्तरत्रापि स्थिरीक्रियते । सर्वत्र प्रसिध्द्याधिकरणे 'शब्दविशेषात्' (शा. सू. १-२-५) इत्यत्र 'एष म आत्मान्तर्हृदये' इति त्रेधा अभ्यस्तसामवेदान्तर्गत छान्दोग्यश्रुतौ 'म' इति भेदसंबन्ध एव विवक्षितः । अन्तर्याम्यधिकरणे 'उभयेऽपि हि भेदेनैन-मधीयते ।' (शा. सू. १-३-३१) इत्यत्र 'य आत्मनि तिष्ठन्' 'स त आत्मान्तर्याम्यमृतः' (मा. पा.) 'यो विज्ञाने तिष्ठन्' 'एष त आत्मान्तर्या-म्यमृतः (का. पा.) इति द्वाविंशतिवारमभ्यस्त शुक्लयजुर्वेदान्तर्गत बृहदारण्य-कश्रुता वपि त—इत्यत्र भेदसम्बन्ध एव विवाक्षित इति व्यवस्थापनात् । एतेन 'आत्मेति तूपगच्छन्ति ग्राहयन्ति च' (शा. सू. ४-१-३ इति सूत्रे शब्दान्तरं विहाय आत्मन्शब्दप्रयोगेण 'अहं ब्रह्मास्मि' इत्यत्र 'तदात्मान-मेवावैत्' इत्यत्रात्मन्शब्दस्य प्रागुक्त तात्पर्यानुसारेण अस्मदर्थोऽन्तर्याम्येव विवक्षित इति व्यासस्याशयः । एतेन 'ऐतदात्म्यमिदं सर्वं स आत्मा' इति श्रुत्यर्थस्यापि निर्धारणेन 'तत्वमसि, इत्यत्रापि अन्तर्याम्यभेद एव विवक्षित इति सिद्धम् । तदेतत्सर्वमभिप्रेत्योक्तम् 'अवस्थितेरिति काशकृत्स्नः' (शा. सू. १-४-२२) इति सूत्रे अधिकरणसारावल्यामाचार्यपादैः 'तत्स्थत्वा-त्काशकृत्स्नो यदिह निरवहत्साङ्ख्यसिद्धान्त एषः' इति । व्यासार्यैरपि जनक-याज्ञवल्क्यसंवादे पूर्वापरपरामर्शपूर्वकं 'तत्स्थत्वादनुपश्यन्ति ह्येक एव' इत्युक्तार्थ एव सूत्रे विवक्षित इति निर्णीतः । एतेन न्यायरक्षामणौ आचार्य-

पादव्यासार्यसिद्धान्तितार्थस्य पूर्वापरपरामर्शविकलैरुत्प्रेक्षितत्त्वोक्तिः निरवकाशा। 'जन्ममृत्युभयाद्भीताः' 'षड्विंशमनुपश्यन्तः' इत्युक्त्या 'उदरमन्तरं कुरुते—अथ तस्य भयं भवति' (तै. उ. ३-३-७) इति श्रुतावपि 'आनन्दं ब्रह्मणो विद्वान्। न बिभेति कदाचन' इत्यत्र ब्रह्मसंबन्ध्यानन्दज्ञानस्यैव भयनिवर्तकत्वस्य 'एष ह्येवानन्दयाति' इत्यत्र ब्रह्मणश्चेतनानामानन्दयितृत्वस्यचोक्त्या परसंमतार्थो न विवक्षितः किन्तु पञ्चविंशजीवस्य षड्विंशदर्शनस्य विच्छेदाभाव एव विवक्षितः इति निर्णीतं भवति। अयमर्थः श्रीभाष्ये स्फुटः। अत्र अच्युत-शब्देन, परायण-शब्देन च सगुणात्मवादे सङ्कोच विसात्मक स्वरूप परिणामशून्यत्वेन सगुणस्य कूटस्थनित्यता, सगुणस्यैवानन्दरूपत्वेन प्राप्यता, प्रापकता च संभवतीति 'यच्छिवं नित्यम्' इति युधिष्ठिरेण पृष्टोऽर्थः सम्यगुत्तरितो भवति। बहूनां षड्विंशदर्शनस्य पञ्चविंशषड्विंशैक्यज्ञानविरहस्य च प्रतिपादनेन 'तमात्मस्थं येनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम्' इति निर्गुणश्रुतिसमनन्तरश्रुतौ निर्गुणश्रुतेर्निर्विशेषपरतावादिमते बहूनां नित्यसुखलाभोक्तिः, 'योगाः साङ्ख्याश्च' इत्युक्त्या 'नित्यो नित्यानाम्' 'तत्कारणं साङ्ख्ययोगाधिगम्यम्' इत्यत्र बहुचेतनानां मोक्षपर्यन्तकामविधातृत्वस्योक्तिरपि न घटत इति बोधितम्। 'यदा स केवलीभूतः—न पुनर्जन्म विन्दते' (८०) इत्यत्र मुक्तिफलकत्वमुक्तम्। एवञ्च 'नित्यो नित्यानाम्' तत्कारणं सांख्ययोगाधिगम्यम्' इत्यादिश्रुत्यर्थनिर्धारणमुखेन जनकवसिष्ठसंवादजनकयाज्ञवल्क्यसंवादयोर्विस्तरेण प्राक्सिद्धान्तितार्थः 'नारायणपरा वेदाः' 'नारायणपरं सांख्यम्' इत्याद्युत्तरं 'तत्त्वं जिज्ञासमानानाम्' इति श्लोके संगृहीत इति बोध्यम्। एवं च नारायणस्य सर्ववेद तात्पर्यविषयत्वं परत्वं चाप्रकम्प्यमिति तस्यैव चतुर्मुखप्रार्थनया वेदाद्याहरणार्थमवतीर्णस्य हयशिरसोऽपि परत्वं सिद्धम्।

अत्र महाभारते उपक्रमप्रभृतिनारायणस्य जगत्स्रष्टृत्वादिरूपपरत्वमभिधाय जनकयाज्ञवल्क्यसंवादे तत्स्थत्वेनैक्यं प्रतिपाद्य अस्मिन् हयशिर

उपाख्याने 'तत्वं जिज्ञासमानानाम्' इति श्लोके सङ्ग्रहेण तस्यार्थस्याभिधानेन 'अथ पुरुषो ह वै नारायणोऽकामयत' इत्यादिना सृष्ट्यादिकमभिधाय 'ब्रह्मण्यो देवकीपुत्रो ब्रह्मण्यो मधुसूदनोम् । सर्वभूतस्थमेकं नारायणम् । कारणरूपमकारपरब्रह्मोम् ।' इत्यन्ते हयशिरोऽवतारमप्यभिप्रथतां नारायणोपनिषदस्तात्पर्यं व्यासेन निर्धारितं भवति ।

यद्यपि देवीभागवते प्रथमस्कन्धे पञ्चमाध्याये "कदाचिद्विष्णुर्दशवर्षसहस्राणि युद्धं कृत्वा परिश्रान्तः सन् कुत्रचित् पद्मासने स्थित्वा धरास्थितं सज्यं धनुः कण्ठदेशे अवलम्ब्य धनुष्कोट्यां भारं दत्वा निद्रामाप । तदा ब्रह्मादयो देवा यज्ञं कर्तुमुद्युक्ता अभवन् । एतस्मिन्नवसरे 'भगवतो निद्राभङ्गोपायं चिन्तयत' इति देवान् मतीन्द्रः प्राह । शङ्करश्च 'हे देवाः निद्राभङ्गेऽस्ति महद्दूषणम् । अकृते च निद्राभङ्गे यज्ञो न निर्वर्तेत । सेयमुभयतः पाशा रज्जुः ।' इत्यवोचत् । चतुर्मुखस्तु वम्रीमुत्पाद्य तां प्रति 'धनुरग्रं भक्षय' इत्यादिदेश । सा तु 'निद्राभङ्गो ब्रह्महत्यासदृशः । यद्यपि स्वार्थपरो लोकः पापं कुरुते । न चात्र किञ्चित्स्वार्थं पश्यामि । अतः किञ्चिदपि स्वार्थमुपलभ्येत चेद्धनुष्कोटिं भक्षयामि' इत्यवोचत् । चतुर्मुखस्तु 'होमकर्मणि कुण्डाद्बहिः पार्श्वभागे हविर्दानाद्यत्पतिष्यति तच्चे भागं कल्पयामि । प्रकृतकार्यं कृत्वा विष्णुं बोधय' इत्यवोचत् । ततो वम्री भूमौ स्थितं धनुष्कोटिं चखाद । तदा ज्या विमुक्ताऽभूत् । प्रत्यञ्चायां विमुक्तायामुत्तरा कोटिरपि विमुक्ताऽभूत् । तदा घोरः शब्दोऽभवत् । तेन देवास्तत्रसुः । ब्रह्माण्डं क्षुभितम् । वसुधा कम्पिता । समुद्राश्च समुद्विग्नाः । जलजन्तवस्तत्रसुः । उग्रा वाता ववुः । पर्वताश्चकम्पिरे । दुःखशंसिनो महोत्पाता बभूवुः । घोरतरा दिश आसन् । सूर्यश्चास्तं गतोऽभवत् । दुर्दिनेऽस्मिन् किं वा भवेदिति देवाश्चिन्तामवापुः । एतस्मिन्नन्तरे सकुण्डलं समकुटं च विष्णोः शिरः क्वापि तिरोदधे । तदेतद्दृष्ट्वा देवाः शोककर्शिता अभवन् । रुरुदुश्च भृशं 'हे नाथ त्वमदाह्यः, अभेद्यः, अच्छेद्यश्चासि । कस्य वेयं

माया यया ते शिरो हृतम्। त्वयि चैवं गते देवता मरिष्यन्ति हि। अयं च विघ्नो न दैवकृतः नापि राक्षसकृतः। अस्माभिरेवायं विघ्नः कृतः। पराधीनास्सर्वे किं कुमः? क वा व्रजामः? मूढचेतसामस्माकं शरणं नैवास्ति। हे मायेश! जगद्गुरोः शिरश्छेदिनीयं माया न सात्त्विकी नापि राजसी। महदिदं दुःखमस्माकमुपस्थितम्' इति। क्रन्दमानांश्च तान् दृष्ट्वा 'हे देवाः क्रन्दनेन किं प्रयोजनम्? यथा बुद्ध्युपायोऽत्र विधेयः। दैव-पुरुषकारावुभावपि देवेशसदृशौ। अनुष्ठितस्सर्वोऽप्युपायो देवादेव फलति हि' इति बृहस्पतिरुवाच। इन्द्रस्तु बृहस्पतिमतं खण्डयन्नाह 'यतस्सुरेषु पश्यत्स्वेव विष्णोरपि शिरश्छिन्नमतः पौरुषं निरर्थकं, दैवबलमेव वरिष्ठम्' इति। चतुर्मुखस्त्वेवमाह 'सर्वोऽपि सुखदुःखयोरुपभोक्ता भवति। सुखमेव वा दुःखमेव वा दैवमतिक्रमितुं कः प्रभवेत्? अतो यथाकालं दैवादागतं शुभमशुभं वा भोक्तव्यमेवावश्यम्। यथा ममापि शिरः शम्भुना कदाचित्कृत्तम्। शापवशाल्लिङ्गस्यापि पात आसीत्। इन्द्रस्य स्वर्गाद्-भ्रंशादयोऽभवन्। संसारेऽस्मिन् केन वा दुःखं न भुज्यते? अतो यूयं धैर्यमवलम्ब्य सनातनीं मायां चिन्तयत। सा च नः कार्यं विधास्यति' इति। एतच्छ्रुत्वा देवा मायां बहुधा तुष्टुवुः। प्रसन्ना च माया अशरीरिणी आकाशस्था सती 'हे देवाः मा चिन्तयत। अहं परितुष्टास्मि। न हि कारणं विना कार्यमुदेति। विष्णोः शिरसोऽपगमे ह्यस्ति कारणयुगलम्।

१. कदाचिन्महाविष्णुः स्वसमीपे स्थिताया महालक्ष्म्या वदनं वीक्ष्य जहास। लक्ष्मीरपि 'कारणमन्तरा कथं हास्यस्य सम्भवः? निश्चयेनायं सपत्निकः स्यात्'' इति निश्चित्य तामसशक्त्यावेशेन सपत्नीजनितदुःखादपि स्ववैधव्यमेव वरं मन्यमाना कोपातिरेकेण 'शिरस्ते पततु' इति विष्णुं शशाप। अतो विष्णोः शिरो लवणसागरे निमग्नमभूत्।

२. अन्यच्च पुरा हयग्रीवो नामासुरः मामकमेकाक्षरं जपन् निराहारोऽतिदारुणं तपश्चक्रे। तदा प्रसन्नाहं सिंहोपरि स्थिता सती वरं वरये-

त्यवोचम्। सोऽप्यसुरो मदीयं रूपं दृष्ट्वा हर्षाश्रुपूर्णनयनो मां बहुधा स्तुत्वा 'हे मातः, जरामरणादि रहितः सुरासुरैरजेयश्च यथा भवेयं तथा मामनुगृहाण' इत्यवोचत्। मया चोक्तम्—असुर! जातस्य मृत्युर्ध्रुवः। ध्रुवं जन्म मृतस्य च। इयं च लोकमर्यादा न केनाप्यतिक्रमितुं शक्या। अतः स्वमरणमवश्यंभावीति निश्चित्यान्यं वरं वरयेति। तदा सुरो हय-ग्रीवादेव मे मृत्युर्भविता नान्यस्मादित्यवृणोत्। मया तथैव वरं दत्तम्। एवं वरदर्पितः सोऽसुरः सम्प्रति मुनीन् देवांश्च पीडयति। भुवनत्रयेऽपि हन्ता तस्य न कोऽप्यस्ति। सम्प्रति त्वष्टा विष्णोः शरीरे मनोहरं हयशिरो योजयति। भगवांश्च हयग्रीवः पापिष्ठं हयग्रीवासुरं हनिष्यति' इत्यभि-धायान्तर्दधे शक्तिः। श्रुत्वा चैतत् देवा अचोदयन्देवशिल्पिनमश्वशिरो-योजनाय। त्वष्टा वाजिशिरः खड्गेन संछिद्य युयोज विष्णोश्शरीरे। एवं मायाप्रसादतो हयग्रीवो हरिर्जातः'' इति प्रतिपादितम्। एतदध्यायारम्भे व्याख्यायाम् 'इयं चाख्यायिका शतपथब्राह्मणे प्रवर्ग्यारम्भेऽभिहिता' इति नीलकण्ठेनोक्तम्।

तथापि शतपथब्राह्मणे उक्तार्थो न दृश्यते। तथा हि—काण्वशाखायां प्रवर्ग्यारम्भे "देवा ह वै सत्रं निषेदुरग्निरिन्द्रस्सोमो मखो विष्णुर्विश्वेदेवा अन्यत्रैवाश्विभ्यां तेषां कुरुक्षेत्रं देवयजनमास तस्मादाहुः कुरुक्षेत्रं देवानां देवयजनमिति तस्माद्यत्रक्वच कुरुक्षेत्रस्य निगच्छति तदेव मन्यत इदं देवयजनमिति तद्धि देवानां देवयजनम् ॥ १ ॥

त आसत श्रियं गच्छेम यशःस्यामान्नादाः स्यामेति तथो एवेमे सत्रमासते श्रियं गच्छेम यशःस्यामान्नादाः स्यामेति ॥ २ ॥

तेहोचुर्यो नः श्रमेण तपसा श्रद्धया यज्ञेनाहुतिभिर्यज्ञस्योदृचं पूर्वोऽ-वगच्छात्सनः श्रेष्ठोऽसत्तदु नस्सर्वेषाग्ँ सहेति तथेति तद्विष्णुः प्रथमः प्राप स देवानाग्ँ श्रेष्ठोऽभवत्तस्मादाहुर्विष्णुर्देवानाग्ँ श्रेष्ठ इति सयः स विष्णुर्यज्ञः स य स्स यज्ञोऽसौ स आदित्यस्तद्धेदं यशो विष्णुर्न शशाक संयन्तुं तदिदमप्येतर्हिनैव सर्व इव यशः शक्नोति संयन्तुम् ॥ ३ ॥

स तिसृधन्वमादायापचक्राम स धनुरार्त्न्या शिर उपष्टभ्य तस्थौ तं देवा अनभिधृष्णुवन्त समन्तं तुरिण्यविशन्त ता ह वम्र्य उत रिमा वै वम्र्यो यदुपदीका योऽस्य ज्यामप्यद्याक्तिमस्मै प्रयच्छेतेत्यन्नाद्यमस्मै प्रयच्छेमापि धन्वन्नपोऽधिगच्छेत्तथास्मै सर्वमन्नाद्यं प्रयच्छेमेति तथेति तस्योपपरासृत्य ज्यामपि जक्षुस्तस्यां छिन्नाया धनुरार्त्न्यौ विस्फुरन्त्यौ विष्णोः शिरः प्रचिच्छिदतुः ॥ ४ ॥

तद्घृङ्ङिति पपात तत्पतित्वासावादित्योऽभवदथेतरः प्राङेव प्रावृज्यत तद्यद्घृङ्ङित्यपतत्तस्माद्घर्मोऽथ यत्प्रावृज्यत तस्मात्प्रवर्ग्यः ॥ ५ ॥

ते देवा अब्रुवन्महान्वत नो वीरोऽपादीति तस्मान्महावीरस्तस्य यो रसो व्यक्षरत्त पाणिभिस्सममृजुस्तस्मात्संराट् ॥ ६ ॥

तं देवा अभ्यमृज्यन्त यथा वित्तिं वेत्स्यमाना एवं तमिन्द्रः प्रथमः प्राप तमन्वङ्गमन्वनुन्यपद्यत तं पर्यगृह्णात्तं परिगृह्येदं यशोऽभवद्यदिदमिन्द्रो यशो यशो ह भवति य एवं वेद ॥ ७ ॥

स उ एव मखः स विष्णु स्तत इन्द्रो मखवानभवन्मखवान् ह वै तं मखवानित्याचक्षते परोक्षं परोक्षकामा हि देवास्ताभ्यो वम्रीभ्योन्नाद्यं प्रायच्छन्नापौहवै सर्वं मन्नं ताभिर्हीदमभिक्नूयमिवादन्ति यदिदं किं वदन्ति ॥ ८ ॥

अथेमं विष्णुं यज्ञं त्रेधा व्यभजन्त वसवः प्रातस्सवनगँ् रुद्रा माध्यन्दिनगँ् सवनमादित्यास्तृतीय सवन मग्निः प्रातस्सवनं त्रिष्टुब् माध्यादिनगँ् जगती तृतीय सवनं तेना वशीर्ष्णा यज्ञेन देवा अर्चन्तः श्राम्यन्त श्चेरुः ॥ ९ ॥

दध्यङ् ह वा अथर्वण एतगँ् शुक्र मेतं यज्ञं विदाञ्चकार यथा यथैतद्यज्ञस्य शिरः प्रतिधीयते यथैष कृत्स्नो यज्ञो भवति सहेन्द्रेणोक्त आसै तं चेदन्यस्मा अनुब्रूयास्तत एव ते शिरश्छिन्द्यामिति तदु हाश्विनो रनुश्रुतमास ॥ १० ॥

दध्यङ्ङु ह वा आथर्वण एतगँ् शुक्रमेतं यज्ञं वेद यथा यथैतद्यज्ञस्य शिरः प्रतिधीयते यथैष कृत्स्नो यज्ञो भवतीति तौ हेत्यूचतुरुप त्वा

यावेति किमनु वक्ष्यमाणा विल्येतगँ् शुक्रमेतं यज्ञं यथायथैतद्यज्ञस्य शिरः प्रतिधीयते तथैष कृत्स्नो यज्ञो भवतीति ॥ १२ ॥

स होवाचेन्द्रेण वा उक्तोस्म्येतं चेदन्यस्माऽनुब्रूयास्तत एव ते शिरश्छिन्द्यामिति तस्माद्वै बिभेमि यद्वै मे स शिरो न छिन्द्या न्न वा मपनेष्य इति तौ होचतुरावां त्वा तस्मात्रास्यावह इति कथं मा त्रास्येथे इति यदा नो उपनेष्यसेऽथ ते शिरश्छित्वाऽन्यत्रापनिधास्यावोऽथाश्वस्य शिर आहृत्य तत्ते प्रतिधास्याव स्तेन नावनुवक्ष्यसि स यदा नावनुवक्ष्यस्यथ ते तदन्द्रिः शिरश्छेत्स्यत्यथ ते स्वगँ शिर आहृत्य तते प्रतिधास्याव इति तथेति तौ होपनिन्ये तौ यदोपनिन्येऽथास्य शिरश्छित्वा न्यत्राप निदधतु रथाश्वस्य शिर आहृत्य तद्धास्य प्रतिदधतुस्तेन हाभ्यामनूवाच स यदाभ्या मनूवाचाथास्य तदिन्द्रः शिराश्चिच्छेदाथास्य स्वगँ शिर आहृत्य तद्धास्य प्रतिदधतुः ॥ २२ ॥

तस्मादप्येतदृषिणाभ्यनूक्तं दध्यङ्ह यन्मधाथर्वणो वा अश्वस्य शीर्ष्णा प्रयदीमुवाचेत्ययतं तदुवाचेति है वै तदुक्तम् ॥ १३ ॥ इति श्रूयते ॥

अत्र शक्तेः तत्प्रार्थनाया स्तदनुग्रहस्य च लेशतोऽपि प्रतीतिर्नास्ति। विष्णोरश्वशिरस्सन्धानकथैव नास्ति। दध्यङ् ऋषेः खल्वश्वशिरस्सन्धानमत्रप्रतिपाद्यते। दीक्षणीयार्थवादे तैत्तिरीय प्रवर्ग्यार्थवादेऽपि ।विष्णुशब्दस्य यजमानपरतायाः, सायणभाष्यनिर्णीतदिशा अत्रापि प्रवर्ग्यार्थवादे विष्णुशब्दः यजमानपरः। हरिवंशाद्युक्तदिशा गौणप्रादुर्भावपरो वा इति पूर्वमेव निरूपितम्। हयशिरउपाख्याने चात्र नारायणशब्देनोपक्रम्य 'विद्यासहायवान्देवः' इत्याद्युक्त्या सर्वविद्याधिदेव्यावाण्याः पतिर्नारायणः प्रतिपादित इति स्फुटं विदुषाम्। तेन च ब्रह्मवैवर्तवचनैकार्थ्यबोधनेन ब्रह्मवैवर्ते च नारायणाभिन्नस्य कृष्णस्यैव विभूतित्वं शक्तेः प्रतिपादितामिति तदनुग्रहेण विष्णोरश्वशिरो लाभो न कथञ्चिदप्युत्प्रेक्षापदमर्हतीति व्यासेनैव निर्धारितं भवति। मत्स्यावतारवृत्तान्तो बहुषु पुराणेषु अनेकरूप एव दृश्यते। तत्र

क्वचिच्छेषपूरणेन तदसम्भवे कल्पभेदेन वा व्यवस्था कार्या । देवीभागवतव्यतिरिक्तार्षप्रबन्धेषु सर्वत्र हयशिरोऽवतारो वेदाहरणार्थं भगवता परिकल्पित इति प्रतिपादनेन देवीभागवतमात्रे देव्युपासनया फललाभार्थं प्रयतमानानां प्ररोचनार्थमेव हयशिरोवृत्तान्तभेदः । देवीभागवत एव नवमस्कन्धे ब्रह्मवैवर्तसिद्धान्तस्यैव प्रतिष्ठापनेन शक्तिविशिष्ट नारायणाभिन्न कृष्णस्य परत्व एव परमं तात्पर्यम् । पूर्वोक्त हयशिरोवृत्तान्तपरपञ्चमाध्यायस्तु शक्तिप्रशंसार्थोऽर्थवाद इति न तत्र तात्पर्यमिति सुधीभिर्विभावनीयम् । अत एव शङ्कराचार्यैः विष्णुसहस्रनामभाष्ये तीर्थकर नामविवरणे 'हयग्रीवरूपेण मधुकैटभौ हत्वा विरिञ्चाय सर्गादौ सर्वाः श्रुतीरन्याश्च विद्या उपादिशन्' इत्यनेन अत्र हयशिर उपाख्याने व्यासेन प्रदर्शितो हयशिरोऽवतारवृत्तान्तः प्रकाशितः । देवीभागवतोक्त हयशिरोवृत्तान्तस्तु न क्वापि शङ्कराचार्यादिभिः प्राचीनैः प्रामाणिकैर्विद्वद्भिरादृतः । अत एव रसगङ्गाधरकृता पाण्डित्यवीरो यथा—

अपि वक्ति गिरां पतिस्स्वयं यदि तासामधिदेवतापि वा ।
अयमस्मि पुरा हयाननस्मरणोल्लङ्घितवाङ्मयाम्बुधिः ॥ इति ॥

हयग्रीवस्य सर्वविद्याधिदेवश्रेष्ठत्वप्रतिपादनेन वेदाहरणाद्यर्थमवतार इत्यर्थस्य बहुप्रमाणसिद्धस्यैव प्रख्यापनं कृतम् । अत एव च लोके हयग्रीवस्य विद्याधिदेवश्रेष्ठत्वनिश्चयेनैव सर्वत्र बहुभिः पुरुषैराराधनादिकमनुष्ठीयते । तेन च (वि. ध. उ. १ खं—१६ अ.) भारतोक्तादिशा हयग्रीवावतारचरितमभिधाय 'विद्याकामोऽश्वशिरसम्' (वि. ध. उ. ३—१२१ अ.) इत्याद्युक्तदिशा फलमप्यनुभूयते इत्यौपनिषद हयग्रीवमन्त्रानुमन्त्रनिष्ठाना मनुभव सिद्धोऽयमर्थ इति नात्र कस्य चिद्विवादस्यावसरः ।

अत्रायं प्रमाण सम्प्रदाय सिद्धार्थसङ्ग्रहः स्सुधीभिरवसेयः । हयशिरो निरूपणावसरे व्यासेन 'विद्यासहायवान्देवः' (ह. उ. १८) 'एको विद्यासहायस्त्वम्' (ह. वं ३-७२- ) 'अन्तस्थं सर्वभूतेषु चरन्तं विद्यया सह' (ह. वं ३-१८-२७) इत्यादिना विद्यासहाय एव हयशिराः मधुकैटभहन्ता

ब्रह्मणे वेदप्रदाता चेत्युक्तम् । एवमेव ‘ विद्यासहायवन्तं मामादित्यस्थम् ’ (ना. आं. ६-६१) इत्यादित्यस्थोऽपि विद्यासहायो वासुदेव इत्यभिहितम् । ‘ नमस्सवित्रे ’ (वि. पु. ३-५-१५) ‘ ध्येयाय विष्णुरूपाय ’ (१७) ‘ इत्येवमादिभिस्तेन स्तूयमानस्स वै रविः । वाजिरूपधरः प्राह व्रीयतामिति वाञ्छितम् । (वि. पु. ६-४-२५) ‘ यजूंषि यैरधीतानि तानि विप्रैर्द्विजोत्तम । वाजिनस्ते समाख्यातास्सूर्योऽप्यश्वोऽभवद्यतः ’ (वि. पु. ३-५-२८) ‘ शाखाभेदास्तु तेषां वै दश पञ्च च वाजिनाम् । काण्वाद्यास्तुमहाभागा याज्ञवल्क्याः प्रकीर्तिताः ॥ (२९) इति पराशरेण ‘ स इदग्निः कण्वतमः कण्वसखा ’ (ऋ. वे. १०-११५-५) ‘ वाजिन्तमाया ’ (६) इति ऋग्वेदे कण्वप्राचार्यस्य ‘ घर्मा समन्तात्रिवृतं व्यापतुः ’ (ऋ. वे. १०-११४-१) ‘ यावद्ब्रह्म विष्ठितं तावतीवाक् ’ (ऋ. वे. १०-११४-८) इत्यव्यवहितपूर्वसूक्ते वाग्देवी ब्रह्मरूप घर्मशब्दार्थप्रतीत्यनुसार्यतिशयित वाजित्व तात्पर्यवर्णनपूर्वकम् ‘ आदित्यानीमानि शुक्लानि यजूँषि वाजसनेयेन याज्ञवल्क्येनाख्यायन्ते ’ (बृ. ८-५-३) इति बृहदारण्यकश्रुतितात्पर्यं निर्णीतम् । एतेन ‘ आदिद्गन्धर्वो अभवद्द्वितीयः ’ (तै. सं. वा. सं वि. सू. इत्युदाहृतश्रुतौ वाजसनेयककाण्वसंहिताभाष्ये सायणाचार्यैः गोःवाचः धारयिता इति गन्धर्वशब्दार्थविवरणेन गन्धर्वशब्दार्थः ‘ वाचस्पतिं विश्वकर्माणम् ’ (तै. सं. वा. सं वि. सू.) इति अव्यवहितसूक्तोक्तवाचस्पतिरेवेति पूर्वोक्तर्थस्सुस्थः ।

मत्स्यकूर्मवराहाश्वसिंहरूपादिभिः स्थितिम् ।
चकार जगतो योऽजस्सोऽद्य मामालपिष्यति ॥

(वि. पु. ५-१७-१०)

इत्यत्र नृसिंहपर सिंहशब्द समभिव्याहारेण अश्वः अश्वशिराः विवक्षितइति बोधयतः पराशरस्य याज्ञवल्क्याय शुक्लयजुर्वेदोपदेष्टा अश्वोऽपि अश्वशिरा इत्याशयः स्फुटो निर्मत्सराणां विदुषाम् । श्री भागवतेऽपि

'मत्स्याश्वकच्छप वराह नृसिंह हंस राजन्य विप्रविबुधेषु कृतावतारः' (१०-२-४३) इत्यत्राश्वः 'विष्णुश्शिवाय जगतां कलयावतीर्णस्तेनाहृता मधुभिदा श्रुतयो हयास्ये' (११-४-१७) इति वक्ष्यमाणो हयास्य एवेति बोध्यम्। 'पुनश्च पद्मा संभूतादित्योऽभूद्यदा रविः' (वि. पु. १-९-१४३) इत्यादित्यस्य लक्ष्मीपतित्वं पराशरेणोक्तम्। तेन च लक्ष्मीपतिरेवाश्वोऽत्र विवक्षितः। 'हृषीकेशस्स भगवान् पद्मया सह विद्यया। अप्स्वेव शयनं चक्रे योगनिद्रामुपागतः॥ (ल. तं. ५-३०) विद्या सहायवन्तं मामादित्यस्थम्' (ना. आ.) इति लक्ष्मीतन्त्राद्यनुसारेण पद्मा विद्यैवेति विद्याशब्दित वाग्देवी-पतिरेव शुक्लयजुर्वेदोपदेष्टा अत्रापि विवक्षितः। 'विवस्वतेऽश्वशिरसे चतुर्मूर्तिधृते नमः' (ना. आ. ८-१०४) इति व्यासः आदित्यो हयशिरा इति स्फुटं प्रतिपादयति। 'सर्व विद्याधिदेवी या तस्यै वाण्यै नमो नमः।' (ब्र. वै. २) 'महाविद्या महावाणी भारती वाक् सरस्वती' (ल. तं. ४-६७) इति ब्रह्मवैवर्तलक्ष्मीतन्त्रोक्तदिशा 'विद्यासहाय' इत्यादौ विद्याशब्देन वाग्देव्या बोधनेन ब्रह्मणो वेदानामुपदेष्टा याज्ञवल्क्यस्य शुक्लयजुर्वेदानामुपदेष्टा च वाग्देवीपतिर्हयशिरा इति व्यासस्याशयः प्रतीयते।

अमरसुधोदाहृतमेदिनीकोशे हंसशब्दस्य विष्णवर्कतुरङ्गमप्रभेदार्थकतायाः स्फुटमुक्त्या 'एको हगँसो भुवनस्य मध्ये स एवाग्निस्सलिले सन्निविष्टः' (श्वे. उ. ६-१५) इति श्रुतौ उभावुपदेष्टारौ विवक्षितौ। तदुत्तरं 'ज्ञः कालकालो गुणी सर्वविद्यः' 'यो ब्रह्माणं विदधातिपूर्वं यो वै वेदांश्च प्रहिणोति तस्मै' इत्याद्युक्तेः। 'अहं हयशिरा भूत्वा' इत्युत्तरं दशावतारान्निरूप्य 'हंसः कूर्मश्च मत्स्यश्च' इत्यादिना (ना. आ.) हंसघटितदशावतारनिगमने हंसः हयशिराः इति बोधितम्। तद्वत् 'एको हगँसः' इत्यत्रापि हंसः हयशिरा एव। स एव सलिले-सन्निविष्टोऽग्निः विवक्षितः प्राक् (२६० पुटे) उदाहृतवचनानुसारात्। 'महिदासाभिधो जज्ञे इतरायास्तपोबलात्। साक्षात्स भगवान्विष्णुर्यस्तन्त्र

वैष्णवं व्यधात् ।' (आ. सू. भा. १–१–३१) इति ब्रह्माण्डोक्त्या वैष्णवतन्त्रप्रवर्तक महिदासप्रवर्तिते 'ऋग्वेदपाठपठितं व्रतमेतत्सुदुश्चरम्' (शा. मो. ३५८–२२) इति सात्वतधर्मपरत्वेन निर्णीत ऋग्वेदान्तर्गते शौनकोक्त ऋग्विधान विष्णुधर्मोत्तरयोः वाग्मित्वसंपादनेविनियुक्तस्य जगत्स्रष्टृत्वादिनिरवधिकमहिमवाग्देवी प्रतिपादकस्य 'अहं रुद्रेभिः' (ऋ. १०–१२५) इत्याद्यष्टर्चवाक्सूक्तस्याव्यवहितपूर्वसूक्ते 'बीभत्सूनां सयुजं हंसमाहुरपां दिव्यानां सख्ये चरन्तम् । अनुष्टुभमनु चर्चूर्यमाणमिन्द्रं निचिक्युः कवयो मनीषा' इति मन्त्रं प्रस्तुत्य 'वाचि वै तदैन्द्रं प्राणं न्यचाय्यन्नित्येतदुक्तं भवति' इत्यैतरेय द्वितीयारण्यके उक्त्या वाग्देवीसंश्लिष्टः प्राणः हंसो हयशिराः हयग्रीवानुष्टुप्प्रतिपाद्य स्तत्र विवक्षितइतिनिर्णयसंभवात् । शुक्लयजुर्वेदोपदेष्टुःसूर्यस्य प्राक् (४०) सात्वतप्रवर्तकत्वस्य, तदुक्तविधिना उपरिचरवसोर्धर्मानुष्ठानस्य सात्वतापरपर्याय पञ्चरात्रप्रामाण्यस्य च निरूपणानन्तरं रहस्याम्नायादौ प्रसिद्धविद्याशब्द-निर्देशपूर्वकं हयशिरोवृत्तान्तवर्णनेन पञ्चरात्र प्रसिध्यनुसारेणार्थनिर्णयस्यैव स्वसंमतत्वसूचनेन 'अथ हंसमनुं वक्ष्ये' इत्युपक्रम्य 'हयग्रीवमहं वन्दे सरस्वत्या समन्वितम्' (वि, ति.) इति ध्यानोक्त्या 'हंसो हयशिरा हरिः । वेदोपदेशसमये मां विबोध्योपदिष्टवान् । अङ्केनोदूह्य वाग्देवीमाचार्यकमुपाश्रितः । (पं. रा, सं, हं, स, स. न. अ,) इत्युक्त्या च तदनुसारेण हंसशब्दार्थस्य व्याससंमतत्वनिश्चयात् । तदुत्तरं 'तपः प्रभावाद्देवप्रसादाच्च ब्रह्म ह श्वेताश्वतरोऽथ विद्वान्' (श्वे, उ.) इत्यत्र 'मही देवस्य सवितुः परिष्टुतिः' (श्वे, उ. २–४) 'युजे वां ब्रह्म पूर्व्यं नमोभिः' (श्वे, उ, २–५) 'ब्रह्मोडुपेन प्रतरेत विद्वान् स्रोतांसि सर्वाणि भयावहानि' (श्वे, उ, २–८) इति पूर्वोपदर्शितदिशा श्वेताश्वेन वाग्देवीसंश्लिष्टेन ब्रह्मणा उडपेन भयावहानि स्रोतांसि तरतीति श्वेताश्वतर इति शब्दस्यार्थ इति निर्मत्सराणां स्फुटं प्रतीतेश्चेति व्यासस्याशयः । बृहदारण्यकोपसंहारे 'अथ य इच्छे त्पुत्रो

मे पण्डितः' (बृ, उ, ६–४–१८) इत्यादिनापण्डितपुत्रार्थकर्मनिरूपणावसरे 'अथास्य दक्षिणं कर्णमभिनिधाय वाग्वागिति त्रिः' (२५) इत्यत्र 'यस्ते स्तनश्शशयः––सरस्वति तमिह धातवे करिति' (२७) इत्यत्र वाचस्सरस्वत्याश्च पाण्डित्य संपादकत्वस्य स्फुटतया 'नैवेह किञ्चिनाग्र आसीत्' इत्याद्युपक्रमे अनिरुद्धान्तसृष्टेः व्यासार्यविवरणमनुसृत्यैव प्राक् (२५० पु.) उपपादितदिशा विवक्षिततया 'स एषोऽप्सु प्रतिष्ठितः' इत्युक्तस्याप्सु प्रतिष्ठितस्यैव 'स तया वाचा तेनात्मना इदगुँ सर्वमसृजत यदिदं किञ्च ऋचो यजूगुँषि सामानि छन्दागुँसि यज्ञान् प्रजाः पशून्' (बृ, ३–२–५) इत्यत्र सर्वस्रष्टृत्वोक्तौ वाक् अनिरुद्धशक्तिः सर्वविद्याधिदेवी विवक्षितेति 'ततो भूयोजगत्सृष्टिं करिष्यामीह विद्यया' (ना, आ, ६–७३) इति वचनसंदर्भे स्फुटं व्यासेन प्रतिपादितम्। 'सोऽकामयत भूयसा यज्ञेन भूयो यजेय' इत्यनन्तरश्रुतौ हयशिरोदेवताको यज्ञो विवक्षित इति प्राक् (२५२ पृटे) निरूपितम्। तदुत्तरम् 'आत्मैवेदमग्र आसीत्पुरुषविधः सोऽनुवीक्ष्य नान्यदात्मनोऽपश्यत् सोहमस्मीत्यग्रे व्याहरत् ततोहं नामा भवत्। (बृ, ३–४–१) 'सोऽबिभेत्तस्मादेकाकी बिभेति सहाय मीक्षाञ्चक्रे यन्मदन्यन्नास्ति कस्मान्नु बिभेमीति तत एवास्य भयं वीयाय' (२)। इत्यत्र 'ततोऽहं नामाऽभवत्' इत्यन्तवाक्यस्य प्राक् (२५१ पुटे.) उदाहृत व्यासार्यसूक्तिमनुसृत्य हयशिरोऽवतारो विवक्षितः। श्रुतावयमेवार्थोऽभिप्रेत इति एतदुपाख्याने 'अहङ्कारकृतं चैव नाम पर्यायवाचकम्' इत्यादिना व्यासो निरधारयत्। अत्र एकाकित्वम्––असहायत्वम्' तदेव भयहेतुः। 'सहायमीक्षाञ्चक्रे' इत्यत्र सहायसाक्षात्कारो भयनिवृत्तौ हेतुतया विवक्षित इति व्यासस्याशयः। अत एतच्छ्रुतिसन्दर्भो हयशिरोऽवतारपर एव। एवं चतुर्थे शिशुब्राह्मण (२) मपि। अत्र शिशुशब्दोऽनिरुद्धपरः।

अहं नारायणो नाम शङ्खचक्रगदाधरः।
अशिशुश्शिशुरूपेण यावद्ब्रह्मा न बुध्यते ॥

(म. भा. वन. १९२–४१६)

इति मार्कण्डेयं प्रति भगवदुक्तेः—

पश्यामि जलमध्यस्थं विपुले वटपादपम् ।
पर्यङ्के तत्र पश्यामि बालं कमललोचनम् ॥
(वि. ध. १–७८–१२)

पूर्णे युगसहस्रेऽपि तमेवाहं तदा शिशुम् ।
संप्राप्त श्शरणं राजन्नहं भाव्यर्थचोदितः ॥ (२२)
कल्पक्षये व्यतीते तु तं तु देवं पितामहम् ।
अनिरुद्धं विजानामि पितरं ते जगत्पतितम् ॥
(७९—३)

इति मार्कण्डेयेन वज्रं प्रत्युक्तेश्च । एवं मार्कण्डेयेन 'एकार्णवे पुरा लोके' (१–१५–५) इत्यादिना वेदाहरणार्थं हयशिरोऽवतारमभिधाय 'तथाश्वशिरसं देवं विद्याकामस्तु पूजयेत् ।' (वि. ध. ३–११८–५) इति तस्य विद्याकामार्चनीयत्वमप्युक्तम् । एवं च शिशुशब्दस्यानिरुद्धपरतया 'यथेदं तच्छिरः' इत्यत्र हयशिरो विवाक्षितम् । एतदेवाभिप्रेत्य भट्टार्यैः 'तच्छिरः' इत्यस्य हयशिरःपरत्वोक्तिरिति पूर्वमेव (२८८ पुटे) निरूपितम् । 'वागष्टमी ब्रह्मणा' इत्यत्र ब्रह्मशब्दार्थः हयशिरोरूपधारी अनिरुद्धः । वाक् शब्दार्थः तच्छक्तिर्वाग्देवी । हयशिरोऽनुग्रहेण 'सप्त ह द्विषतो भ्रातृव्यानवरुणद्धि' इत्यत्र शत्रुभूतसप्तेन्द्रियजयो विवाक्षितः । पूर्वब्राह्मणान्ते 'य एष विज्ञानमयः पुरुषस्तदेषां प्राणानां विज्ञानेन विज्ञानमादाय' (बृ. ४–१–१७) इत्युपक्रम्य 'स यथा महाराजो जनपदान् गृहीत्वा स्वे जनपदे यथाकामं परिवर्तेत एवमेव एतान् प्राणान् गृहीत्वा स्वे शरीरे यथाकामं परिवर्तते' (बृ. ४–१–१८) इत्यत्र महाराजवत् इन्द्रियेषु स्वातन्त्र्यं जीवस्योक्तम् । सुषुप्तेः प्रागिव 'एतस्मादात्मनस्सर्वे प्राणा व्युच्चरन्ति' (२०) इत्युक्तप्रबोधेऽपि इन्द्रियेषु जीवस्य स्वातन्त्र्यं प्राप्तम् । तच्चानुभवविरुद्धम्—बहूनामिन्द्रियाणां प्रतिकूलत्वात् । इति शङ्कापनोदनाय शिशु-

ब्राह्मणमारब्धम् । चतुर्मुखस्य वेदाहरणादिना इन्द्रियानुकूल्यं संपाद्य त सृष्टौ पूर्ववत्प्रवर्तयतः हयशिरोरूपधारिणोऽनिरुद्धस्यानुग्रहेण इन्द्रिय-जयेनानुकूलज्ञानं मनुजानामपीति शिशुब्राह्मणेन प्रकाशितं भवति । मधु-ब्राह्मणे च 'स वा अयमात्मा सर्वेषां भूतानामधिपति स्सर्वेषां भूतानां राजा तद्यथा रथनाभौ च रथनेमौ चारास्सर्वे समर्पिता एवमेतास्मिन्नात्मनि सर्वाणि भूतानि सर्वे देवा स्सर्वे लोका स्सर्वे प्राणा स्सर्व एत आत्मन स्समर्पिताः' (बृ. ४–५–१५) इत्यत्र 'एवमेतस्मादात्मनः—व्युच्चरन्ति' इत्यत्र व्युच्चर-णावधित्वेन प्रागुक्तस्य महाराजत्वं तत्रैव व्युच्चरणकर्तृत्वेन प्रागुक्तानां सर्वेषां प्राण देव लोक भूतात्मनां समर्पितत्वं चाभिधाय जीवानां तत्पारतन्त्र्यं स्थिरीकृतम् । व्युच्चरण समर्पण श्रुत्योरनयोरैकरस्यं पर्यालोच्यैव 'एवमेत-स्मादात्मनः' इत्यत्र द्रमिडभाष्यकारप्रदर्शितराजकुमारनय स्सम्प्रदायविद्भि-रुक्तः । अयमर्थः शङ्करभाष्ये स्फुटः । राजत्वं परमात्मनो यत्रोक्तं तत्रैव परमात्मनि सर्वजीवानां समर्पितत्वोक्त्या जीवपरयोर्भेद एव श्रौतसिद्धान्त इति द्रमिडाचार्याशयः स्फुटो निर्मत्सराणां विदुषाम् । एतदनन्तरं परमात्मनः पुरुरूपत्वं सर्वानुभवविषयत्वं चोक्तम् । तेन च परस्य रूपानन्त्यं भक्तानु-ग्रहार्थमिति सिद्ध्या प्रागुक्तहयशिरो रूपस्यापि इन्द्रियजयार्थिभक्तानुग्रहार्थत्वं स्थापितं भवति । षष्ठान्ते मैत्रेयी ब्राह्मणे 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यः, इत्युपक्रम्य 'अस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदो यजुर्वेद स्सामवेदः' इत्याद्युक्तौ सर्वस्रष्टृत्वमात्मनः 'स तया वाचा तेनात्मना इदगँ सर्वमसृजत' इति तृतीय श्रुत्युक्तदिशा वाग्देवीसहितस्यैव विवक्षितमिति बोध्यम् ।

एवमेवैतरेयारण्यकोपनिषदपि हयशिरश्शक्तेर्वाग्देव्या हयशिरसश्चानु-ग्रहेण भक्तानां फलं प्रतिपादयति । तथाहि—तृतीयारण्यकोपान्त्यखण्डे 'अथ खल्वियं सर्वस्यै वाच उपनिषत् सर्वा ह्येवेमा सर्वस्या वाच उपनिषद इमं त्वेवाचक्षते' इत्युपक्रम्य 'अथ खल्वियं दैवी वीणा भवति तदनुकृति-रसौ मानुषी वीणा' इत्यादिना 'स यो हैतां दैवीं वीणां वेद । श्रुतवदनो

भवति । भूमिप्रास्य कीर्तिर्भवति यत्र क्व चार्या वाचो भाषन्ते विदुरेनं तत्र' इत्यन्तेन वाग्देवीवीणोपासनस्य सर्वजनश्रोत्रप्रियोक्तिः, भुवं पूरयित्री कीर्तिः, पण्डितानां भाषणावसरे मान्यता चेति फलमभिधाय 'अथातो वाग्रसः यस्यां संसद्य धीयमानो वा भाषमाणो वा न विरुरुचुषेत तत्रैतामृचं जपेत् । 'ओष्ठापिधाना न कुली दन्तैः परिवृता पविः । सर्वस्यै वाच ईशाना चारु मामिह वादये दिति वाग्रसः ।' इत्यत्र 'ओष्ठापिधाना' इत्यादि हयग्रीव मन्त्रानुमन्त्रजपस्य विद्वत्सदसि सर्वरञ्जकवाक्सिद्धिरूपं फलमप्यभिहितम् । तदनन्तरखण्डे 'अथ हा स्मा एतत्कृष्णहारीतो वाग्ब्राह्मणमिवोपोदाहरति प्रजापतिः प्रजाः सृष्ट्वा व्यस्रंसत संवत्सरः स छन्दोभिरात्मानं समदधा-द्यच्छन्दोभिरात्मानं समदधात्तस्मात्संहितेति तस्यै वा एतस्यै संहितायै णकारो बलं षकारः प्राण आत्मा । सयो हैतौ णकारषकारावनुसंहित मृचो वेद सबलां सप्राणां संहितां वेदायुष्यमिति विद्यात्' इत्यादिना 'एतद्ध स्म वै तद्विद्वांस आहुर्ऋषयः कावषेयाः किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे वाचि हि प्राणं जुहुमः प्राणे वा वाचं योह्येव प्रभव स्स एवाप्ययः' इत्यन्तेन हयशिरोऽवतार प्रयोजनकथनपूर्वकं विष्णु-जिष्णु-कृष्ण-वाक्प्राण-संहिता निरूपिताः । अत्र संवत्सरप्रजापतिशब्दौ चतुर्मुखपरौ । छन्दश्शब्दो वेदपरः । विस्रंसनानिमित्तं च मधुकैटभाभ्यां वेदानामपहारः । हयग्रीवानुग्रह-लब्धवेदैश्चतुर्मुखस्यात्मसन्धानमिति विवक्षितम् । (पूर्वं मैतरेयारण्यके ३-२-२) 'प्राण ऊष्मरूपम्' इति प्रागुक्तार्थ एव 'प्राण आत्मा' इत्यत्र प्राणशब्दार्थ इति सायणीये उक्तम् । वस्तुतस्तु—

शषसहा अनिरुद्धाद्या विज्ञेया स्त्रिदशेश्वर ॥ (ल. तं. १९-१७)
वासुदेवाख्यया होऽभूत्साख्यस्सङ्कर्षणोदयः ।
प्रद्युम्नष्षाख्ययाज्ञेयो ह्यनिरुद्धस्तुशाख्यया ॥ (ल. तं. १९–३२)

इत्युक्तदिशा प्राणशब्दस्य अनिरुद्धादिवासुदेवान्तव्यूहोऽर्थः । स एव हयशिरा 'वाचि हि प्राणं जुहुमः' इत्यत्र विवक्षितः, प्रागुक्तहयग्रीवमन्त्रानु-

मन्त्रानुसारात् । 'णकारोबलम्' इत्यारभ्य 'तदेव विष्णुः कृष्णेति जिष्णुरित्यभिधीयते' इति प्राक् (२५६ पुटे) उदाहृत वृद्धहारीतस्मृतिवचनानुसारेण विष्णु-जिष्णु-कृष्ण संहिताः अत्र विवक्षिताः । हयशिरोऽनुगृहीतवेदैः चतुर्मुखस्यात्मसन्धानानन्तरं विष्णु जिष्णु रूपाभ्यां मधुकैटभवधः कृत इति (वि. ध. उ. १-१६) अन्यत्रोक्तया 'प्राण आत्मा' इत्यत्रापि हयशिरा विवक्षितः । 'अस्य वामस्य' (ऋ. वे. मं. १ सू. १६४) इति सूक्ते ३६ मन्त्रे विष्णुशब्दः' ४७ मन्त्रे कृष्ण शब्दश्च पठितः । 'गौरीर्मिमाय' (मन्त्र ४१) इत्यादिः हयग्रीव मन्त्रानुमन्त्रश्च 'चत्वारि वाक्' (मन्त्र ४६) इत्यादिः आश्वलायनदशश्लोकीघटकः 'यस्ते स्तनः' (मन्त्र ४९) इत्यादिः बृहदारण्यकोपसंहारमन्त्रसजातीयश्च पठितः । आश्वलायनदशश्लोक्यां 'यद्वाग्वदान्ति' (ऋ. सं मं ८ सू. १०० मन्त्र १०) इत्यादेर्हयग्रीवमन्त्रानुमन्त्रस्य घटकतया 'देवीं वाचम्' इति तदनन्तरमन्त्रवदन्येषामपि दशश्लोकीघटकानां हयशिरश्शक्तिपरत्वमेव युक्तम् । 'यस्ते स्तनः' इत्यादेः पण्डितपुत्रलाभार्थकर्मविनियोगस्य बृहदारण्यकान्ते स्फुटतया सोऽपि हयशिरश्शक्तिपर एव । अत ऐतरेय तृतीयारण्यकान्तिमखण्डे विष्णु-जिष्णु वाक्प्राण संहितात्रयं विवाक्षितम् । बृहद्रथन्तररूपेण वाक्प्राणसंहिताम् (३-१-६) अत्रैव पूर्वमभिधाय 'तदप्येतदृषिणोक्तं रथन्तरमाजभारावसिष्ठः —भरद्वाजो बृहदाचक्रे अग्नेः' (ऋ. सं. मं. १० सू. १८२ मन्त्र १-२) इति मन्त्रखण्डद्वयं पठितम् । तत्र व्यूह हयग्रीव विवक्षा प्रागेव २६१ पुटे) साधिता । 'यद्वागवदन्ति' (हयग्रीवमन्त्रानुमन्त्रः) 'देवीं वाचम्' इति मन्त्रद्वयानन्तरं 'सखे विष्णो वितरं विक्रमस्व' (ऋ. सं. ८-३-१२) (२६१ पुटे) इति प्रागुदाहृत वृत्रहनन प्रार्थना मन्त्रे विष्णु-हयशिरोरूपधारी अनिरुद्धो विवक्षितः । वृत्रयुद्धप्रसङ्गे वसिष्ठेन रथन्थरेण प्रतिबोधितस्येन्द्रस्य वृत्रबाधानिवृत्तिप्रतिपादकस्याश्वमेधिक (११-१७) शान्तिपर्व (२१७-२१) वचनद्वयस्य 'बीभत्सवो अपवृत्रादतिष्ठन्' इति

मन्त्रघटितस्य वाक्सूक्ताव्यवहितपूर्वस्य हंसपदघटित सूक्तस्य प्रागुक्त वाक्प्राण-संहितायाश्चैकरस्यात्। एतेन 'अथाब्रवीद्वृत्रमिन्द्रो हनिष्यन् सखे विष्णो वितरं विक्रमस्व' (ऋ. सं. ४-१८-११) (तै. सं. ३-२-११-३) इत्यत्र विष्णुशब्दोऽपि व्याख्यातः। वाग्मित्वार्थं प्रातर्जप्यत्वेन शौनकेनोक्ते 'प्रणो देवी सरस्वती' इति (आश्व) दशश्लोकी मन्त्रघटिते सारस्वतसूक्ते (६-६१) वृत्रहन्तृत्वं हयशिरश्शक्ते स्सरस्वत्या उक्तं प्रेरणानुमतिद्वारकं पतिपत्न्युभयानुग्रह मूलकत्वेन सरस्वत्यनुग्रहमूलकं नेयम्। यद्यपि दध्यङ्ङृषिप्रार्थनया तद्दत्ताङ्गनिर्मितायुधेनेन्द्रेण वृत्रवधः कृत इति तत्र तत्रोक्तम्। तथापि 'विष्णुश्च भगवान्देवः' 'ऐन्द्रं समविशद्वज्रम्' इति (२५२ पुटे) प्रागुदाहृत (शान्तिपर्व २७८-३१) वचने वज्रे विष्णुप्रवेशेनैव वृत्रवधोक्त्या तत्र विष्णुशब्दस्य प्रागुक्तश्रौतविष्णुशब्दसमानार्थकतया दध्यङ्ङृष्यङ्ग-निर्मितवज्रस्यापि स्वतोवृत्रहननशक्तिर्नास्ति किन्तु हयशिरस्सम्बन्धेनेति स्फुटम्। एवं—

दध्यङ्ङाथर्वणस्त्वष्ट्रे वर्माभेद्यं मदात्मकम्।
विश्वरूपाय यत्प्रादात्त्वष्टा यत्त्वमधास्ततः॥

(भाग ६-१,५३)

युष्मभ्यं याचितोऽश्विभ्यां धर्मज्ञोऽङ्गानि दास्यति।
ततस्तै रायुधश्रेष्ठो विश्वकर्मविनिर्मितः॥ (५४)

इत्यत्र दध्यङ्ङृषेर्नारायणवर्मोपदेष्टृत्वस्योक्त्या नारायणकवचानुसन्धानं तस्य सिद्धम्। तेन दध्यङ्ङृषेर्नारायणकवचानुसन्धाननिबन्धनशक्तिस्सूच्यते। सैव मूलं दध्यङ् ऋषिगात्रस्यापि। अत्र दध्यङ्ङाथर्वणात्वष्टुर्विश्वरूपस्य, विश्वरूपादिन्द्रस्य नारायणकवचलाभोक्त्या मधुब्राह्मणे (बृ. आ.) 'त्वाष्ट्र—कक्ष्यम्' इति पदद्वयं विवृतं भवति। मधुब्राह्मणे आत्म-ब्रह्मशब्दयो र्हय-शिरः परतायाः प्रागुपपादनेन मधुविद्याया हयग्रीवब्रह्मविद्यात्वं सिद्धम्। मधुविद्योपदेष्ट्रा दध्यङ् ऋषिणोपदिष्टं त्वाष्ट्रकक्ष्यमपि हयग्रीवब्रह्मविद्यारूपमेव।

अयमर्थः 'हयग्रीवब्रह्मविद्या यत्र वृत्रवधस्तथा' इति भागवतलक्षणप्रतिपादनपरपुराणवचनेन सिद्धति। अत्र हयग्रीव ब्रह्मविद्या-नारायणकवचम् इति क्रमसन्दर्भामिध भागवतव्याख्यानेप्युक्तम्। अतो हयशिरोऽनुग्रह एव वृत्रवधे मूलमिति सिद्धम्। वृत्रवधे वाग्देवीपतेर्मूलत्वस्य श्रुतिसिद्धतया वृत्रवधानन्तरजनित ब्रह्महत्यापापापनोदनार्थं 'इन्द्रो वृत्रमहन्' (तै. सं ५-४) इत्यादिश्रुत्या विनियुक्ते विश्वकर्मसूक्त (तै. सं. ४-६-२) (वा. सं. १७ अध्याये) द्वयेऽपि वाग्देवीपतिर्हयशिराः प्रतिपाद्य इत्यैकरस्यम्। एतेन तैत्तिरीय वाजसनेयकयोर्विश्वकर्मसूक्तद्वयपाठक्रमव्यत्यासेऽपि प्रतिपाद्यैक्येन तत्रोभयत्र पठिते 'विश्वकर्मन् हविषा वर्धनेन त्रातारमिन्द्रमकृणोरवध्यम्' इति मन्त्रे इन्द्रस्य वृत्रेणावध्यत्वमपि विवक्षितमिति सिध्यति। सूक्तयोरनयोर्हयशिरः परता 'आदिद्गन्धर्वो अभवद्द्वितीयः—वाचस्पतिं विश्वकर्माणम्' इति (तै. सं. ४-६-२) वा. सं. १७) सूक्तद्वयघटक गन्धर्ववाचस्पतिशब्दाभ्यां निश्चीयते। तत्र च 'या ते धामानि परमाणि' इति श्रुत्युक्तानां परम-मध्यमा-वम शरीराणां सर्वेषां 'इन्द्रो मायाभिः पुरुरूप ईयते' इति बृहदारण्यकश्रुतौ विवक्षितत्वेऽपि उभयत्र निरतिशयमहिमवत्वेन प्रतिपादितस्य परमशरीरस्य न कदापि छेदशङ्का। तत्र 'अजस्य नाभावध्येकमर्पितं यस्मिन्निदं विश्वं भुवनमधिश्रितम्' इति न (सायणभाष्योक्तदिशा) ब्रह्माण्डपरा अपि तु भगवन्नाभीकमलपरा इति—

अजस्य नाभावध्येकं यस्मिन्विश्वं प्रतिष्ठितम्।
पुष्करं पुष्कराक्षस्य तस्मै पद्मात्मने नमः॥

(म. भा. शा. ४६-६२)

इति भीष्मवचने व्यक्तम्। अयमर्थः श्रीयामुनमुनिप्रणीतस्तोत्ररत्नभाष्ये १४ श्लोके स्फुटः। एवमानन्दतीर्थीय प्रथमशारीरकसूत्रभाष्येऽपि। अत्राजपदेन कर्मकृतजनिरानिरुद्धस्य नास्तीति बोधितम्। तदनन्तरं 'विश्वकर्माह्यजनिष्टदेवः' इत्यत्र चतुर्मुखजानिरुच्यत इति स्तोत्रभाष्ये व्यक्तम्।

पूर्वश्लोक (१३) स्तोत्ररत्नभाष्ये हयशिर उपाख्यान वचनान्युदाहृत्यात्र महाभारतस्थ भीष्मवचनेन ' अजस्य नाभौ ' इत्यादि श्रुत्यर्थनिष्कर्षं कुर्वता-माचार्यपादानाम् ' आदिद्गन्धर्वो अभवद्द्वितीयः ' इत्यत्र हयशिरोऽवतारो विवक्षित इत्याशयः स्फुटो निर्मत्सराणां विदुषाम् । ' विश्वकर्मा ह्यजनिष्ट ' इति पूर्ववदनभिधाय 'गन्धर्वोऽभवत् ' इत्युक्त्या हयशिरसो न कर्मकृता जनिः किन्तु अनिरुद्धस्य ' या ते धामानि परमाणि ' इत्युक्तदिशा स्वेच्छामूलक परम-शरीरसम्बन्धेन हयशिरोऽवतार इति निश्चीयते । तेन विष्णोः परमशरीरा-दन्यशरीरस्यैव 'विष्णोः शिरः प्रचिच्छिदतुः' (श-ब्रा.) इत्यत्र विवक्षावश्यकत्वेन विष्णोः परत्वे न किञ्चिद्बाधकम् । शतपथश्रुतौ तत्प्रघट्टके विष्णोर्हयशिरोलाभो नोक्तः । शक्ति कथैव नास्ति । हयग्रीवब्रह्मविद्यारूपमधुविद्या नारायणकवच-द्वयोपदेष्टृत्वस्य दध्यङ् ऋषेर्बृहदारण्यके उक्त्या हयग्रीवब्रह्मविद्यासम्बन्धेनैव तत्र अश्वशिरो धारणेन प्रवर्ग्यतत्वोपदेष्टृत्वेनोक्तस्य दध्यङ् ऋषेर्महिमेति प्रतीयते ।

एवं ' स वा अयमात्मा—सर्वेषां भूतानां राजा ' ' इन्द्रोमायाभिः पुरुरूप ईयते ' ' युक्ता ह्यस्य हरयश्शता दश ' इति वाक्यसमानार्थकैः ' इन्द्रस्यात्मानं दशधा चरन्तम् ' ' इन्द्रो राजा जगतो य ईशे ' ' शतगूँशता अस्य युक्ता हरीणाम् ' इति वाक्यैर्घटिते ' सुवर्णं घर्मम् ' इत्यादि स्वर्ण-घर्मानुवाकेऽपि हरेस्तदवतारभूतहयशिरसश्च परत्वं व्यक्तम् । चातुर्होत्रीय-ब्राह्मणे ' हृदयं यजूँषि पत्न्यश्च ' (तै. का. ३–५) इत्यत्र चतुर्होतृ पञ्च-होतृ षड्ढोतृ सप्तहोतृ हृदयत्वेन एतदनुवाकघटिता मन्त्रा निर्दिष्टाः । अत्र सायणीयम्—चित्ति स्रुक्' इत्यादीनां होतृ मन्त्राणां हृदयं-रहस्यं—तत्त्वं परमात्मस्वरूपं प्रतिपादयतीति अयमनुवाको हृदयामित्युच्यते ' इति ।

श्रीभागवते—

' यथा स्वनिगमेनोक्तं द्विजत्वं प्राप्य पूरुषः ।
यथा यजेत मां भक्त्या श्रद्धया तन्निबोध मे ॥ ११–२७–८ ॥
आवाह्यार्चादिषु स्थाप्य न्यस्ताङ्गं मां प्रपूजयेत् ।

पाद्योपस्पर्शार्हणादी नुपचारान्प्रकल्पयेत् ॥ ११-२७-२२ ॥
उभाभ्यां वेदतन्त्राभ्यां मह्यं तूभयसिद्धये ॥ २४ ॥
स्वर्णघर्मानुवाकेन महापुरुषविद्यया ।
पौरुषेण च सूक्तेन सामभी राजनादिभिः ॥ ११-२७-२९ ॥ १ ॥

इत्युद्धवं प्रति भगवदुक्तौ अस्यानुवाकस्य वासुदेवार्चने विनियोग उक्तः । अत्र प्रथमं दशहोतृ चतुर्होतृ षड्ढोतृ सप्तहोतृ मन्त्रोत्तरभागरूपग्रहभागेषु वाचस्पतिशब्दः पठितः । अहिर्बुध्न्यसंहितायां प्रथमग्रहभागे ।

वाङ्नाम वैष्णवी शक्तिश्शब्दब्रह्ममयी परा ।
वाचस्पतिस्तत्पतिः स्यात् . . . . . (अ. बु. ५७-२५)

इति वाचस्पतिशब्दार्थमभिधाय ।

द्यावापृथिव्यौ पितरौ पितरौ श्रीतदीश्वरौ ॥ ६६ ॥

इति 'नमो दिवे नमः पृथिव्यै स्वाहा' इति सप्तहोतृग्रहभागान्तिम श्रुतिघटक-पदद्वयार्थोऽभिहितः । अतः 'सुवर्णं घर्मं परिवेद वेनम् । इन्द्रस्यात्मानं दशधा चरन्तम्, इत्यत्र बृहदारण्यकवत् हरेर्दशावतारा विवक्षिताः । तदनन्तरं 'अन्तस्समुद्रे मनसा चरन्तम्' ब्रह्मान्वविन्दद्दशहोतारमर्णे' इत्यत्र हयशिरोरूपधारी अनिरुद्धो विवक्षितः । तदुत्तरम् 'अन्तः प्रविष्टः शास्ता जनानाँ॒ सर्वात्मा' इत्यनेन 'इन्द्रस्यात्मानम्' इति पूर्ववाक्ये इन्द्रान्तर्यामी 'सर्वे वेदा यत्रैकं भवन्ति' इति पूर्ववाक्ये सर्वान्तर्यामिण एकस्यैव वाच्यत्वादेकार्थवाचिनो भवन्ति वेदाः (वे-सं) इत्यर्थश्च विवक्षित इति निर्णीतम् । एवमेवोत्तरत्रापि 'अन्तः प्रविष्टं कर्तारमेतम्' इति चतुर्होतृ हृदयमन्त्रेषु द्वेधा अभ्यस्त वाक्यवत् षड्ढोतृहृदयमन्त्रेषु 'अन्तः प्रविष्टं कर्तारमेतम्' इति वाक्यं प्रक्रम्य 'अन्तश्चन्द्रमसि मनसा चरन्तम् । सहैव सन्तं न विजानन्ति देवाः । इन्द्रस्यात्मानं शतधा चरन्तम्' । इत्युक्तौ—

अन्तस्थं सर्वभूतेषु चरन्तं विद्यया सह ।
स्तूयमानश्च विबुधैस्सिद्धैर्मुनिवरैस्तथा ॥

सस्मार देहं विपुलं हरिर्हयशिरो महान् ॥ इति ॥

(ह. वं. पं. ३-२-४९)

हयग्रीवमहं वन्दे स्फटिकाचलसन्निभम् ।

चन्द्रमण्डलमध्यस्थं सरस्वत्या समन्वितम् ॥ इति ॥

(वि. ति. सं. ४-२५०)

हयग्रीवतनुं प्राप्य सच्चिदानन्दरूपिणीम् ।

चन्द्रमण्डलमध्यस्थपुण्डरीकनिषेदुषीम् ॥ इति

हरिवंशे (वि. ति) संहितायां, श्री भागवतभूमिकायां पुराणहयग्रीवशास्त्र्युदाहृत हयग्रीवावतारपर हयग्रीवतन्त्रे चोक्तेः । तदनन्तरं सप्तहोतृहृदयमन्त्रेषु 'इन्द्रो राजा जगतो य ईशे' इत्यत्र इन्द्रशब्दः इन्द्रान्तर्यामिपरः । परमैश्वर्यविशिष्ट परो वा । तदनन्तरं 'अन्तरादित्ये मनसा चरन्तम्' इत्यादित्यान्तर्वर्तित्वाभिधानपूर्वकं 'स हरिर्वसुवित्तमः' इति तस्य हरित्वमभिधाय । 'शतँ शता अस्य युक्ता हरीणाम्' इत्युक्तेः । 'पतङ्गमक्तमसुरस्य मायया' इति मन्त्रः असून्-प्राणान्, राति-ददातीत्यसुरः परमात्मा, तस्य मायया अचिन्त्यशक्त्या, अक्तम्-अभिव्यक्तम्, पतङ्गम्-आदित्यम् इति सायणीये विवृतः । अत्रापि 'अन्तरादित्ये मनसा चरन्तम्'। इति पूर्वमुक्तेरादित्याऽन्तर्यामी विवक्षितः । एवमेव तदनन्तरं 'पतङ्गो वाचं मनसा बिभर्ति । तां गन्धर्वोऽवदद्गर्भे अन्तः' इत्यत्रापि । अत्र 'वाचं मनसा बिभर्ति' इति गन्धर्वशब्दार्थविवरणम् । पतङ्गगन्धर्वशब्दावेकव्यक्तिबोधकौ । एतेन 'आदिद्गन्धर्वो अभवद्द्वितीयः' (वा. का. सं.) इत्यत्र गन्धर्वः —गोर्वाचो धारयिता इति सायणभाष्योक्तार्थः प्रामाणिक इति सिद्धम् । एतेन वाचस्पतिशब्दघटित ग्रहभागहृदयत्वमस्यानुवाकस्य स्थिरीकृतम् । एवं च आदित्यान्तर्यामिणो हयशिरस एव वाचो देव्याः पत्युरत्र विवक्षा सिद्धा । एतेन दशहोतृमन्त्रहृदये उपक्रमेऽपि हयशिरा विवक्षित इति सिद्ध्यति । तत्र च ब्रह्मणो वेदान् प्रदाता अत्र च याज्ञवल्क्यस्य शुक्लयजुर्वेदोपदेष्टा हयशिरा विवक्षित इति

विभागोऽवसेयः। एतेन होतृहृदयभूतं परमात्मस्वरूपं वाचस्पतिशब्दबोध्यं वाग्देवीपतिर्हयशिरा इति निर्णीतं भवति।

एवमथर्वणवेदोपक्रमे 'ये त्रिषप्ताः परियन्ति' इत्यादिचतुरृचं त्रिषप्तीयसूक्तं मेधाजननार्थकर्मणि कौशिकेन स्वसूत्रे विनियुक्त मभ्यस्तवाच-स्पतिशब्दघटितं 'पूर्वस्य मेधाजननानि' (कौ. सू. २-१) इत्युपक्रम्य मेधा-जननार्थकर्माणि कानिचिदभिधायोपनयनप्रकरणे 'मेधाजननायुष्यैर्जुहुयात्' (कौ. सू. ७-८) इति मेधाकामस्य ब्रह्मचारिणि अनेन सूक्तेनाज्यहोममपि विधायोपाकर्मणि 'त्रिषप्तीयं पच्छो वाचयेत्' (कौ. सू. १४-३) इति माणवकवाचनेऽपि विनियोग उक्तः। तत्र 'सं श्रुतेनगमेमहि मा श्रुतेन विराधिषि' इत्यत्र वाग्देवीपते र्हयशिरसोऽनुग्रहेणाधीतवेदशास्त्रार्थस्य सम्यक्-प्राप्तिः कदाचिदप्यवियोगश्चेत्यर्थो विवक्षित इति तत्र 'मा श्रुतेन विराधिषि' इत्यस्यार्थः हयशिर उपाख्याने (श्लो. ७५) व्यक्त इति प्राङ्निरूपितम्। 'अहं रुद्रेभिः' इत्याद्यष्टर्चे वाक्सूक्त (अ. वे. ४-३०) स्य मेधाजननार्थं वाग्व्यवहारं कुर्वत शिशोर्मातुरुत्सङ्गे होमे विनियोगमभिधायोपनयनं (कौ. सू. ७-६) प्रक्रम्य 'मेधाजननायुष्यैर्जुहुयात्' (कौ. सू. ७-८) इत्यनेन सूक्तेनाज्यहोमोप्यभिहितः। अतस्तदैकरस्यात्रिषप्तीयसूक्ते वाग्देवीपति र्हयशिरा विवक्षितः। 'यस्य देवे पराभक्तिर्यथा देवे तथा गुरौ। तस्यैते कथिताह्यर्थाः प्रकाशन्ते महात्मनः' इति श्वेताश्वतरान्तिम श्रुत्यानुगुण्याच्च। तत्र 'यो ब्रह्माणं विदधाति पूर्वं योवैवेदांश्च प्रहिणोति तस्मै' इति पूर्वमन्त्रे ब्रह्मगुरुत्वेन प्रतिपादितो हयशिरा एव गुरुर्विवक्षितः। अतोऽभ्यस्त वाचस्पति-शब्दघटितत्रिषप्तीयसूक्तस्याथर्ववेदोपक्रमस्थस्य यथोक्त एवार्थः। एतेन 'पूर्वस्य मेधाजननानि' इति प्रक्रम्य 'प्रातरग्निम्' (कौ. सू. ३-१६) इत्यादि-सूक्तस्य मेधाजननार्थकर्मणि कौशिकेन विनियोगाभिधानेन एतत्सूक्तमपि हय-शिरः परमेव। 'प्रातरग्निमित्यादि हयग्रीवमनुं जपेत्' इति पराशरसंहितायामुक्तेः। ऋग्वेदे अथर्ववेदे च एतत्सूक्तस्य 'नासत्' इत्यतः पृथक् पाठेऽपि तैत्तिरीय-

ब्राह्मणे 'नासदासीत्' (तै. ब्रा. २-८-९) इति सूक्तानन्तरं 'प्रातरग्निम्' इत्यादि सूक्तं पठितम्। प्रथम सूक्तस्य नारायणपरत्वं पूर्वमेव (१७१ पुटे) निरूपितम्। तत्र च 'आनीदवातगँ स्वधया तदेकम्' इत्यत्र स्वधया इत्यनेन 'स्वधा त्वं लोकपावनी' इत्युपबृंहणात् लक्ष्मीविशिष्टत्वमुच्यते। इति 'श्रेष्ठश्च' (शा. सू. २-४-७) इत्यत्र व्यासार्योक्तिः—

'नासदासीत्तदानीं हि नो सदासीत्तदा मुने' इत्युपक्रम्य—

नारायणः परं ब्रह्म शक्तिर्नारायणी च सा।
व्यापकावतिसंश्लेषा देकतत्त्वमिव स्थितौ॥ (अ. सं.)

इत्यहिर्बुध्न्यसंहितोक्त्या युक्तेति प्रागेव (१९० पुटे) साधितम्। अत एव 'तमसस्तन्महिना जायतैकम्' इत्यत्र शुद्ध व्यूहसृष्टिः 'स्वधा अवस्तात्प्रयतिः परस्तात्। को अद्धा वेद क इह प्रवोचत्। कुत आजाता कुत इयं विसृष्टिः' इत्यादौ लक्ष्मीतदीशयोर्लक्ष्म्या अवरत्वं तदीशस्य परत्वं लक्ष्मीविशिष्टस्यैवो पादानत्वं निमित्तत्वं चेत्यर्थाः संहितानुसारेण विवक्षिताः। 'तम एवाभवत्सर्वं न प्राज्ञायत किंचन। तमसो ब्रह्मसंभूतं तमो मूलामृतात्मकम्। विद्यासहायवान्देवः' इत्याद्येतदुपाख्यानवचनैः 'एकाकी विद्यया सार्धं विहरिष्ये, 'ततो भूयो जगत्सृष्टिं करिष्यामीह विद्यया' इत्यादि नारायणाख्यान वचनैः अस्य सूक्तस्य पूर्वोक्तार्थपरत्वं व्यासोऽपि व्यञ्जयति। 'विद्या सहायवान्देवः 'एको विद्या सहायस्त्वम्'। (१८९ पुटे) इत्येतदुपाख्यानहरिवंश वचनोत्तरं हयग्रीवावतारनिरूपणेन तैत्तिरीयब्राह्मणे 'नासदासीत्' इति सूक्तानन्तरं 'प्रातरग्निम्' इत्यादि भगसूक्तस्य हयग्रीवपरत्वं व्यासोऽपि प्राचीकशत्।

मोक्षधर्मे 'बहुभ्यश्च (अल्पेभ्यश्च) महद्भ्यश्च शास्त्रेभ्यो मतिमान्नरः। सर्वत स्सारमादद्यात्पुष्पेभ्य इव षट्पदः॥ (शा. प. १७६-६६)

इत्यभिधाय (२१० अ) द्वादशाष्टाक्षरमन्त्रानुसन्धानफलमप्युक्त्वा तत्र तत्र वासुदेवाद्व्यूहसृष्टिं ब्रह्मादि सृष्टिं चाभिधाय नारायणाख्याने (३५२ अ) प्रशस्यतमे

पञ्चरात्रप्रामाण्यं कलियुगादौ भीष्मपर्वोक्तदिशा पञ्चरात्रोक्तविधिना अनुष्ठान-मभिप्रेत्य कलियुगादावनुष्ठापकत्वरूपप्रामाण्यं 'भविष्यति प्रमाणं वा' इत्यनेनाभिधाय सात्वतैकान्तिधर्मस्य दुरनुष्ठेयत्वं कदाचिदेवानुष्ठेयतां च प्रदर्श्यार्जुनं प्रति कृष्णोक्तावध्यायत्रये नारायणादि नामनिर्वचनप्रसङ्गे कृष्णहयशिरसोरैक्यमुक्त्वा हयशिर उपाख्याने 'ईश्वरो हि जगत्स्रष्टा प्रभुर्नारायणो विराट्' इत्युपक्रम्य हयशिरोऽवतारं निरूप्य 'नारायणपरावेदाः' 'तत्वं जिज्ञासमानानां—हरिर्नारायणः प्रभुः' इत्यत्र 'तत्स्थत्वादनुपश्यन्ति ह्येक एवेति साधवः' इति जनकयाज्ञवल्क्य संवादोक्तदिशा तत्वैक्यमपि प्रदर्श्य तदनन्तराध्याये 'समुपोढेष्वनीकेषु कुरुपाण्डवयोर्मृधे। अर्जुने विमनस्के च गीता भगवता स्वयम्' (८) इत्युपक्रम्य 'कथितो हरिगीतासु समासविधिकल्पितः। (५३) 'एष धर्मो जगन्नाथात्साक्षान्नारायाणान्नृप।' (४५) दुर्विज्ञेयो दुष्करश्च सात्वतैर्धार्यते सदा' (५५) इत्यनेन गीतायां सङ्ग्रहेणोक्तस्य पञ्चरात्रे विस्तरेणोक्तस्यानुष्ठेयत्वं प्रदर्श्य बहुभिर्ब्राह्मणैरननुष्ठाने बीजप्रश्नस्य प्रतिवचने 'जायमानं हि पुरुषं यं पश्येन्मधुसूदनः। सात्विकः स तु विज्ञेयः स वै मोक्षार्थचिन्तकः' (७३) इत्यादिना जननकाले मधुसूदन कटाक्षवत एव मोक्षार्थप्रवृत्तिः, तदन्यकटाक्षवतो न प्रवृत्तिः, इति वदन्व्यासः उक्तेष्वर्थेषु मूलं नारायणोपनिषदमभिप्रैति। तत्र 'सर्वभूतस्थमेकं नारायणम्' इत्युक्तार्थ एव 'तत्स्थत्वादनुपश्यन्ति' (ज. या. सं.) 'तत्त्वं जिज्ञासमानानाम्' (ह. शि. उ). इत्यत्र प्रकाशित इति प्राङ्निरूपितम्। 'ब्रह्मण्यो देवकीपुत्रो ब्रह्मण्यो मधुसूदनोम्' इति तत्पूर्वश्रुतौ अर्जुनं प्रति गीतोपदेष्टा कृष्णः देवकीपुत्र इत्यत्र विवक्षितः। ब्रह्मणो वेदपञ्चरात्रोपदेष्टा मधुसूदनशब्देन विवक्षितः। कृष्णशब्दं विहाय देवकीपुत्रशब्दानिर्देशस्तु देवक्या अपि कृष्णहयशिरोरूपपरत्ववेदनसत्ताज्ञापनार्थः। कृष्णावतार-समनन्तरं देवकीकृतकृष्णस्तुतौ 'नमस्ते सर्वदेवेश नमस्ते मधुसूदन' (वि. ध. ९२-१९) इत्युपक्रम्य 'ऋग्यजुस्सामरूपाय संभूताय

ममोदरे । स्वमायाबालरूपाय नमः कृष्णाय हेतवे ॥' (वि. ध. ९३–२९) इति कृष्णं प्रति देवक्या उक्त्यनन्तरं तथैव (३१) हयग्रीवानुष्टुभमन्त्रस्याप्युक्त्या उभयोः परत्वं सिद्धम्। पूर्वं ब्रह्मण्यो देवकीपुत्रो ब्रह्मण्यो मधुसूदनः।' (वि. ध. ६९–१११) इति श्रुतिमेव निर्दिश्य नारायणनारद. संवादमुपक्रम्य 'श्रुत्वाथ तस्य देवर्षेर्वाक्यं वाचस्पतिस्स्वयम्। प्रोवाच भगवान्विष्णुर्नारदं जगतो हितम्'॥ (वि. ध. ७०–७)

ओङ्कारमग्रतः कृत्वा मां नमस्कृत्य मानद ॥ (९) ॥
एकाग्रः प्रयतो भूत्वेमं मन्त्रमुदीरयेत्।
अहं भगवतस्तस्य मम चासौ सनातनः।
तस्याहं न प्रणश्यामि स च मे न प्रणश्यति॥ ६० ॥
तमेवाहं प्रपन्नोऽस्मि मम यो यस्य चाप्यहम्।
नारायणाय भक्तानामेकनिष्ठायशाश्वतम्॥ (६५)

इत्यादिना अष्टाक्षरार्थमभिधायात्र देवकीकृतकृष्णस्तुत्यनन्तरं

एवं स्तुतस्सदा देव्या देवक्या मधुसूदनः।
बालरूपी जगादेदं वसुदेवस्य शृण्वतः॥ ९३–३८)

इति वदता शौनकेन एतच्छ्रुत्यर्थः सम्यक् प्रकाशितः।

पूर्वं मत्स्यावतारनिरूपणावसरे—
विनिर्जग्मुर्मुखेभ्यस्तु ब्रह्मणोऽव्यक्तजन्मतः।
ओङ्कारप्रभवावेदा जग्मुस्ते च रसातलम्॥ ६८–६ ॥
भोगिशय्यागतः कृष्णो द्वितीयां तनुमात्मनः।
कृत्वामीनमयीं सद्यः प्रविवेश रसातलम्॥ ६८–८ ॥
वेदमूर्तिं स्ततो वेदानानिन्ये ब्रह्मणोऽन्तिकम्।

इति पुराणान्तरोक्तरीतिमनुसृत्य मधुकैटभाभ्यां वेदापहरणमनभिधाय

मधुकैटभाभ्यां च पुनर्भोगिशय्यागतो हरिः॥ ६८–९ ॥
हृतान् हयशिरा भूत्वा वेदानाहृतवांस्तदा।

इति ।

मत्स्येन भूत्वा पाताळात्तववेदा स्समुद्धृताः।
मधुकैटभाभ्यां हृता दत्ताश्वशिरसा मया ॥ ६८–४१ ॥

इति च वदता शौनकेन मधुसूदनो न मत्स्यः अपि तु हयशिरा एवेति निर्धारितं भवति।

ब्रह्मणो वेदोपदेष्टैवं पञ्चरात्रमप्युपादिशदिति प्राक् (५ पु) उदाहृतहयशीर्षपञ्चरात्रवचनैः प्रतिपादनेन 'सात्वतं विधिमास्थाय प्राक्सूर्यमुखानिस्सृतम्' इति पूर्वम् (४० पु) उदाहृतवचने सूर्यशब्दार्थोऽपि शुक्लयजुर्वेदोपदेष्टा सूर्य एव हयशिरोरूपो विवक्षितः। अत एव जनकयाज्ञवल्क्यसंवादे सूर्यतच्छाक्तिवाग्देव्यनुग्रहेण शुक्लयजुर्वेदतत्त्वज्ञस्य यज्ञावल्क्यस्य 'तत्स्थत्वादनुपश्यन्तिह्येक एवेति साधवः' इत्युक्तेः अत्र हयशिर उपाख्याने 'तत्वमेकः' इत्यादि श्लोकस्य च 'सर्वभूतस्थमेकं नारायणम्'(ना-उ) इत्येतदनन्तर श्रुति विवरण रूपता समरसा भवति। एतेन 'स सर्परी रमतिं बाधमाना' (ऋ. सं ३-५३-१५) इति हयग्रीवमन्त्रानुमन्त्रे 'आ सूर्यस्य दुहिता' इत्यत्र हयशिरोरूपसूर्यसम्बन्धिनी यज्ञावल्क्य कामपूरयित्री इत्यर्थो व्यासस्य विवक्षितः। एतन्मन्त्रस्य एतदुत्तरमन्त्रस्य च (वि. ध. उ, ऋ. वि.) विनियोगवचनानि प्राक् (२४६ पुटे) उदाहृतानि।

ससर्परीदृचे प्राहुरितिहासं पुराविदः ।
सौदासनृपयज्ञे वै वसिष्ठात्मजशक्तिना ।
विश्वामित्रस्याभिभूतं बलं वाक् च समन्ततः ।
वासिष्ठेनाभिभूतः सह्यवात्सीदथ गाधिजः ।
तस्मै ब्राह्मीं तु सौरीं वा नाम्ना वाचं ससर्परीम् ।
सूर्यवेश्मन आहृत्यः ददुर्वै जमदग्नयः ।
कुशिकानां मति स्सा वागमतिं नामपानुदत् । (अनु-भा-३-५३)

इति सायणीयोक्तिरपि प्रागुक्तार्थे न विरोधिनी। 'पतङ्गो वाचं मनसा बिभर्ति। तां गन्धर्वोऽवदद्गर्भे अन्तः' इति सप्तहोतृहृदयमन्त्र समानार्थक समानानुपूर्वीक (ऋ. सं. १०–१७७–२) ऋङ्मन्त्रैकरस्यात् 'आसूर्यस्य' इत्यस्य यथोक्त एवार्थः। अतः ब्रह्मणः श्रुतिपञ्चरात्रयोरुपदेष्टा याज्ञवल्क्यस्य शुक्लयजुर्वेदस्योपदेशकश्च सूर्यो वाग्देवीपति हयशिरा एवेति सिद्धम्। 'वाजिन्तमाय' 'तां गन्धर्वोऽवदत्' 'सूर्योऽश्वः सोभवत्' इत्यत्र हयशिरस अश्ववाचि शब्देन निर्देशवत् 'आदिद्गन्धर्वो अभवद्द्वितीयः' इति श्रुतिमनुसृत्य ब्रह्मणो वेदस्योपदेष्टुरपि तथैव निर्देशः पाद्मे शौनकप्रश्नस्य सूतप्रतिवचने दृश्यते—

मति मन्थानमाविध्य येनास्माच्छ्रुतिसागरात्।
प्रकाशो जनितो लोके महाभारतचन्द्रमाः॥
कृष्णद्वैपायनं व्यासं विद्धि नारायणं प्रभुम्।
कोह्यन्यः पुण्डरीकाक्षान्महाभारतकृद्भवेत्।
तस्मादहमुपश्रुत्य . . . . .।

इत्युपक्रम्य—

पुराणं सर्वशास्त्राणां प्रथमं ब्रह्मणा स्मृतम्।
त्रिवर्गसाधनं पुण्यं शतकोटिप्रविस्तरम्॥
निश्शेषेषु च लोकेषु वाजिरूपेण केशवः।
ब्रह्मणस्तु समादेशा द्वेदानाहृतवानसौ॥
अङ्गानि चतुरो वेदान्पुराणानि च सर्वशः।
मत्स्यरूपेणाजहार कल्पादावुदकार्णवे॥
अशेषमेतत्कथित मुदकान्तर्गतो विभुः।
श्रुत्वा जगाद च मुनिं प्रतिवेदांश्चतुर्मुखः॥

(पा. पु. सृ. ५–१–४८)

इति । अत्राश्व सामान्यवाचि शब्देन केशवस्य निर्देशे 'विश्वकर्मा ह्यजनिष्ट देवः । आदिद्गन्धर्वो अभवद्द्वितीयः' । (वि. सू.) इति तैत्तिरीय वाजसनेयकश्रुत्योः निर्देश एव मूलम् ।

ब्रह्मणो वेदान् याज्ञवल्क्यस्य शुक्लयजुर्वेदं चोपदेष्टुः उदाहृत श्रुति पुराणवचनेषु हयसामान्यवाचिशब्देन निर्देशमभिप्रेत्य पराङ्कुशमुनिना 'मूवा त्तनिमुदलामूवुलकं कावलोन् मावाहि यामयाय् मीनाहि मानिडमाम्' (ति. २-८-५) इति श्रीमुखमूक्तगाथायां 'माव्' इत्यश्व सामान्यवाचि शब्देन सर्वजगत्स्रष्टुः रक्षकस्य देवादिदेवस्य निर्देशः कृतः । एतदनन्तर-गाथायां कृष्णामहिमा प्रदर्शितः । एतेन नारायणोपनिषदि अवशिष्ट भागार्थं तत्र तत्र निरूपयता पराङ्कुशमुनिना 'ब्रह्मण्यो देवकीपुत्रो ब्रह्मण्यो मधु-सूदनोम्' इति वाक्यार्थः अत्र प्रकाशितो भवति । पाद्मपुराणे हयशिरसः प्रथमं मत्स्यस्यानन्तरं निर्देशमभिप्रेत्यात्रापि तथा निर्देशः । पद्मपुराणोक्तरीत्या सूतमहर्षेरर्थं श्रुत्वा शौनकेनात्र श्रुतौ देवकी शब्दतात्पर्यविवरणपूर्वकं हयशिरस एव मधुसूदनत्वोक्त्या स एव श्रुतौ मधुसूदनशब्दार्थ इति निर्णयस्य करणेन पराङ्कुशमुनिनापि स एव निर्णयो रचितः ।

एवं परकालमुनिनापि सर्वेश्वरादेव मूलमन्त्र—तदर्थोपदेशभाग्यवता स्वीये श्रीसूक्ताख्ये प्रबन्धे प्रथमशतकप्रथमदशके अभ्यस्तनारायणनाम प्रयोगेन पञ्चमसप्तमशतकयोः (५-३-२) (७-८-२) गाथाद्वये हयशिरो-वृत्तान्तवर्णनेन अन्ते (११ शतके) उपान्त्यगाथाऽव्यवहितपूर्वगाथायां मधुसूदनशब्दनिर्देशपूर्वकं अन्तिमगाथायां कृष्ण प्रतिपादनेन तत्र मूलमन्त्रा-द्यर्थप्रकाशनेन च नारायणोपनिषदर्थः सम्यक् प्रकाशितः । सप्तमशतक-प्रथमगाथायां समुद्रशायिनो नाभीकमलाच्चतुर्मुखोत्पत्तिः, द्वितीयगाथायां हयशिरोऽवतारचरितम्, तदुत्तरगाथासु कृष्णावतारेण सह तदितरावतार-चरितम्, इत्येतदर्थनिरूपणपूर्वकमान्तिमगाथायां मत्स्यावतारोऽप्यभिहितः । अतः परकालमुनेरपि श्रुतिघटकमधुसूदनशब्दस्य हयशिरा एवार्थोऽभिप्रेत

इति बोध्यम् । अत्र श्रुतौ देवकीपुत्र मधुसूदनशब्दाभ्यां कृष्ण हयशिरोऽवतारद्वयबोधनेन नृसिंहाद्यवतारवैलक्षण्येन हयशिरोऽवतारे मूलमपि सूचितम् । शिरोभागे हयरूपधारणेन 'यस्तु विज्ञानवान्भवति युक्तेन मनसा सह । तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथेः' (कठ १-३-६) इति श्रुत्या मनुष्याणां शुद्धमनस्कानां विज्ञानवतामेव मन आदीन्द्रियाश्व वशीकरणेन सुखलाभ इति योऽर्थः प्रतिपादितः सः हयशिरोरूपधारणेन वेददान ज्ञानोपदेश समनन्तरमेव चतुर्मुखस्य वेदापहारकाले सृष्टिकरणासामर्थ्येन यद्दुःखं तन्निवृत्या सुखं समजनीति कथनेन प्रकाशितो भवति। हयशिरोरूपेण सत्वाभिवृद्धिकरकार्यज्ञानसंपादनेन चतुर्मुखस्य रजस्तमोबाधानिवृत्तिकरणेन इन्द्रियाणां सदश्ववत् सत्वाभिवृद्धिकार्यज्ञानजनने प्रवृत्तिः यदा तदैव रजस्तमो बाधानिवृत्तिरिति सिध्यति । अत्र जीवसमाष्टिभूतचतुर्मुखस्य हयशिरोमूलकज्ञानलाभकथनेन लोके चेतनानां हयशिरोऽनुग्रहलब्धविज्ञानवतामेव शुद्धमनस्कानामिन्द्रियाश्ववशीकरणमितिसूच्यते । चतुर्मुखप्रपत्त्या वशीकृत एवानिरुद्धः हयशिरोरूपेणावतीर्य चतुर्मुखदुःखमपाकरोदिति पूर्वमुक्त्या सर्वेन्द्रियनियामकोत्तमहयशिरस एव प्रपत्त्या वशीकरणे किं वक्तव्यमिन्द्रियाश्वानां वशीकरणे इत्यप्यर्थ स्सूच्यते। कृष्णावतारे चायमर्थ स्सम्यक्प्रकाशितः रथे रथित्वेनावस्थितस्यार्जुनस्याश्वानां सम्यगनुकूलवर्त्म निगमनसंपादनेन सुखप्रापणेन देहे स्थितानां चेतनानां सर्वेषामन्तर्यामिणा भगवता इन्द्रियाणसम्यक्चालन एव रजस्तमसोरभिभवेन सत्ववृद्ध्यासम्यक् ज्ञानजननेन सुखमित्यर्थस्य प्रकाशनात्। ब्रह्मणः श्रुति पञ्चरात्रयोरुपदेशेन ज्ञानजननं हयशिरोवतारे, अर्जुनस्य श्रुत्युपबृंहणपञ्चरात्र सङ्ग्रहरूप भगवद्गीतोपदेशेन ज्ञानजननं च कृष्णावतारे इत्यवतारद्वयानुरूप्यम् । एवं वेदादिमुखेन ज्ञानसंपादनार्थावतारेषु हयशिरोऽवतारःप्रथमः, कृष्णावतारश्चरमः । एवं परस्परानुरूपप्रथमचरमावतारद्वयं नारायणोपनिषत्प्रातिपादितमभिप्रेत्यैव शठकोपमुनिना परकालमुनिना च प्रथमं हयशिरोऽवतारस्य अन्ते कृष्णावतारस्य च निर्देशः कृतः ।

गीतायां 'माधवः' (गी. १–१४) (हृषीकेशः) (गी. १–१५) 'मधुसूदनः' (गी. २–१) तमुवाचहृषीकेशः (गी. २–१०) इति निर्देशतात्पर्यपर्यालोचनायां प्रागुक्तार्थः प्रतीयते। 'एष नारायणः श्रीमान् आगतो मधुरां पुरीम्' (भा. अ. २४) 'पुण्या द्वारवती तत्र यत्रासौ मधुसूदनः' (म. भा. अ. ८६-२५) 'कृष्णं धर्मं सनातनम् (२६) 'आस्ते हरिरचिन्त्यात्मा तत्रैव मधुसूदनः' (२८) इति निर्देशोऽपि अवतारद्वयानुरूप्यं बोधयति।

श्रुतिघटकमधुसूदनशब्दस्य हयशिरा एवार्थ इत्याभिप्रेत्य हयशिर उपाख्यानानन्तराध्याये 'जायमानं हि पुरुषं यं पश्येन्मधुसूदनः। सात्विकः स तु विज्ञेयः स वै मोक्षार्थचिन्तकः, इत्यत्र पूर्वाध्याये तामसराजसमधुकैटभहन्तृत्वेन प्रतिपादितस्य हयशिरसो मधुसूदनशब्देन निर्देशो व्यासेन कृतः। अत्र 'जायमानं पश्येत्' इति पदद्वयेन 'हिरण्यगर्भंपश्यत जायमानम्' (तै उ. ४-१०-१९) (श्वे. उ. ४-१२) इति श्रुतिः प्रत्यभिज्ञाप्यते। मूलश्रुतौ 'सनो देवः शुभयास्मृत्या संयुनक्तु' इति चरमपादाशयः 'सात्विकः स तु विज्ञेयःस वै मोक्षार्थचिन्तकः' इत्यनेन प्रकाशितः। 'यो देवानां प्रथमं पुरस्ताद्विश्वाधिको रुद्रो महर्षिः' इति पूर्वार्धे रुद्रशब्दार्थो हयग्रीव इति तात्पर्येणात्र मधुसूदनशब्दः। तत्पूर्वमन्त्रे (तै) 'त्रिधाबद्धो ऋषभो रोरवीति' इत्यत्र 'रोरवीति श्रुतिमुखरमुखत्वात्' इति सेश्वरमीमांसाविवरणेन रुद्र इत्यत्र रुत्-वेदः 'अरुन्मुखन्यातीन्' (कौ. उ. ३–१) इत्यत्र रुच्छब्दस्य वेदार्थकत्वस्य संमतत्वात्। तं द्रवति गच्छतीति अर्थोनिर्धारितः। श्रुतौ वेदप्रासृत्वेन हयशिराः प्रतिपादितः। अत्र च तदनन्तरं युद्धार्थमागत मधुहन्तृत्वेन इत्येतावान्विशेषः। हिरण्यगर्भस्य अनिरुद्धनाभीकमले प्रथमं देहसंबन्धरूपजन्मदशायां अनिरुद्धदर्शनं न पूर्णं सात्विकत्वाय प्रभवति। अनन्तरं वेदापहारदशायां ज्ञाननाशात्। अपहृतवेदानादाय ब्रह्मणे प्रदाय मधुकैटभहननानन्तरं ज्ञानप्रदानसमय एव सात्विकतापूर्तिः। अपहृतवेददानादिकं हयशिरोरूपधारिण एवानिरुद्धस्य। इति 'हिरण्यगर्भंपश्यत जायमानम्, इति

श्रुतौ जायमानशब्दे ज्ञानजन्मैव विवक्षितमित्येतेन निर्धारितं भवति । 'ब्रह्मण्यो मदुसूदनोम्' इति उपनिषदन्तरानुरोधेन 'हिरण्यगर्भं पश्यतजायमानम्' इति श्रुतावित्थमर्थोविवक्षित इति व्यासस्याशयः । श्रुतौ कैटभहन्तारमनभिधाय मधुहन्त्रुक्तिः रजोपेक्षया तमसो ज्ञानविरोधित्वातिशयसूचनार्था एवं वदता व्यासेन स्वस्यापि जननकालिकमधुसूदनकटाक्षेणैव सात्विकत्वं प्रख्यापितम्। अत एव पद्मपुराणे हयशिरोऽनुग्रहेण वेदादिलाभवतः चतुर्मुखाद्व्यासमुनेर्वेदादि-लाभोक्तिः प्राक् (२४४ पुटे) उदाहृत ब्रह्मवैवर्तवचनेषु हयशिरश्शक्तिरूप-वाग्देव्यनुग्रहेण वेदविभागपुराणब्रह्मसूत्रप्रणेतृत्वोक्तिश्च संगच्छते ।

पद्मपुराणोक्तदिशा ब्रह्मण एव प्रथमं सर्वपुराणप्रणेतृत्वं (वेदार्थ-संग्रहे) जनकयाज्ञवल्क्य संवाद हयशिर उपाख्यानादि निर्गतिदिशा तत्वैक्यं पञ्चरात्रप्रामाण्यं श्रुति पञ्चरात्रयोरैकरस्यम्, इत्याद्यर्थं श्रीभाष्यादिषु व्यव-स्थापयति भगवद्रामानुजमुनौ वाग्देवीपतेर्हयशिरसोऽनुग्रहः पूर्ण इति निश्चित्यैव श्रीभाष्य श्रवण समनन्तरं सरस्वत्या प्राक् (२४५ पुटे) उदाहृत (ब्रह्मवैवर्त) वचनानुसारेण स्वमूलभूत वाग्देवीसंश्लिष्टस्य स्वपतेश्चतुर्मुखस्य वेदपञ्चरात्रयोरुपदेष्टुः मूर्तिः स्वेनाराधिता भगवद्रामानुजमुनये प्रदत्तेति बोध्यम्। अयमर्थः भगवद्रामानुजशिष्यान्ध्रपूर्ण विरचित यतिराजवैभवे—

तद्भाष्यमाहृत्य निधाय मूर्ध्नि
श्रीभाष्यमेतद्वरभाष्यकृत्त्वम् ।
इतीव तस्मै प्रददौ च देवी
भाष्यं हयग्रीवमपि स्वदेवम् ॥ ८८ ॥
गृह्णन् हयग्रीवमपि प्रणम्य
कुलागतं तं वरदं च नित्यम् ।
आराधयन्नन्यमतानि जित्वा
श्रीवेङ्कटाद्रिं पुनराससाद ॥

इत्यत्र स्फुटः ।

एवं नाथमुनेरपि हयशिरसि भक्तिः 'तस्मै नमो मधुजिदङ्घ्रिसरोज-तत्वज्ञानानुरागमहिमातिशयान्तसीम्ने । नाथाय नाथमुनयेऽत्रपरत्रचापि नित्यं यदीयचरणौ शरणं मदीयम् ॥ (स्तो. र. २) इत्यत्र भगवद्यामुनमुनिना तत्पौत्रेण 'यं पश्येन्मधुसूदनः' ब्रह्मण्यो—मधुसूदनोम्, इति स्मृति श्रुति प्रसिद्धार्थस्य मधुजिच्छब्देन निर्देशमुखेन प्रदर्शिता ।

एतेन स्वस्यापि हयशिरसि भक्तिस्सूचिता । अत एव 'वेदापहार' (स्तो. र. १३) इति श्लोके यामुनमुनेर्हयशिरसोऽनुसन्धानं संगच्छते । अत्र हयशिरोऽवतार एवं विवक्षित इति प्राचीनसर्वव्याख्यानेषु स्फुटम् । तदेतत्सर्वमाभिप्रेत्य भगवद्रामानुजमुनिना काञ्च्यां स्वशिष्याय कुरुकेशाय दत्तां स्वाराधितां लक्ष्मीहयग्रीवमूर्तिं तत्प्रपौत्रपुण्डरीकाक्षाल्लब्ध्वा स्वयमाराधित-वद्भिराचार्यपादैः श्रीहयग्रीवमन्त्रपुरश्चरणजानितमाहिमवद्भिः, 'नाथोपज्ञं प्रवृत्तं बहुभिरुपचितं यामुनेय प्रबन्धै स्त्रातं सम्यग्यतीन्द्रैरिह निखिलतमः कर्शनं दर्शनं नः । (त. मु. अ. स. १३६) इत्युक्तगुरुपङ्क्तेः 'हृद्याहृत्पद्म-सिंहासनरसिक हयग्रीव हेषोर्मिघोष क्षिप्त प्रत्यर्थिदृप्तिर्जयति बहुगुणा पङ्क्तिरस्म-द्गुरूणाम् ।' इत्यनन्तरश्लोके हयग्रीवानुग्रहपूर्तिः प्रदर्शिता । अत्र सर्वार्थसिद्धिविवरणम्—'एतद्दर्शनप्रवर्तकाचार्यप्रशंसया स्वभक्तिमेवाविष्कृतवान्' इत्यादि । एतेन सारशास्त्रे 'एते मह्यमपोढमन्मथशरोन्माथाय नाथादयः' इति श्लोकानन्तरं 'हृद्याहृत्पद्मे' ति पूर्वोक्त श्लोकसमानानुपूर्वीकश्लोकोऽपि व्याख्यातः । एवं च जननकालिकहयशिरोऽनुग्रहवतामेव सात्विकता, हयशिरोऽनुग्रहेणैव विरोधिमतनिरसनपूर्वकं वेदतत्वार्थानिष्कर्षणं नान्यथेति सिद्धम् ।

भट्टार्यैरपि त्रिमूर्तिमध्यगत विष्णव वतारानिरूपणपरपूर्वश्लोकोक्त सत्व-प्रवर्तनकृपापरिपालनादि विशदीकरणार्थं अवतारान् बहून्निरूपयद्भिः 'मधुः कैटभश्चेति रोधं विधूय त्रयीदिव्यचक्षुर्विधातुर्विधाय । स्मरस्यङ्ग रङ्गिंस्तुरङ्गाव-तारः समस्तं जगज्जीवयिष्यस्यकस्मात् । (रं. स्त. उ. श. ५२) इति प्रथमं

हयग्रीवावतारमुखेन सत्वप्रवर्तनकृपापारिपालनानि प्रतिपाद्यानन्तरं हंसमत्स्याद्यवतारा निरूपिताः। 'शरीरभूतभृत्' इति नामविवरणे 'तच्छिरः' इति बृहदारण्यकश्रुतिमुदाहृत्य हयशिर उपाख्यानस्थ वचनोदाहरणेनायमर्थो निर्धारितः। एतेन वेदार्थज्ञानमूलक जगदुज्जीवनं हयशिरोऽनुग्रहेणेतिस्फुटम्।

वाग्देवीपतेर्हयशिरसोनुग्रहेण यज्ञवल्क्येन 'तत्स्थत्वादनुपश्यन्तिह्येक एवोतिसाधवः।' इति सिद्धान्तितोऽर्थः 'वत्त्वं जिज्ञासमानानाम्' इति श्लोके सङ्गृहीत इत्ययमर्थः 'अध्यासीनतुरङ्गवक्त्रविलसज्जिह्वाग्रसिंहासनादाचार्यादिह देवतां समधिकामन्यां न मन्यामहे। यस्यासौ भजते कदाचिदजहद्भूमा स्वयं भूमिकां मग्नानां भविनां भवार्णव समुत्ताराय नारायणः' इत्यत्रान्ते नारायणशब्दप्रयोगेण सूचित इति दिक्॥

एतावता सर्वस्य जगत आधारो व्यापकः स्वामी नियन्ताऽन्तरात्मा नारायण इति निर्णीतम्। अथ उपक्रमे 'वरदः' इति संग्रहेणोक्तं 'शरणं सुहृद्गतिर्बन्धुर्नारायणः' इति सौबालश्रुतितात्पर्यविषयभूतम्' नाराणामयनमिति तत्पुरुषसमासलब्धं सर्वस्य गतित्वमाह—ब्रह्मादीनामित्यादिना।

ब्रह्मादिनां सलोकानामृषीणाञ्च महात्मनाम् ॥ १० ॥
साङ्ख्यानां योगिनाञ्चापि यतीनाञ्चा(मा)त्मवेदिनाम्।
मनीषितं वि(तानि)जानाति केशवो न तु तस्य ते
॥ ११॥

ये केचित्सर्वलोकेषु दैवं पित्र्यञ्च कुर्वते।
दानानि च प्रयच्छन्ति तप्यन्ते च तपो महत् ॥१२॥

सर्वेषामाश्रयो विष्णुरैश्वरं विधि(सर्ग)मास्थितः।
सर्वभूतकृतावासो वासुदेवेति चोच्यते ॥ १३ ॥

अयं (एषो) हि नित्यःपरमो महर्षि-
र्महाविभूतिर्गुणवान् गुणाख्यः (निर्गुणाख्यः) ।
गुणैश्च संयोगमुपैति शीघ्रं
काले यथर्तावृतुसम्प्रयुक्तः(कालो यथार्थं व्रतसम्प्र-
युक्ते) ॥ १४ ॥

नैवास्य विन्द (बुध्य) न्ति गतिं महात्मनो
नचा (नैवा) गतिं कश्चिदिहानुपश्यति ।
ज्ञानात्मकास्संयमिनो महर्षयः
पश्यन्ति नित्यं पुरुषं गुणाधिकम् ॥ १५ ॥

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि नारायणीये
सप्तपञ्चाशदधिकत्रिशततमोऽध्यायः
हयशिर उपाख्यानं समाप्तम्

———

ब्रह्मादीनाम्—ब्रह्मा चतुर्मुख आदिर्येषां तेषाम्। आदिपदेन रुद्रादयो ग्राह्याः। मोक्षधर्मे पूर्वं—

चिन्तयन्तो हि यं नित्यं ब्रह्मेशानादयस्स्वयम् ।
निश्चयं नाधिगच्छन्ति तमस्मि शरणं गतः ॥ (२१०--२३)

इत्याद्युक्तेः । **सलोकानाम्**-जन सहितानाम्, सकलजनसहितानां ब्रह्मादिदेवानामिति यावत् । सः-लोकानाम्, इति वा छेदः । एतेन त्रिवर्गार्थिनः सङ्गृहीताः । अथ मोक्षार्थिन उच्यन्ते-**ऋषीणाम्**-अतीन्द्रियार्थद्रष्टॄणाम् । उपासनात्मकयोगनिष्ठानामिति यावत् । **महात्मनाम्**—' आत्मायत्नो धृति-

बुद्धिः, इति कोशात् महाबुद्धीनां महायत्नवतामितिवार्थः । साङ्ख्यानामित्यादि अत्र साङ्ख्ययोगशब्दौ ज्ञानयोगकर्मयोगवाचिनौ ' **यतीनाम्** ' सर्वधातुभ्य इन्' (उ.सू. ४–५५७) इत्यौणादिकेन्नन्तो यतिशब्दः। अविलम्बेन फलार्थं प्रयतमानानाम् ' **आत्मवेदिनाम्** आत्मनिक्षेपवताम्, यतीनामात्मवेदिनामित्यनेन 'त्यागेनैके अमृतत्वमानशुः' 'सन्यासयोगाद्यतयश्शुद्धसत्वाः' 'ओमित्यात्मानं युञ्जीत' 'तस्मान्यासमेषां तपसामतिरिक्तमाहुः' इति नारायणीयश्रुत्याद्यर्थ उक्तः । ज्ञानयोगकर्मयोगसमनन्तरमात्मवेदनकथनं च ज्ञानयोगकर्मयोगयोरिवात्मवेदनस्योपासनं प्रत्यङ्गत्वम्, ज्ञानयोगकर्मयोगाङ्गकत्वमुपासनस्यैव न तु प्रपत्तेरिति च बोधनाय । यद्वा 'मुमुक्षुणा यत्साङ्ख्येन योगेन न च भक्तितः । प्राप्यते परमं धाम यतो नावर्तते यतिः' 'तेन तेनाप्यते तत्तन्न्यासेनैव महामुने, 'सत्कर्मनिरताश्शुद्धा स्साङ्ख्ययोगविदस्तथा। नार्हन्ति शरणस्थस्य कलां कोटितमीमपि ।' इत्यहिर्बुध्न्याद्युक्त प्रकारेणोपासनवैलक्षण्यख्यापनायान्ते आत्मवेदनोक्तिः ।

ननु पूर्वोदाहृतश्रुतिषु त्यागसन्यास न्यासशब्दानामेकार्थत्वमस्तु तथापि भगवद्गीताष्टादशाध्यायतद्भाष्ययोः, त्यागसन्यासयोः कर्मयोगोपयोगिफलसङ्गकर्तृत्वत्यागरूपताव्यवस्थापनेन त्यागसन्यासशब्दयोरात्मयोगपरत्वं न सम्भवतीति चेत् । उच्यते । शान्तिपर्वणि राजधर्मे—

त्यागवान् जन्ममरणे नाप्नोतीति श्रुतिर्यतः ।
प्राप्तवर्त्मा कृतमतिर्ब्रह्म सम्पद्यते तदा ॥ ७–३५ ॥
स धनञ्जय निर्द्वन्द्वो मुनिर्ज्ञानसमन्वितः ।
वनमामन्त्र्य वः सर्वान्गमिष्यामि परन्तप ॥ –३३ ॥

इति वदन्तं युधिष्ठिरं प्रति नकुलः—

विशाखयूपे देवानां सर्वेषामग्नयश्चिताः ।
तस्माद्विद्धि महाराज देवाः कर्मफले स्थिताः ॥ १२–३ ॥
अनास्तिकानां भूतानां प्राणदाः पितरश्च ये ।

तेऽपि कर्मैव कुर्वन्ति विधिं पश्यस्व पार्थिव ॥ ४ ॥
वेदवादापविद्धांस्तु तान्विद्धि भृशनास्तिकान् ।
न हि वेदोक्तमुत्सृज्य विप्रः सर्वेषु कर्मसु ॥ ५ ॥
देवयानेन नाकस्य पृष्ठमाप्नोति भारत ।
अत्याश्रमानयं सर्वानित्याहुर्वेदनिश्चयाः ॥ ६ ॥
ब्राह्मणाः श्रुतिसंपन्नास्तन्निबोध नराधिप ।
वित्तानि धर्मलब्धानि क्रतुमुख्येष्ववासृजन् ॥
कृतात्मा स महाराज स वै त्यागी स्मृतो नरः ।
अनवेक्ष्य सुखादानं तथैवोर्ध्वं प्रतिष्ठितः ॥ ८ ॥
आत्मत्यागी महाराज स त्यागी तापसो मतः ।
अनिकेतः परिपतन् वृक्षमूलाश्रयो मुनिः ॥ ९ ॥
अयाचकः सदा योगी स त्यागी पार्थ भिक्षुकः ।
क्रोधहर्षावनादृत्य पैशुन्यं च विशेषतः ॥ १० ॥
विप्रो वेदानधीते यः स त्यागी गुरुपूजकः ।
आश्रमांस्तुलया सर्वान्धृतानाहुर्मनीषिणः ॥ ११ ॥
एकतश्च त्रयो राजन् गृहस्थाश्रम एकतः ।

इति ॥

अन्तर्बहिश्च यत्किञ्चिन्मनो व्यासङ्गकारकम् ।
परित्यज्य भवेत्त्यागी न हित्वा प्रतितिष्ठति ॥ ५४ ॥

इति च प्रत्युवाच । एवं सहदेवोऽपि—

न बाह्यं द्रव्यमुत्सृज्य सिद्धिर्भवति भारत ।
शरीरं द्रव्यमुत्सृज्य सिद्धिर्भवति वा न वा ॥ १३–२ ॥
द्व्यक्षरस्तु भवेन्मृत्युस्त्र्यक्षरं ब्रह्म शाश्वतम् ।
ममेति द्व्यक्षरो मृत्युर्न ममेति च शाश्वतम् ॥ ४ ॥

ब्रह्ममृत्यू ततो राजन्नात्मन्येव समाश्रितौ ।
अदृश्यमानौ भूतानि योजयेतामसंशयम् ॥ ५ ॥
तस्मादेकान्तमुत्सृज्य पूर्वैः पूर्वतरैश्च यः ।
पन्था निषेवितः सद्भिः स निषेव्यो विजानता ॥ ८ ॥
स्वायम्भुवेन मनुना ततोऽन्यैश्चक्रवर्तिभिः ।
यद्ययं ह्यधमः पन्थाः कस्मात्तैस्तैर्निषेवितः ॥ ९ ॥

इति । चक्रवर्तिनः-जनकोपरिचरादयः । यथाहानुगीतायां जनक आश्वमेधिके

आत्मापि चायं न मम सर्वा वा पृथिवी मम ।
यथा मम ततोऽन्येषामिति मन्ये द्विजोत्तम ॥ ३२–११ ॥
कस्येदमिति कस्य स्वमिति वेदवचस्तथा ।
नाध्यगच्छमहं बुध्या ममेदमिति यद्भवेत् ॥ इति ॥

नारायणाख्याने पाञ्चरात्रिकधर्मानुदीक्षित उपरिचरोऽप्याह—

आत्मा राज्यं धनं चैव कलत्रं वाहनानि च ।
एतद्भगवते सर्वमिति तत्प्रेक्षितं सदा ॥ इति ॥

अत्रात्मत्यागस्य श्रौतत्यागशब्दार्थत्वं तस्य च 'न मम' 'आत्मापि चायं न मम' 'आत्मा राज्यं धनं चैव कलत्रं वाहनानि च—एतद्भगवते सर्वम्' इत्यनुसन्धानविशेषरूपत्वं च स्फुटमिति 'ओमित्यात्मानं युञ्जीति' इत्युक्तात्मयोगरूपस्त्यागः सन्न्यासः । एवं च उद्योगपर्वणि ।

ये तमेव प्रपद्यन्ते न ते मुह्यन्ति मानवाः ॥ ६७–१५ ॥
एष ऐकायनः पन्था येन यान्ति मनीषिणः ॥

इत्यत्राप्यात्मयोग एव विवक्षित इति सिद्धम् । अत्र च मूलं भूतात्मानं प्रस्तुत्य 'आत्मस्थं प्रभुं भगवन्तं कारयितारं नापश्यद्गुणौघैरुह्यमानः कलुषीकृतश्चास्थिरश्चञ्चलो लोलुप्यमानः सस्पृहोऽव्यग्र श्चाभिमानित्वं प्रयाता इत्यहं सो ममेद मित्येवं मन्यमानो निबध्नात्यात्मनात्मानम्' ॥ ३ प्र. ॥ इति

'अस्य को विधिर्भूतात्मनो येनेदं हित्वाऽऽत्मन्नयेव सायुज्यमुपैति । तानूहोवाच' इत्युपक्रम्य 'अस्ति ब्रह्मेति ब्रह्मविद्याविदब्रवीत् । ब्रह्मद्वारमिदमित्येवैतदाह । यस्तपसाऽपहतपाप्मा ओं ब्रह्मणो महिमेत्येवैतदाह यः सुयुक्तोऽजस्रंचिन्तयति' इत्यादि मैत्रायणी श्रुतिरपि । एवं 'नमो नमो वाङ्मनसातिभूमये' इति स्तोत्रभाष्योदाहृताः "याः काश्चन कृतयो मम भगवति न मम ममतास्ति तासु भगवत एव ता अममोऽहं भगवति अहमपि न मम भगवत एवाहमस्मीत्येव ममतां योजयत्यतो नमः" इत्येकायनश्रुत्यादयोऽपीति । एतत्तत्त्वं च प्रबन्धान्तरे निपुणतरं निरूपयिष्यते । अतश्चात्मवेदिनामित्यस्य यथोक्त एवार्थः । **मनीषितम्**—मनीषा अस्य सञ्जाता इति तारकादित्वादितच् । बुद्धिस्थं फलमिति यावत् । केशवशब्दार्थः पूर्वमेवोक्तः अत्र ब्रह्माद्यपेक्षित विज्ञानकथनेन तत्तदपेक्षितप्रदत्वं सिद्धम् ।

एवं 'तमेव विदित्वा अतिमृत्युमेति' वेदाहमेतं पुरुषं महान्तम्' इत्यत्र महापुरुषः केशव एव ।

'एको रुद्रः न द्वितीयाय तस्थौ' 'विश्वाधिको रुद्रो महर्षिः-इत्यत्र रुद्रोऽपि 'य एनं विदुरमृतास्ते भवन्ति' इति तत्पूर्वश्रुतौ संसाररुग्द्रावकतया निर्ज्ञातो नारायण एव विवक्षितः । निर्वचनमपि 'रुजं द्रावयते यस्मात्तस्माद्रुद्र इहोच्यते' इति । नारायणीये 'त्यागेनैके अमृतत्वमानशुः' इति प्रघट्टके 'यः परः स महेश्वरः' इत्यत्र महेश्वरपदार्थः निरुपाधिक परमैश्वर्यवान्नारायण इति 'ईश्वरो हि जगत्स्रष्टा' इत्युपक्रम एव निर्णीतम् ॥

पाद्मेऽपि 'निरुपाधिकमैश्वर्यं वासुदेवे प्रतिष्ठितम्' इति मनीषिणां च सर्वेषां केशवो ननु वै गतिः' इति क्वाचित्कः पाठः । तत्पाठे गतिरिति करणे क्तिन् । फललाभकरणमित्यर्थः । एतत्पाठे नारायणशब्दे तत्पुरुषसमासार्थो वाचनिक एव । पूर्वपाठे स्वार्थिक इति बोध्यम् ॥

एतावता नारायणस्य परत्वं स्थापितम् । अथ 'यज्वभिर्यज्ञपुरुषो वासुदेवश्च सात्वतैः । वेदान्तवेदिभिर्विष्णुः प्रोच्यते यो नतोऽस्म्यहम् ॥

॥ ५–१७–१५ ॥ इति विष्णुपुराणोक्तसात्वतवेदान्ति सम्मतपक्ष एव श्रुतितात्पर्यमिति पूर्वं 'ये यजन्ति पितॄन् देवान्–ज्ञेयो विष्णुरिति श्रुतिः'। ॥ ३८६–७ ॥ इत्यादिना, अत्र 'नारायणपरा वेदाः' इत्यादिना च निर्णयकरणमनुचितम्। 'देवा वै सत्रं निषेदुः' इत्यादि बृहदारण्यकप्रवर्ग्यार्थवादे 'विष्णोः शिरः प्रचिच्छिदतुः' इति वाक्येन विष्णोः कर्मपरवशत्वप्रतीतेः इत्याक्षेपे "देवा वै सत्रं निषेदुः" इत्याद्युदाहृतप्रवर्ग्यार्थवादवाक्यस्य विष्णोः कर्मपरवश गौणप्रादुर्भावपरतायाः हरिवंशे व्यवस्थापनमभिसन्धाय, अत्र 'अग्निरवमो देवतानां विष्णुः परमः' इत्याद्युदाहृतश्रुतितात्पर्यविषयभूतं सर्वकर्मसमाराध्यत्वं पूर्वमुक्तमेव शिष्यबुद्धिसौकर्याय हयशिरस्यपि स्मारयति—'ये केचित्' इत्यादिना 'वासुदेवेतिचोच्यते' इत्यन्तेन। येकेचित् देवजातीया मनुष्यजातीया वा। सर्वलोकेषु चतुर्मुखस्थानभूत सत्यलोकादि सकलभुवनेषु। दैवम्—'सास्य देवता' (पा. सू. ४–२–२४) इत्यण्। तत्तद्देवोद्देशेनानुष्ठीयमानमित्यर्थः। पित्र्यम्—'सास्य देवता' इत्यर्थे 'वाय्वृतुपित्रुषसो यत्' (पा. सू. ४–२–३१) इति यत्। दानानि-गो भू हिरण्यादिदानानि। महत्तपः—कृच्छ्रचान्द्रायणादिकम्। तप्यन्ते अनुतिष्ठन्ति। 'तपस्तपःकर्मकस्यैव' (पा. सू. ३-१-८८) इत्यात्मनेपदम्। पाकंपचतीतिवत्प्रयोगः। सर्वेषामाश्रयः सर्वपुरुषाणां फलप्रदाता। तथा च श्रुतिः 'इष्टापूर्तं बहुधा जातं जायमानं विश्वं बिभर्ति भुवनस्य नाभिः' इति। आहुश्च द्रमिडाचार्याः 'फलसंबिभत्सया कर्मभिरात्मानं पिप्रीषन्ति स प्रीतोऽलं फलायेति शास्त्रमर्यादा' इति। ऐश्वरम्—ईश्वरसंबन्धिविधिम्, नियमनरूपम्। अन्तर्यामित्वकथनेन विष्णोर्मुख्यावतारत्वं ख्यापितम्। सर्वभूतकृतावासः सर्वभूतैः कृत आवासो यत्र' सर्वभूतेषु कृत आवासो येनेति वा' 'सर्वभूताधिवासं च' इत्युदाहृत श्रुतिरिह भाव्या। एतेन 'चत्वारि श्रृङ्गा' इत्यादिश्रुतितात्पर्यविषयार्थो निर्णीतः। तेन

यज्वभिर्यज्ञपुरुषो वासुदेवश्च सात्वतैः।

वेदान्तवेदिभिर्विष्णुः प्रोच्यते यो नतोऽस्म्यहम् ॥ ५-१७-१५ ॥

इति विष्णुपुराणवचने सात्वत वेदान्तवेदिसम्मत एव पक्षः पराशरस्याभिप्रेत इत्यपि व्यवास्थापि । तदुत्तरं 'विश्वाधिको रुद्रो महर्षिः' इत्यत्र रुद्रः पूर्वोक्तदिशा हयशिरा एवेति भावः ॥ १९ ॥

ननु तैत्तिरीयारण्यके 'रुद्रस्य त्वेव धनुरार्तिः शिर उत्पिपेष । स प्रवर्ग्योऽभवत्' इत्यादिश्रुतौ रुद्रस्य शिर उत्पेषणं श्रूयते । पूर्वोदाहृतप्रवर्ग्यार्थवादे च विष्णोः । अतः 'यो देवानाम्' इत्यादिषु नारायणीयश्वेताश्वतरादिश्रुतिषु रुद्रशब्दवाच्यस्यापि नोत्कर्षसंभव इति मन्दाक्षेपे 'रुद्रो वा एष यदग्निः' इति श्रुत्या तैत्तिरीयारण्यके रुद्रशब्दार्थ आरुणकेतुकाग्निरेवेति स्फुटतरमेवोक्तमिति तत्र समाधानोक्तिरनपेक्षितेत्यभिप्रेत्य 'यो देवानाम्' इत्यादिनारायणीयसन्दर्भस्य श्वेताश्वतरप्रकरणस्यापि भावमाह **अयं हि नित्य** इत्यादिना । अयं हयशिरा वासुदेवः, नित्यः, हीति 'नित्यो नित्यानाम् (कठोप, श्वेता. उ.) इत्यादि श्रुतिप्रसिद्धौ । एतेनास्य शिर उत्पेषणादिकं न संभवतीति सूचितम् । **परमः** 'सर्वभूताधिवासं च' इत्यादिश्रुत्युक्तरीत्या सर्वभूताधिवासस्य सर्वानुग्राहकस्यैव खलु सर्वोत्कर्षः । एतेन 'विश्वाधिपः' विश्वाधिकः' इति श्वेताश्वतरनारायणीयश्रुतिघटकपदद्वयार्थ उक्तः । 'यस्मात्परं नापरमस्ति किञ्चित्' इत्याद्यप्यत्रैव सङ्गतमिति भावः । **महर्षिः** सर्वज्ञः-इदमुपलक्षणं शक्त्यादेरपि । **महाविभूतिः** 'वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम्' इत्याद्युक्तरीत्या लीलाभोगविभूतिद्वयसमृद्धः । **गुणवर्जिताख्यः** गुणा वर्जिता येन, गुणैर्वर्जित इति वा गुणवर्जितः । सर्वभूताधिवासेऽपि वासुदेवे भूतसंबन्धिनां सत्वरजस्तमसां कर्ममूलसुखादीनां च न लेप इति भावः । एतेन 'एको देवः—निर्गुणश्च' इति श्रुत्यर्थ उक्तः । एवं सति सर्वव्यापकस्य 'निर्गुणो गुणभुक्चैव गुणस्रष्टा' इति नारायणाख्यानोक्तं गुणस्रष्टृत्वं कथमिति शङ्कायां सोदाहरणमुपपादयति **गुणैश्च** इत्यादिना । अत्र गुणपदं सत्वरज-

स्तमोगुणान्वित तत्तद्वस्तुपरम् । शीघ्रम् प्रलयकालात्मिका रात्रिरेकैव विलम्ब इति भावः । काल इत्यादि । यथा विभोः कालस्य विभूतिद्वय-संबद्धस्य लीलाविभूतावुपाविभूत वसन्ताद्यृत्वपगमे ग्रीष्माद्यृतुसम्बन्धः तथा वासुदेवस्यापि प्रकृतिगताव्यक्ताद्यवस्थापगमे महदाद्यवस्थावद्गुणान्वित वस्तु सम्प्रयोगः । लोके ऋतुशब्दस्य कालपर्यवसायिव्यवहारवन्महदादिशब्दाना-मपि ब्रह्मपर्यवसायिव्यवहारः प्राज्ञानाम् । यथाहुः श्वेताश्वतराः 'केनेषितं कर्म विवर्ततेह पृथ्व्याप्यतेजोऽनिलखानि चिन्त्यम् । तत्कर्म कृत्वा विनिवर्त्य भूयस्तत्वेन तत्वस्य समेत्य योगम् ॥ एकेन द्वाभ्यां त्रिभिरष्ट-भिर्वा कालेन चैवात्मगुणैश्च सूक्ष्मैः' । 'आदिस्स संयोगनिमित्तहेतुः परस्त्रिकालादकलोऽपि दृष्टः' इति । इत्थं चाणुमात्रेऽपि वस्तुनि स्थितस्य निरवधिक षाड्गुण्यविशिष्टतया प्रतिपत्तियोग्यत्वरूपं पूर्णत्वमप्यक्षतमिति सर्व तत्वसंयुक्तत्वरूपं सर्वव्यापकत्वं वासुदेवस्य निर्बाधमिति भावः ॥ ९३ ॥

ननु 'ईश्वरो हि जगत्स्रष्टा' इत्यादिना 'गुणैश्च संयोगमुपैति' इत्यन्तेन नारायणस्य सर्वजगत्स्रष्टृत्वाकर्मवश्यत्व सर्वव्यापकत्व सर्वतत्व-संयोगप्रतिपादनं हयशिरसस्तदवताररूपत्वेन परत्वकथनं चानुचितम् । संयोगस्याप्राप्तप्राप्तिरूपत्वेन सर्वव्यापकस्य सर्वसंयोगाभावात्, अद्वितीय-श्रुतिविरोधाच्च । शतपथब्राह्मणे 'पुरुषो ह वै नारायणोऽकामयत । अति-तिष्ठेयग्ं सर्वाणि भूतान्यहमेवेदग्ं सर्वग्ं स्यामिति । स एतं पुरुषमेधं पञ्च-रात्रं यज्ञक्रतुमपश्यत्तमाहरत्तेनायजत तेनेष्ट्वाऽत्यतिष्ठत्सर्वाणि भूतानीदग्ं सर्व-मभवदति तिष्ठति सर्वाणि भूतानिदग्ं सर्वं भवति य एवं विद्वान् पुरुषमेधेन यजते यो वैतदेवं वेद, (१२ प्र. ६ अ.) इति पुरुषमेधार्थवादे । 'तत्रैवान्यत्र 'पुरुषग्ं ह वै नारायणं प्रजापतिरुवाच यजस्व यजस्वेति सहोवाच यजस्व यजस्वेति वावत्वं मामात्थ त्रिरयक्षि' इत्यादौ च नारायणस्य कर्मवश्यत्व प्रतीतेश्च । इति शङ्कायाम्—श्वेताश्वतरोपनिषदि बहुधाभ्यस्त नारायणशब्द-योगार्थभूत सर्वव्यापकत्व लिङ्गादिभिर्नारायणस्य परत्वं व्यवस्थापितम् ।

सुबालोपनिषदादिभिश्च तदेव दृढीकृतम् । इति पुरुषमेधार्थवादवाक्यस्य नारायणनामककर्मपरवश ऋषि विषयत्वं तत एव निश्चितमिति समाधानकथनमनावश्यकमित्यभिप्रेत्य श्वेताश्वतरश्रुति सच्छाय कतिपयश्रुतिघटिते 'स्वर्णघर्मानुवाकेन' इति प्रागुदाहृत श्रीभागवतवचने वासुदेवार्चेन विनियुक्ते—

तद्विष्णोरितिमन्त्रेण सूक्तेन पुरुषेण वा।
नैवाभ्यां सदृशो मन्त्रो वेदेषूक्तश्चतुर्ष्वपि ॥

इति स्वीयस्मृतौ 'इदं पुरुषसूक्तं हि सर्ववेदेषु पठ्यते ॥ इति तत्रैवोत्तरत्र च सर्ववेदपठितत्वेनोत्कर्षमभिधाय नारायणपरत्वेन निर्णेष्यमाणे पुरुषसूक्ते 'यत्पुरुषेण हविषा' इति मन्त्रे हयशिरसो विवक्षाव्यञ्जनाय तदर्थमत्रापि संग्रहीष्यन् संयोगस्याप्राप्तप्राप्तिरूपत्वं साङ्केतिकमिति, अद्वितीयत्वश्रुतिः सजातीयनिषेधपरेति च व्यञ्जयन् 'तं त्वौपनिषदं पुरुषम्' इत्युपनिषत्तात्पर्यविषयत्वेनोक्तः पुरुषः गुणाधिको नारायण एवेति स्थापयति **नैनास्य**--इत्यादिना । **महात्मनः** सर्वव्यापकस्य यद्वा महत्वं सकलगुणपूर्णत्वम् । गतिं न विन्दन्ति, आगतिं च कश्चिदपि नानुपश्यति अणोः खलु गत्यागती संभवतः। श्रौतनारायणविष्णुवासुदेवादिशब्दै स्सर्वव्यापकत्वादिभिश्च श्रुतिषु प्रख्यातस्यास्य गत्यागती कदापि न संभवत इति भावः । पूर्वोदाहृतश्रुतिभि स्सर्वसंयुक्तत्वेन प्रमिते नारायणे 'अप्राप्तयोस्तु या प्राप्ति स्सैव संयोग ईरितः, इति वैशेषिकपरिभाषा दयावद्भि जन्यवस्तुद्वयसंयोगविषयकतया रक्षणीयेति भावः । **ज्ञानात्मकाः** ज्ञानं–परावरतत्वविषयिणी बुद्धिः, आत्मा–स्वभावो येषान्ते । **संयमिनः** 'त्रयमेकत्र संयमः' इति पातञ्जलसूत्रोक्तप्रकारेण धारणाध्यानसमाधिमन्त इत्यर्थः । **महर्षयः** महामन्त्रद्रष्टारः । नित्यं पुरुषं गुणाधिकं पश्यन्तीति गुणाधिकं पुरुषं नित्यं पश्यन्तीति वा योजना । **पुरुषम्** 'तं त्वौपनिषदं पुरुषम्' (बृ. उ. ५-९-२६) इत्युपनिषत्तात्पर्यविषयत्वेनोक्तम्। 'स यत्पूर्वोऽस्मात्सर्वस्मात्सर्वान् पाप्मन औषत्' (बृ. उ. ३-४-१) 'स वा अयं सर्वासु पूर्षु पुरि शयः' (बृ. उ. ४–५–१८) इति सर्वजग-

त्कारणत्व सर्वपापदाहकत्व सर्वशरीरित्वानि पुरुषशब्द प्रवृत्तिनिमित्तानि प्रतिपादितानि । पुरुषशब्दार्थ एव ब्रह्म इत्युत्तरत्र 'विज्ञानमानन्दंब्रह्म रातिर्दातुः परायणम् । तिष्ठमानस्य तद्विदः' (बृ. उ. ५–९–२८) इत्यान्तिमश्रुतौ स्फुटम् । इह 'परायणम्' इत्यत्र नारायणशब्दार्थभूतं मुक्तिसाधनत्वं व्यक्तम् । इत्थं चोदाहृतश्रुतिपर्यालोचनायामुपनिषत्तात्पर्यविषयीभूतस्य पुरुषस्य निर्गुणत्वं न कथञ्चिदपि संभवतीति गुणाधिकत्वमेव श्रौतसिद्धान्त इति 'पुरुषं गुणाधिकम्' इति पदद्वयेन बोधितम् । स च ज्ञानादि गुणषट्कवान् वासुदेव एव । गुणाधिकम्—गुणैर्ज्ञानशक्त्यादिभिरधिकम् । नित्यं–निर्विकारं पश्यन्ति । तथा च श्वेताश्वतराः 'साक्षी चेता केवलो निर्गुणश्च' इत्यतप्राक् 'ज्ञः कालकालो गुणी सर्वविद्यः' 'परास्य शक्तिर्विविधैव श्रूयते' इत्यादिना सामान्यतो विशेषतश्च, 'साक्षी चेता केवलो निर्गुणश्च' इत्यनन्तरं 'एको वशी निष्क्रियाणां बहूनामेकं बीजं बहुधा यः करोति' 'नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्' 'ज्ञः कालकालो गुणी सर्वविद्यः' इत्येनेन विशेषतस्सामान्यतश्च 'निष्कलं निष्क्रियं शान्तम्' इत्यादिना अन्ते मोक्षोपायत्वसर्वकर्मदाहकत्व मुक्त्युपास्यज्ञानविषयत्वादिभिर्विशेषतश्च गुणैः प्रज्ञातं तत्वं 'तमीश्वराणां परमं महेश्वरं तं दैवतानां परमं च दैवतम् ।' इत्युद्घोषन्ति । 'न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते ।' इत्यनेन गुणैस्तत्समं तदधिकं वा परं तत्वं च प्रतिषेधन्ति । अत्र 'ईश्वरो हि जगत्स्रष्टा . . सगुणो निर्गुणोऽपि च' 'पश्यन्ति नित्यं पुरुषं गुणाधिकम्' इत्युपक्रमोपसंहाराभ्यां श्वेताश्वतरोपनिषत्तात्पर्यमुक्तरीत्या व्यासेन निर्धारितं भवति । अत्र गुणाधिकम्—इत्यनेन वेदान्तेषु यत्परं वस्तु प्रतीयते तत्र परत्वं गुणकृतमेव । तत्वतो गुणानङ्गीकारे तस्य परत्वमेव न स्यादिति बोधितम् । कूटस्थनित्यं परिणामानित्यमिति 'उपयन्नपयन् धर्मो विकरोति हि धर्मिणम्' इति पातञ्जलसाङ्ख्य परिभाषा चाप्रामाणिकीति भावः । अत एव आथर्वणा

अपि 'यत्तदद्रेश्यम्' इत्याद्युपक्रम्य 'नित्यं विभुं सर्वगतं सुसूक्ष्मं यद्भूतयोनिं परिपश्यन्ति धीराः' इत्यत्र भूतयोनित्वम् 'यथोर्णनाभिस्सृजते गृह्णते च' इत्यादिना परिणामिकारणत्वमेवेति प्रख्यापयन्ति। धर्मधर्मिणोरत्यन्तभेदस्य 'नारायणात्मको गन्धो भूमेश्श्रेष्ठतम स्स्मृतः' इत्यादिना पूर्वमेव व्यवस्थापनेन धर्मिण आगन्तुकधर्मसंबन्धस्य स्वरूपसंकोचविकासात्मकविकारापादकत्वं तु हास्यमेवेति।

एतेन 'महान् प्रभुर्वै पुरुषः' 'वेदाहमेतं पुरुषं महान्तम्' 'यस्मात्परं नापरमस्ति किञ्चित्' 'तेनेदं पूर्णं पुरुषेण सर्वम्' 'परात्परं पुरिशयं पुरुषमीक्षते' दिव्यो ह्यमूर्तः पुरुषः' 'अक्षरात्परतः परः' इत्यादौ पुरुषस्य परत्वं गुणनिबन्धनमेवेति बोधितम्। अयमर्थः उत्तरत्रापि 'तथा तं पुरुषं नित्यं व्याख्यास्यामि गुणाधिकम्' इत्यादि प्राक् (९३ पुटे) उदाहृतवचनसन्दर्भे स्फुटः।

वर्षायुतैर्यस्य गुणा न शक्या
वक्तुं समेतैरपि सर्वदेवैः।
महात्मनः शङ्खचक्रासिपाणे-
र्जिष्णो र्विष्णोर्वसुदेवात्मजस्य ॥

इति महाभारतपूर्ववचने निर्गुणपदस्य परिच्छिन्नगुणशून्य इत्यर्थोऽपि व्यक्तः। तदुक्तं विष्णुधर्मे—

सत्वादयो न सन्तीशे यत्र च प्राकृता गुणाः।
न हि तस्य गुणाः सर्वे सर्वैर्मुनिगणैरपि ॥
वक्तुं शक्या वियुक्तस्य सत्वाद्यैराखिलैर्गुणैः ॥ इति।

अत्र 'गुणाधिकः' इत्युपक्रम्य 'निर्गुण' इत्युक्त्या उपक्रमाधिकरणन्यायः, 'हित्वा गुणमयं सर्वम्' इत्यादिना 'सत्वादयो न सन्तीशे' इत्यादिना च उत्सर्गापवादन्यायश्च सूचितः।

हयशिर उपाख्याने 'गुणाधिकम्' इत्युपसंहारवचनेन 'प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः' (शा. सू, ३–२–२१) इति न्यायश्च सूचितः । अधिकमन्यत्र द्रष्टव्यम् । 'हित्वा गुणमयं सर्वं— एवं भवति निर्गुणः' 'तत्र यः परमात्मा हि स नित्यो निर्गुणस्मृतः । स हि नारायणोऽज्ञेयस्सर्वात्मा पुरुषो हि सः । इत्याद्यभिधाय उत्तरत्र 'इदं पुरुषसूक्तं हि सर्ववेदेषु पठ्यते' इत्युपक्रम्य 'चतुर्विभक्तः पुरुषस्स क्रीडति यथेच्छति' इत्युपसंहारेण पुरुषसूक्तस्यापि औपनिषदपुरुषनारायणपरत्वं वासुदेव सङ्कर्षणप्रद्युम्नानिरुद्धरूप चतुर्व्यूहपरत्वं च स्थापितम् । यथोक्तं पुरुषसंहितायाम्—

सहस्रशीर्षेत्यत्र सशब्दोऽनन्तवाचकः ।
अनन्तयोजनं प्राह दशाङ्गुलवचस्तथा ॥
तत्र प्रथमया विष्णोर्देशतो व्याप्तिरीरिता ।
द्वितीयया चास्य विष्णोः कालतो व्याप्तिरुच्यते ॥
विष्णोर्मोक्षप्रदत्वं च कथितं तु तृतीयया ।
एतावानिति मन्त्रेण वैभवं कथितं हरेः ॥
एतेनैव च मन्त्रेण चतुर्व्यूहो विभाषितः ।
त्रिपादित्यनया प्रोक्तमनिरुद्धस्य वैभवम् ॥
तस्माद्विराडित्यनया पादनारायणाद्धरेः ।
प्रकृतेः पुरुषस्यापि समुत्पत्तिः प्रदर्शिता ॥
यत्पुरुषेणेत्यनया सृष्टियज्ञस्समीरितः ।
सप्तास्यासन् परिधय स्समिधश्च समीरिताः ॥
तं यज्ञमिति मन्त्रेण सृष्टियज्ञस्समीरितः ।
अनेनैव च मन्त्रेण मोक्षश्च समुदीरितः ॥
तस्मादिति च मन्त्रेण जगत्सृष्टिस्समीरिता ।
वेदाहमिति मन्त्राभ्यां वैभवं कथितं हरेः ॥

यज्ञेनेत्युपसंहार स्सृष्टे मोक्षस्य चेरितः ।
य एवमेतज्जानाति स हि मुक्तो भवेदिति ॥ इति ।

मुद्गलोपनिषदि च ' पुरुषो नारायणो भूतं भव्यं भविष्यच्चासीत् । स च सर्वस्मान्महिम्नो ज्यायान् । तस्मान्नकोऽपि ज्यायान् । महापुरुष आत्मानं । चतुर्धा कृत्वा त्रिपादेन परमे व्योम्नि चासीत् । इतरेण चतुर्थेनानिरुद्धनारायणेन विश्वान्यासन् । स च पादनारायणो जगत्स्रष्टुं प्रकृतिं पुरुषं चाजनयत् । स समृद्धकायस्सन् सृष्टिकर्म न जज्ञिवान् । सोऽनिरुद्धनारायणस्तस्मै सृष्टिमुपादिशत् । ब्रह्मन् तवेन्द्रियाणि याजकानि ध्यात्वा कोशभूतं दृढग्रन्थि कलेवरं हविर्ध्यात्वा वसन्तकालमाज्यं ध्यात्वा ग्रीष्ममिध्मं ध्यात्वा इत्यादि ।

एवमेव शाण्डिल्य ब्राह्मणेऽपि ।

विष्णुधर्मोत्तरे च शङ्करगीतासु—

भगवान्वासुदेवस्तु देवस्सङ्कर्षणस्तथा ।
प्रद्युम्नश्चानिरुद्धश्च प्रभावोऽयमुदाहृतः । (१-६३-३४)

इत्युपक्रम्य—

तदेतत्पठ्यते सूक्ते पौरुषे द्विजसत्तम ।
पादोऽस्य विश्वभूतानि त्रिपादस्यामृतं दिवि ॥ इति ।

वैकुण्ठसंहितायां च—

सचादिपुरुषो विष्णुस्सर्वव्यापी सनातनः ।
शरीरात्स्वाज्जगत्त्रातुं सङ्कर्षणमभावयत् ॥
स च सङ्कर्षणो देवः प्रद्युम्नं समभावयत् ।
स च प्रद्युम्नसंज्ञस्सन्ननिरुद्धमभावयत् ॥
तस्माद्ब्रह्मा समुत्पन्नो जगत्स्रष्टुं चराचरम् ।
एवं चतुर्धा संव्यूह्य स्वात्मानं पुरुषोत्तमः ॥

अण्डेभ्यः परतो नित्यं त्रिपादेन विराजते ।
जगत्सृष्ट्यादिकर्माणि कर्तुकाम स्स्वलीलया ॥ इति ।

न च ज्योतिरधिकरणश्रुतप्रकाशिकायां भोग्यभोगोपकरणभोगस्थानैः मुक्तनित्य नित्यसिद्धैर्वा त्रिपात्त्वोक्तिविरोध इति वाच्यम् । तत्र सङ्कर्षणप्रद्युम्नानिरुद्धाभिमन्यमानानां भोग्यभोगोपकरणभोगस्थानानामभिप्रेतत्वेनाविरोधात् । यद्यप्यभिमानिसङ्कर्षणादिप्राधान्यमेव वक्तुमुचितम्, तथापि 'पादोऽस्य विश्वा भूतानि' इत्यनेन पूर्वं भूतैरेकपात्त्वोक्ते स्तदनुरोधेन त्रिपात्त्वमभिमन्यमानप्राधान्येनाभिहितमिति बोध्यम् ।

ऋग्वेदिनां मुद्गलोपनिषदि अनिरुद्धनारायणवाक्ये 'मां हविर्भुजं ध्यात्वा' इत्यत्र अस्मच्छब्दार्थोऽनिरुद्धो हयशिरोधर एव विवक्षितः । पूर्वोदाहृतभारतवचनेषु अनिरुद्धस्य हयशिरोधरस्यैव चतुर्मुखसर्गौपयिकज्ञानोपदेशादिप्रतीतेः । शान्तिकमलाकरोदाहृतमहार्णवऋग्विधानवचनेषु 'यत्पुरुषेण हविषा' इति पुरुषसूक्तमन्त्रेण हयशिरोध्यानस्य स्फुटत्वाच्च ।

दद्यात्पुरुषसूक्तेन यः पुष्पाञ्जलिमेव वा ।
अर्चितं तेन वै सर्वं त्रैलोक्यं सचराचरम् ॥

इत्युपक्रम्य—

षष्ठ्याऽनलस्य मध्ये तु कल्पयेत्पद्ममासनम् ।
चिन्तयेत्तत्र देवेशं कालानलसमप्रभम् ॥
विवृत्तास्यं वाहशीर्षं रक्तास्यं रक्तलोचनम् ॥ इति ॥
एवं हुत्वा ततश्चैवमनुज्ञाप्य यथाक्रमम् ।
अग्नेर्भगवतस्तस्य समीपे स्तोत्रमुच्चरेत् ॥
जितं ते पुण्डरीकाक्ष नमस्ते विश्वभावन ।
नमस्तेऽस्तु हृषीकेश महापुरुष पूर्वज ॥

इत्युपक्रम्य—

इत्येवमनया स्तुत्या स्तुत्वा देवं दिने दिने ।

किङ्करोऽस्मीति चात्मानं देवायैवं निवेदयेत् ॥

इति जितन्ता स्तोत्रमपि तत्रोक्तम् ।

अत्रत्यः 'जितं ते पुण्डरीकाक्ष' इति प्रथमः श्लोकः नारायणाख्याने—

'इति शब्दः श्रुतोऽस्माभिः शिक्षास्वरसमन्वितः' इति श्वेतद्वीपे नारदेन श्रुत इत्युक्तम् । तदर्थश्चाहिर्बुध्न्यसंहितायां (५३ अ.) व्यक्तः । जितन्तास्तोत्रं च ऋग्वेदाखिलमिति कृष्णपादैरुक्तम् । एतदाशयश्च (४७) पूर्वमेवोक्तः ॥

वस्तुतस्तु 'जितन्तेपुण्डरीकाक्ष' इत्यादेः ऋग्वेद खिलत्वे बह्वृचानां संप्रतिपत्तिर्नास्ति। 'जितन्ते' इति मन्त्रं प्रस्तुत्य 'एकस्तत्र श्रुतोऽस्माभिः शिक्षाक्षरसमन्वितः।' इत्युक्तिरपि 'जितन्ते' इत्यादेर्वेदतां बोधयितुं नालम् । पाणिनीयशिक्षाया वेदासाधारण्यविरहेण अत्रत्यशिक्षापदार्थस्य वेदासाधारण्यविरहेऽप्युपपत्तेः । 'स्वर्णघर्मानुवाकेन तथा पुरुषविद्यया' इत्यादिप्रागुदाहृत श्री भागवतवचने वेदवाक्य साहचर्यमात्रेण पुरुषविद्यापदार्थभूतं जितन्तास्तोत्रं न वेदान्तर्गतमिति निश्चेतुं शक्यते। तत्पूर्वश्लोके 'उभाभ्यां वेदतन्त्राभ्याम्' इत्यनेन वेदपञ्चरात्रयोरुभयोरपि भगवदाराधनकरणत्वोक्त्या जितन्ता स्तोत्रस्य पञ्चरात्रान्तर्गतत्वेन पुरुषविद्याव्यतिरिक्तस्यैतच्छ्लोके पञ्चरात्रान्तर्गतस्य कस्याप्यभावेन पुरुषविद्यापदार्थस्य जितन्तास्तोत्रस्य पञ्चरात्रान्तर्गतस्यैव तत्राभिप्रेतत्वात् । उपलभ्यते च विष्वक्सेनसंहितायां जितन्तास्तुतिः । लोकेऽपि पञ्चरात्रान्तर्गतत्वेन प्रसिद्धिश्च विद्यते। अत एव वेदार्थसङ्ग्रहे भगवता परमात्मनः सर्वशब्दवाच्यत्वं श्रुतिभिः प्रसाध्योपबृंहणैस्तत्साधनावसरे 'तथा च पौराणिकानि वचांसि' इत्युपक्रम्य विष्णुपुराणसहभावेन 'कार्याणां कारणं पूर्वं वचसां वाच्यमुत्तमम्' इति जितन्तास्तुत्यन्तर्गतवचनखण्डं "वेदैश्च सर्वैरहमेव वेद्यः' इति गीतावचनं चोदाहृत्य 'इत्यादीनि हि सर्वाणि वचांसि सशरीरात्मविशिष्टमन्तर्यामिणमाचक्षते' इत्युक्तिः सङ्गच्छते।

तथा च 'पौराणिकानि वचांसि' इति वाक्यं 'स्मृतिवचनं दर्शयति तथा चेति' इत्यवतारितम् । 'स्मृतिपुराणयोरपि' इति जिज्ञासाधिकरण श्रीभाष्यवाक्ये स्मृतिपुराणयोर्भेदः प्रतीयत इव । तत्रापि स्मृतिस्सामान्यं, पुराणं च विशेषः । गोबलीवर्दशब्दवदुभयोर्निर्देशः इत्यनेन निर्धारितं भवति । स्मृत्यधिकरणे 'अन्यस्मृत्यनवकाशदोषप्रसङ्गात्' इत्यत्र स्मृतिशब्दे धर्मशास्त्रेतिहासपुराणत्रयस्यापि विवक्षितत्वमभिप्रेत्य भगवता त्रितयवचनानामुदाहरणेन अत्रापि पौराणिकवचांसीति धर्मशास्त्रेतिहासवचसामुपलक्षकः स्मृतिसामान्यपर इति व्यासार्याणामाशयः । देवताधिकरण श्रीभाष्ये 'संकीर्णब्राह्मणमन्त्रार्थवादमूलेषु धर्मशास्त्रेतिहासपुराणेषु' इत्युक्तम् । पञ्चरात्राधिकरण श्रीभाष्ये च 'अतस्स भगवान्वेदवेद्यः परब्रह्माभिधानो वासुदेवः' इत्युपक्रम्य 'स्वस्वरूपस्वविभूतिस्वाराधन तत्फलयाथात्म्यवेदिनो वेदान् — विध्यर्थवादमन्त्ररूपान् स्वेतरसकलसुरनरदुरवगाहांश्चावधार्य तदर्थयाथात्म्यावबोधिपञ्चरात्रशास्त्रं स्वयमेव निरमिमीत, इत्युक्तम् । एतेन पञ्चरात्रस्य वेदोपबृंहणत्वं सिद्धम् । अत्र श्रीभाष्ये उदाहृतस्य 'भविष्यति प्रमाणं वा एतदेवानुशासनम्' इति वचनस्यानन्तरं 'अस्मात्प्रवक्ष्यते धर्मान्मनुः स्वायम्भुवः स्वयम्, इति वचनं व्यासार्यैरुदाहृतम् । एतेन पञ्चरात्रस्य धर्मशास्त्रत्वं सिद्धम् । एवं च पञ्चरात्रमपीतिहासपुराणवद्धर्मशास्त्रत्वेन स्मृतिरेवेति व्यासार्याणामाशयः स्फुटः । न्यायपरिशुद्धौ च स्मृतित्रैविध्यं धर्मशास्त्रेतिहासपुराणभेदेनाभिधाय पञ्चरात्रस्य धर्मशास्त्रत्वेन स्मृतित्वमाचार्यपादैरभिहितमिति, भाट्टदीपिकाव्याख्यायां खण्डदेवशिष्येण शम्भुभट्टेनापि पञ्चरात्रस्य धर्मशास्त्रत्वमुक्तमिति च पूर्व (११२) मेव निरूपितम् । शान्तिकमलाकरोदाहृतमहार्णवऋग्विधानवचनेषु पुरुषसूक्तहोमानन्तरं 'जितन्ते पुण्डरीकाक्ष' इत्यादिनोपस्थानोक्तिः, ऋग्वेदपाठपठितं व्रतमेतत्सुदुश्चरम्' इति नारायणाख्यानवचने पाञ्चरात्रिकव्रतस्य ऋग्वेदपाठपठितत्वोक्त्या ऋग्वेदपञ्चरात्र सौहार्दसिध्या ऋग्वेदकर्मणि पञ्च-

रात्रान्तर्गत जितंतेस्तुतेः उपस्थानमन्त्रत्वेप्युपपद्यत इति बोध्यम् । अतः जितन्तास्तोत्रं पञ्चरात्रान्तर्गतमित्येव श्रीभाष्यकारादीनामाशयः । पुरुषसूक्त-प्राथमिकमन्त्रचतुष्टयस्य वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धपरत्वमहिर्बुध्न्येन एकोन षष्टितमेऽध्याये स्पष्टमभिहितम् । एवमन्यान्यपि पुरुषसूक्तस्य भगवत्परत्व-निर्णायकानि श्रीमदाचार्यप्रबन्धे द्रष्टव्यानि । इत्थं च पुरुषसूक्तस्योपाख्या-नोपक्रमोक्त भगवच्छब्दवाच्यौपानिषदपुरुषपरतया तदवतारहयशिरःपरत्व-स्यापि निर्बाधतया पुरुषमेधार्थवादवाक्यस्य नारायणाख्यकर्मपरवश ऋषि-विषयत्वं सर्वैरप्यास्थेयमेवेतिबोध्यम् ।

अत्र चोपाख्याने—

ईश्वरो हि जगत्स्रष्टा प्रभुर्नारायणो विराट् ।
भूतान्तरात्मा वरदस्सगुणो निर्गुणोऽपि च ॥

इत्युपक्रमेण —

तत्वं जिज्ञासमानानां हेतुभिस्सर्वतो मुखैः ।
तत्वमेको महायोगी हरिर्नारायणः प्रभुः ॥

इति जनकयाज्ञवल्क्यसंवादाद्युक्तार्थसङ्ग्रहरूपोपसंहारेण 'अयं हि नित्यः परमः' 'पश्यन्ति नित्यं पुरुषं गुणाधिकम्' इत्युपाख्यानोपसंहारेण च श्रुतिषु ईश्वरशब्दार्थो नारायणः अन्तः प्रविश्य नियन्ता स एव जगतस्स्रष्टृत्वेन पिता, अन्तर्यामित्वेन सुलभः दयावान्, जीवानामन्तः प्रविश्य नियन्तृतया स्थितत्वेनैक्यव्यपदेशार्हः, जीवानां निरतिशयप्रीतिविषयः । स एव मुक्तिप्रदाता औपनिषदः पुरुषः सर्ववेदपठितसर्ववेदश्रेष्ठपुरुषसूक्तप्रतिपाद्यः निर्गुणश्रुतिसमनन्तरश्रुतिषु नित्यतया गुणाधिकत्वेन निरतिशयभक्तिविषय-त्वेन मुक्तिसाधनत्वेन च प्रतीयमानः श्रीविशिष्टः एकं परमं तत्वमिति निर्णीतम् । 'किं तदुत्पादितं पूर्वं हरिणा लोकधारिणा' इत्युपाख्यानोपक्रमे 'हरिर्नारायणः प्रभुः' इत्यत्र च हरिशब्दप्रयोगेण अन्ते पुरुषशब्दप्रयोगेण च हरिशब्दघटितयोः पुरुषसूक्तपूर्वोत्तरानुवाकयोः पुरुषसूक्तैकार्थ्यस्य 'सवा

अयं पुरुषः सर्वासु पूर्षु पुरिशयः' 'युक्ता ह्यस्य हरयः शता दश' (बृ. ४–५–१९) इति बृहदारण्यकैकार्थ्यस्य च बोधनेन औपनिषदपुरुषानिरुद्धाभिन्न वासुदेवावतारभूतहरिः हयशिराः परं तत्त्वमिति निर्धारणेन गुणाधिकः पुरुषः स इति सिद्धम्। एवं 'तम एवाभवत्सर्वं न प्राज्ञायत किञ्चन' इत्यत्र 'नासदासीत्' इत्यादिसूक्ते 'कस्य शर्मन्' 'तमसा गूढमग्रे प्रकेतम्' इति श्रुतितात्पर्यविषयस्य प्रळयकाले चेतनानां ज्ञानसुखविरहस्याभिधानपूर्वकं 'जग्राह वेदानखिलान् रसातलगतान् हरिः। प्रादाच्च ब्रह्मणे भूयस्ततः स्वां प्रकृतिं गतः'। ५७ 'दत्वा पितामहायाग्र्यां मतिं लोकविसर्गिकीम्। तत्रैवान्तर्दधे देवो यत एवागतो हरिः १७२)'' इत्यत्र यदा च सुरकार्यं तेऽविषह्यं भविष्यति। प्रादुर्भावं गमिष्यामि तदात्मज्ञानदेशिकः (ना. आ.) इत्यत्र च 'सतो बन्धुमसति निरविन्दन्। हृदि प्रतीष्या कवयो मनीषा। 'प्रातरग्निम्' 'स छन्दोभिरात्मानं समदधात्' (ऐ. आ. २–१२) आदिद्गन्धर्वो अभवद्द्वितीयः' यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै' इत्यादि तात्पर्यविषयस्य ज्ञानोपदेशार्थहयग्रीवावतारस्य प्रतिपादनेन गुणाधिकः पुरुषो हयशिरा इति सिद्ध्यतीति न तामसजनदुरुत्प्रेक्षालेशोऽपीति सर्वं समञ्जसम्॥

इति श्री लक्ष्मीहयग्रीव दिव्यपादुकासेवक श्रीमदभिनवरङ्गनाथब्रह्मतन्त्रपरकालमहादेशिक कृतिषु हयशिरोरत्नभूषण दीधितिः (शालिवाहनशके १८५१ तमे विभववर्षे श्रावणमासे) समाप्ता.

---

॥ श्रीः ॥

॥ श्रीलक्ष्मीहयवदनपरब्रह्मणे नमः ॥

॥ श्रीमते श्रीकृष्णब्रह्मतन्त्रपरकालयतीन्द्रमहादेशिकाय नमः ॥

श्रीमन्महाभारतशान्तिपर्वमोक्षधर्मनारायणाख्यानस्थ हयशिर उपाख्यानस्य व्याख्याने हयशिरोरत्नभूषणे, तद्विवरणदीधितौ च परिशीलितानां श्रुतीनामर्थस्य संग्राहकं

# श्रीलक्ष्मीहयवदनरत्नमालास्तोत्रम्

———

वागीशाख्या श्रुतिस्मृत्युदितशुभतनोर्वासुदेवस्य मूर्तिः
ज्ञाता यद्वागुपज्ञं भुवि मनुजवरैर्वाजिवक्त्रप्रसादात् ।
प्रख्याताश्चर्यशक्तिः कविकथकहरिः सर्वतन्त्रस्वतन्त्रः
त्रय्यन्ताचार्यनामा मम हृदि सततं देशिकेन्द्रः स इन्धाम् ॥ १

सत्वस्थं नाभिपद्मे विधिमथ दितिजं राजसं तामसं चा-
ऽब्जिन्द्वोरुत्पाद्य ताभ्यामपहृतमखिलं वेदमादाय धात्रे ।
दत्त्वा द्राक्तौ च हत्वा वरगणमदिशद्वेधसे सत्र आदौ
तन्त्रं चोपादिशद्यस्स मम हयशिरा मानसे सन्निधत्ताम् ॥ २

अध्यास्तेऽङ्कं परावाग् वरहयशिरसो भर्तुराचार्यके या
वाञ्छावानैतरेयोपनिषदि चरमात्प्राक्तने खण्ड आदौ ।
यस्या वीणां च दैवीं मनसि विनिदधत्ख्यातिमेत्यन्त्यमन्त्रे
सेशाना सर्ववाचो मम हृदयगता चारु मां वादयेद्वाक् ॥ ३

कृष्णं विप्रा यमेकं विदुरपि बहुधा वेदयो (रैतरेये) रादिमान्ते
स्रष्टा विस्रंसमानस्स्वमथ समदधाच्छन्दसां येन दानात् ।
कृष्णं विष्णुं च जिष्णुं कलयितुरपि यत्संहितामायुरुक्तं
वाक्श्लिष्टं प्राणमेनं हयमुखमनुसन्दध्महे किं वृथाऽन्यैः ॥ ४

